॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

३५

॥ श्रीः ॥

# परिष्कारदर्पणः

शास्त्रार्थकलासहितः।







वैयाकरणशिरोमणि—
शुक्ल श्री वेणीमाधवशास्त्री।

THE
HARIDAS SANSKRIT SERIES
35



THE
# Paris'kāra Darpaṇa

*With*

## S'ĀSTRĀRTHA KALĀ

*By*

VAIYĀKARAṆA S'IROMAṆĪ
*Pandit S'ri Veṇimadhava S'ukla*

*Edited with Notes etc,*
By
*Pandit S'ri Rāja Nārayaṇa S'ukla*

PUBLISHED BY
JAI KRISHNADAS-HARIDAS GUPTA
*The Chowkhamba Sanskrit Series Office.*
*Benares City.*

1934.

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

३५

॥ श्रीः ॥

# परिष्कारदर्पणः

## ( शास्त्रार्थकलासहितः )

स्वर्गीयविश्वविख्यातशास्त्रार्थिमहामहोपाध्यायपण्डितवरश्रीजयदेवमिश्रप्रधानशिष्य-
कौमुदीकल्पलतिकाद्यनेकग्रन्थकृद्घटिकाशतकशतावधानाशुकविवैयाकरण-
शिरोमण्याद्यनेकपदवीकायोध्याकाशीप्रयागतीर्थत्रयमध्यभूमि-जौनपुर-
मण्डलान्तर्गतवदलापुर उदयपुरगेल्हवाभिजन—

शुक्लश्रीवेणीमाधवशास्त्रिणा

विरचितः ।

शुक्लश्रीराजनारायणशास्त्रिणा उपयुक्तटिप्पणीभिः
परिष्कृत्य संशोधनपुरस्सरं सम्पादितश्च ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

१९९१

# विनिवेदनम्—

अये सुरभारतीसुधासेवनसंसक्तसंस्कृतस्वान्ताः सम्पादितसकलकलिकालकवलितमानवशास्त्रार्थ-सदाचारप्रतिष्ठाः प्रख्यातवैदुष्या गरीयांसो विद्वन्मणयः, एवम् भाविभव्यभारतभूकमलदिवाकराः अहर्निशं देववाग्व्यवसायचर्चितशान्तचञ्चलायमानचेतसः परिश्रमशालिनश्शास्त्रतत्त्वानुसन्धित्सवः सोत्साहा नवयौवनाश्छात्रबन्धवश्च !

इदन्तावत् नाविदितचरं समेषां श्रीमतां यत् न्यायवैशेषिकसांख्ययोगमीमांसावेदान्तषट्शास्त्रप्रणेतॄणां गौतमकणादकपिलपतञ्जलिजैमिनिव्यासानाम् महर्षिपुङ्गवानां नास्तिकचार्वाकादिसिद्धान्तखण्डनपुरस्सरं पारस्परिकखण्डनमण्डनादिद्वारा सूक्ष्मप्रज्ञाप्रवर्द्धकम् सनातनसिद्धान्तभित्त्युपगम् दर्शनशास्त्रादिव्यवस्थापनपूर्वकं शास्त्रार्थाङ्कुरारोपणम्, विस्पष्टतरञ्च विशिष्टाद्वैतवादिवैष्णवमतप्रवर्त्तकश्रीमद्रामानुजाचार्याणाम् महीयसान्तथाऽद्वैतमतसंस्थापकसनातनधर्ममूलभूतभगवत्पादश्री १००८ शङ्कराचार्यवर्य्याणामपि समये परस्परम् नास्तिकादिवृन्दान् प्रति च सुव्यवस्थया शास्त्रार्थप्रचारो विलक्षण आसीदिति। श्रीराजकुलतिलकायमानश्रीविद्वन्मानवधर्मविक्रमादित्यशालिवाहनभोजदेवकालेऽपि विद्वद्धौरेयाणाम् विचित्रतरश्शास्त्रार्थप्रबन्धोऽनुभूयते। तदानीन्तनानाममीषां जीवनचरितावलोकनेन वृद्धदन्तकथाभिश्च।

जाते जगति वाल्मीकौ कविरित्यभवत् पदम्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥ १ ॥

इत्यादिपुरातनश्रुत्या ज्ञायते तदाऽपि शङ्कासमाधानरूपशास्त्रार्थतरङ्गोन्मज्जनम्। परमादरणीयश्रीमण्डनमिश्रसमयेऽपि तैस्साकमन्यैश्च विशिष्टा शास्त्रार्थगोष्ठी "ताम्बूलद्वयमासनञ्च लभते यःकान्यकुब्जेश्वरात्" इत्यादिवचोऽनुसारेण महाकविकीरदेवश्रीश्रीहर्षसमयेऽपि कान्यकुब्जराजसभायां शास्त्रार्थविजयपराजयसमीक्षया पारितोषिकादिप्रदानं सर्वत्र विख्यातम्। नवद्वीपादिमान्यस्थलीयपण्डितप्रवरैस्साकं वाराणसेयविद्वद्दलानां केषाञ्चन महानुभावानां शास्त्रार्थसमये विजयेच्छयोभयपक्षतःसरस्वत्युपासना विशिष्टेत्यपि श्रूयतेऽद्यावधि। काशिकपण्डितप्रवराणां श्रीराजारामशास्त्रिणाम् पण्डितराजश्रीजगन्नाथशास्त्रिणां श्रीबालशास्त्रिणां अस्माकसरयूपारीणब्राह्मणवंशावतंसभारतमार्त्तण्डाद्युपाधिभाजां विश्वप्रसिद्धाभिधेयानां श्रीमतां शिवकुमारशास्त्रिमिश्राणां गुरुदेवनिरूप-

मश्रीद्महामहोपाध्यायपण्डितवरजयदेवमिश्रशास्त्रिणां शास्त्रार्थप्रवन्धग्रन्थनिर्माणादिना विख्यातजगद्यशसां समये विशेषरूपेण शङ्कासमाधानादिविशिष्टशास्त्रार्थप्रवाहेण सपरिष्कृततत्तद्ग्रन्थोद्धरणमद्यापि समुत्साहयितुमलमस्मान् । तस्माद् शास्त्रार्थशैलीयं सनातनी नचाधुनिकीति नात्र विशयो विधेयः । आधुनिकपरीक्षापद्धत्यनुसारिणां ब्रह्मचर्य्यप्राणायामादिनियमत्यागपुरस्सरालस्यादिदोषविलसितानामिदानींन्तनानां याथातथ्येन पूर्ववच्छास्त्रार्थविषये प्रवृत्तिर्न भवति । विशेषतश्शब्दशास्त्रीयसिद्धान्ताश्चास्तप्राया इव विभान्ति, शास्त्रार्थशैली सत्यपि यथोत्तरन्न्यूनत्वरैव सम्पद्यत इत्येतत्कलिकौतुकमवलोक्य प्रसिद्धचौखम्बा-बनारस-काशी-हरिदास-संस्कृतग्रन्थमालाध्यक्षमहोदयेन शास्त्रार्थप्रवृत्तिजनककल्पनादिविशिष्टविचित्रनूतनग्रन्थनिर्माणाय बहुशःसम्प्रार्थिता अनेककार्य्यासक्ता अपि स्वर्गीयमैथिलवंशोद्भवपरिभापेन्दुशेखरविजयान्युत्पत्तिवादजयाशास्त्रार्थरत्नावल्याद्यनेकग्रंथविधातृणाम् महामहोपाध्यायश्रीजयदेवमिश्रशास्त्रिणाम् प्रधानशिष्याः काशीप्रयागायोध्याभिधतीर्थत्रयत्रिकोणयन्त्रसन्निभमध्यभूमिजौनपुरवदलापुरउदयपुरगेल्हवाभिजनाः सरयूपारीणशुक्लवंशावतंसाः घटिकाशतकशतावधानाशुकविवैयाकरणशिरोमण्याद्यनेकपदवीभृतो हिंसाखण्डनकौमुद्याद्यनेकग्रन्थकारा अस्मत्तातचरणाः श्रीवेणीमाधवशास्त्रिणः पूर्वं कौमुदीकल्पलतिकाभिधं ग्रन्थरत्नं निर्माय विशेषतःपरिष्कारमात्रबोधकं परिष्कारदर्पणाख्यं ग्रन्थममुं विरच्य बहूपकृतवन्तः । अद्यावधि प्रकाशितानाम् नैकोऽपि ग्रन्थःपरिष्कारपथप्रदर्शको विशिष्टयोजनयाऽल्पीयसा कालेनैव परिष्कारविशिष्टबोधप्रद आसीदित्ययं सर्वगुणसम्पन्नोऽद्वितीय एव भवतां दृष्टिपथं गच्छति । ग्रन्थकृताद्वितीयपुत्रेण मया कौमुदीकल्पलतिकावत् विचित्रटिप्पणीभिर्यथामति परिष्कृत्य अयमपि ग्रन्थःसंशोधनपुरस्सरं सम्पाद्य श्रीमतां सेवासूपस्थाप्यते । इत्थं सपरिश्रमं यथामति संशोधितेऽपि ग्रन्थेऽत्र नैव सर्वथा स्खलितानामभावः । अतोऽभ्यर्थ्यन्ते गुणैकपक्षपातिनो मनीषिणो यदत्र संशोधकदृष्टिदोषेण मुद्रणादिदोषेण वा जातानि स्खलितानि संक्षम्य अवश्यं सूचयिष्यन्ति माम् तत्तत्त्रुटीनां द्वितीयसंस्करणे संशोधनायेति वारम्वारमाशास्य सम्प्रार्थ्य च शान्तिमधिगतस्य भवताम्,

विदुषामाश्रवस्य—

**श्रीराजनारायणशुक्लस्य**

[ एतद्ग्रन्थसम्पादकस्य ].



महानुभावा इमे कौमुदीकल्पलतिकाद्यनेकग्रन्थकृतो घटिकाशतकशतावधा-
नाशुकविवैयाकरणशिरोमण्याद्यनेकोपाधिभाजः सुप्रसिद्धाभिधेयाः—

**शुक्ल श्रीवेणीमाधवशास्त्रिणः**



## समर्पणम्

यस्यास्ते किल वामभागविलसच्छ्रीपार्वती पर्वता,
ज्जाता सर्वसुखप्रदा भगवती भागीरथी श्रीमती ।
यस्यास्ते शुभदा शिखासु भगवाँश्चन्द्रो ललाटेऽमले,
तस्यैवं भगवच्छिवस्य पदयोः स्यात् सन्ततं मे नतिः ॥१॥
श्रीमत्पूज्यपदारविन्दयुगलं ध्यात्वा गुरूणामथ,
श्रीमत्पितृपदे सरोजसदृशे नत्वा कृपाकारणे ।
श्रीमन्निर्मितपुस्तकं वहुविधाभिष्टिप्पणीभिर्युतम् ,
सम्पाद्यैव समर्पये भगवतोः पादाब्जयोः पुष्पवत् ॥ २ ॥
ग्रन्थकर्त्तुर्द्वितीयश्श्रीराजनारायणस्सुतः ।
शुभाशीर्वचनाकाङ्क्षी भवतां करुणाकृताम् ॥ ३ ॥

इति ।

# परिष्कारदर्पणमूलविषयाणां सूची ।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| मङ्गलवादः | १—२ |
| विषयताविषयितापदार्थविचारः | ३ |
| अनुयोगिताप्रतियोगितापदार्थौ | ४—५ |
| निर्विकल्पकादिज्ञाननिरूपणम् | ६ |
| समूहालम्बनत्वम् | ७ |
| विशेषसम्बन्धनिरूपणम् | ८—९ |
| विशेष्यताप्रकारताभेदनिरूपणम् | १०—११ |
| अवच्छिन्नत्वञ्च | १२ |
| अवच्छेदकत्वञ्च | १३—१५ |
| ज्ञानसत्वाङ्गीकारनिरूपणम् | १६ |
| देवदत्तो गृहंगच्छति शाब्दबोधः | १६-१७ |
| नीलो घटः ( शाब्दबोधः ) | १८ |
| सम्बन्धावच्छिन्नत्वं प्रकारतायामुत विशेष्यतायाम् | २१ |
| निरूपितत्वम् | २२ |
| निरूप्यनिरूपकभावप्रयोजनम् | २२—२३ |
| समासघटकनञो भेदवति लक्षणा | २४-२७ |
| घटवद्भूतलम्, घटाभाववद्भूतलं शाब्दबोधः | २८—२९ |
| घटो नास्ति भूतले | ३०—३१ |
| वस्तुतस्तु भूतले घटः | ३२—३३ |
| घटो नास्ति भूतले विशिष्टप्रकारः | ३४ |
| वाक्यद्वैविध्यम् | ३५ |
| अवच्छेद्यावच्छेदकभावसम्बन्धविचारः | ३६ |
| निरूप्यनिरूपकभावस्थितिः, वृत्त्यनियामकसम्बन्धस्य कथं नाभावप्रतियोगितावच्छेदकत्वम् | ३७ |
| अप्रसिद्धप्रतियोगिकाभावनिरूपणम् | ३८ |
| एकत्वमेकशब्दस्य | ३९ |
| प्रकारताविशेष्यतालक्षणम् | ४० |
| पदार्थत्वलक्षणम् | ४१ |
| प्रकारितालक्षणम् | ४२ |
| जनकत्वम् | ४३ |
| केवलान्वयित्वम् | ,, |
| प्रागभावत्वम् | ,, |
| तादात्म्यम् | ४४ |
| पृच्छार्थः | ४५ |
| प्रश्नत्वञ्च | ४६ |
| समानाधिकरणत्वम् | ४७ |
| समानाकारकत्वम् | ४७ |
| प्रकृत्यर्थत्वम् | ,, |
| विशेष्यतावच्छेदकावच्छिन्नत्वम् | ४८ |
| स्वावच्छेदकावच्छिन्नत्वम् | ,, |
| शाब्दबोधकारणनिरूपणम् | ४८-५२ |
| स्वानवच्छेदकानवच्छिन्नत्वम् | ५३ |
| आनुपूर्वीत्वम् | ,, |
| सम्बन्धविचारः | ५४ |
| परिष्कारकसम्बन्धज्ञानम् | ५५-५६ |
| तत्पुरुषलक्षणम् | ५७ |
| कर्मधारयलक्षणम् | ५८ |
| कारकत्वम् | ५९-६० |
| षड्विधसङ्गतिनिरूपणम् | ६१ |
| घटकत्वम्, घटितत्वम्, चक्रकत्वम्, उपक्रमत्वम् | ६२ |
| उपसंहारत्वम्, उपसर्गत्वम् | ६३ |
| एकमात्रवृत्तित्वञ्च | ६४ |
| करणत्वञ्च | ६५-६६ |
| कर्तृत्वञ्च | ६७-६८ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| कर्मत्वम् | ६९ |
| शक्यतावच्छेदक-वृत्तिनियामकत्व-वृत्त्यनियामकत्व, प्रतिबन्ध्यतावादाः | ७० |
| प्रतिबन्धकत्वविचारः | ७१ |
| व्याप्यवृत्तित्व, अव्याप्यवृत्तित्व, संशयवादः | ७२ |
| सम्बन्धावच्छिन्नाः के, कार्यतावच्छेदकधर्मश्च | ७३ |
| लक्ष्यतावच्छेदकधर्म, केवलान्वयित्व, साध्यतावच्छेदक, व्याप्यतावच्छेदकधर्माणां विचारः | ७४ |
| लक्षणत्वम् | ७६ |
| अभाव-अन्यतमत्व-उत्तेजकत्व-तद्घटकत्व-तद्घटितत्व-भावस्वरूपाभावपदार्थ-मङ्गलभेदनिरूपणम् | ७७ |
| शाब्दबोधविशिष्टसामग्री | ७७–८२ |
| वर्णोत्कारः | ८२–८४ |
| लणसूत्रेऽकारश्च | ८४–९० |
| उपदेश आद्योच्चारणम् | ९०–९१ |
| तुल्यास्यप्रयत्नं सव० | ९१–९३ |
| भूवादयो धातवः | ९४–९६ |
| अणुदित्सवर्णस्य | ९६–९८ |
| नवेति विभाषा | ९८–९९ |
| हलोऽनन्तराः | ९९ |
| विरामोऽवसानम् | १०० |
| तपरस्तत्कालस्य | १०१ |
| इको गुणवृद्धी | १०२–१०४ |
| सुद्वयुपास्यः | १०५–१०६ |
| स्थानेऽन्तरतमः | १०६–११० |
| त्रिसूत्रीखण्डनम् | १११–११४ |
| अचः परस्मिन् | ११४–११७ |
| उपसर्गादिति धातौ ( शाब्दबोधः ) | ११८ |
| अकस्सवर्णे दीर्घः ( शाब्दबोधः ) | ११९ |
| खब सानयोर्विसर्जनीयः ( „ ) | १२० |
| इकोऽसवर्णे शाकल्यस्य ( „ ) | १२०–१२१ |
| मय उञो वो वा ( „ ) | १२१–१२२ |
| न पदान्ता ेरनाम् ( „ ) | १२२ |
| खरि च ( „ ) | १२३ |
| ङमो ह्रस्वात्–उत्तरपदत्वे इति | १२३–१२६ |
| अतो रोरप्लुतात् (शाब्दबोधः) | १२६–१२७ |
| अन्तादिवच्च | १२८ |
| एतत्तदोः सुलोपः | १२८–१२९ |
| अर्थवत्सूत्रविचारः | १३०–१३४ |
| वृत्तिमत्त्वरूपाथवत्त्वखण्डनम् | १३४–१३८ |
| एतत्संज्ञाफलभूतेति | १३८–१४२ |
| अर्थवत्सूत्रोभयाभावः | १४२–१४६ |
| कृत्तद्धितेतिविशिष्टो विचारः | १४६–१५२ |
| स्वातन्त्र्येण प्रयोगार्हत्वम् | १५२ |
| सरूपाणाम् ( शा० बो० ) | १५३–१५४ |
| सुपि च ( शा० बो० ) | १५४–१५५ |
| रषाभ्यान्नोणस्समानपदे (शा.) | १५५–१५७ |
| प्रत्ययलोपे | १५७–१५९ |
| शेषोव्यसखि परिस्कृतोऽर्थः | १५९–१६० |
| शयो हलि ( शा० बो० ) | १६०–१६१ |
| आङि चापः ( शाब्दबोधः ) | १६१ |
| नित्यस्त्रीत्वम् | १६२ |
| ह्रस्वो नपुंसके प्रातिपदिकस्येति वैशिष्ट्यम् | १६३ |
| इकोऽचि विभक्तौ ( शाब्दबोधः ) | १६४ |
| किमः कः, ष्णान्ताः षट् ( „ ) | १६५ |
| युष्मदस्मदर्थः | १६६ |
| परिष्कृतसर्वशब्दार्थः | १६७–१६९ |
| किंशब्दार्थः | १७०–१७२ |
| नहो धः ( शाब्दबोधः ) | १७३ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| उगितश्च ( शाब्दबोधः ) | १७४ |
| प्रातिपदिकार्थसूत्रे विशिष्टता | १७४—१८१ |
| कर्तुरीप्सिततमङ्कर्म | १८१—१८४ |
| स्वतन्त्रः कर्ता | १८४—१८५ |
| अतो दीर्घो यञि (शाब्दबोधः) | १८५—१८६ |
| ण्वुल्तृचौ ( „ ) | १८६ |
| प्रत्ययानाम् प्रकृत्यर्थान्वितस्वार्थं- | १८७ |
| लुकाऽनुत्पत्तिरेवान्वाख्येया | १८८—१८९ |
| शब्दशास्त्रीयपरिभाषापदार्थः | १९०—१९२ |
| व्याख्यानतो विशेषप्रतिपत्तिः | १९२—१९३ |
| यथोद्देशं कार्यकालं संज्ञापरि-भाषम् | १९३—१९४ |
| अनेकान्ता अनुबन्धाः | १९४—१९५ |
| एकान्ता अनुबन्धाः | १९६ |
| नानुबन्धकृतमनेजन्तत्वम्-नानुबन्धकृतमसारूप्यम्—उभयगतिरिह भवति | १९७ |
| कार्यमनुभवन्निति | १९८ |
| यदागमा इति | १९९—२०४ |
| निर्दिश्यमानस्य | २०५ |
| अर्थवद्ग्रहणे नानर्थकस्य | २०६ |
| गौणमुख्ययोर्मुख्ये कार्यं | २०६—२०७ |
| अनिनस्मन्ग्रहणानि-एकयोगनिर्दिष्टानाम् | २०८ |
| क्वचिदेकदेशोऽपि | २०८—२०९ |
| भाव्यमानेन सवर्णानां ग्रहणन्न | २०९—२१० |
| भाव्यमानोऽप्युकारः | २१० |
| वर्णाश्रये नास्ति प्रत्यय- | २१०—१११ |
| उणादयोऽव्युत्पन्नानि, प्रत्ययग्रहणे यस्मात्सः | २१२ |
| प्रत्ययग्रहणे चापञ्चम्याः | २१३ |
| उत्तरपदाधिकारे | २१३—२१४ |
| स्त्रीप्रत्यये चानुपसर्जने न | २१४ |
| संज्ञाविधौ प्रत्ययग्रहणे | २१५ |
| कृद्ग्रहणे गति-पदाङ्गाधिकारे- | २१६ |
| व्यपदेशिवदेकस्मिन् | २१६—२१८ |
| ग्रहणवता प्रातिपदिकेन | २१८ |
| व्यपदेशिवद्भावोऽप्राति- | २१९ |
| यस्मिन् विधिस्तदादावल् | २१९—२२२ |
| सर्वो द्वन्द्वः-सर्गे विधयश्छन्द-प्रकृतिवद, | २२३ |
| एकदेशविकृतमनन्यवत् | २२४—२२६ |
| पूर्वपरनित्यान्तरङ्गा-पुनः प्रसङ्ग-विज्ञानो- | २२६ |
| सकृद्गतौ विप्रतिषेधे | २२७ |
| विकरणेभ्यो नियमः | २२८ |
| असिद्धं बहिरङ्गमन्तरङ्गे | २२८—२३३ |
| नाजानन्तर्ये | २३३—२३४ |
| अन्तरङ्गानपि विधीन् | २३५ |
| उत्सर्गसमानदेशाः | २३५ |
| पूर्वोत्तरपदनिमित्तकार्यात् | २३५—२३६ |
| अन्तरङ्गान् विधी० व० ल्यप् | २३६ |
| वार्णादाङ्गम्बलीयः | २३६—२३७ |
| अकृतव्यूहाः | २३७—२३८ |
| अन्तरङ्गादप्यपवादः | २३९ |
| बाधबीजाकारवर्णनम् | २४३ |
| अनन्तरस्य विधिर्वा | „ |
| पूर्वं ह्यपवादाः | २४४ |
| उपसञ्जनिष्यमाण- | „ |
| अपवादो यद्यन्यत्र | २४५ |
| अभ्यासविकारेषु | „ |
| ताच्छीलिकेषु, क्त्ल्युटतुमुन्, लादेशेषु, उभयनिर्देशे | २४७ |
| प्रातिपदिकग्रहणे | २४७—२४८ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| सूत्रे लिङ्गवचनम् | २४८ |
| नञिवयुक्त, | २४८–२५० |
| साम्प्रतिकाभावे, बहुव्रीहौ तद्गुण, | २५० |
| चानुकृष्टन्नोत्तरत्र | २५१ |
| स्वरविधौ० हल्स्वरप्रा० निर-नुबन्ध० तदनुबन्ध० | २५२ |
| क्वचित् स्वार्थिकाः | २५२ |
| समासान्तविधिः, सन्निपातल- | २५३ |
| सन्नियोगशि० ताच्छीलके० धातोः कार्यम्, तन्मध्यपतितः, लुग्वि-करण- | २५४ |
| प्रकृतिग्रहणेण्य० अङ्गवृत्ते० संज्ञापूर्वको | २५५ |
| आगमशास्त्रमनि० गणकार्यम्० अनुदात्तेत्त्व- | ,, |
| नञ्घटितमनित्यम् | २५६––२५७ |
| सर्वविधिभ्यो० आतिदेशिकम० प्रकृतिग्रहणे यङ्- | २५७ |
| विधौ परिभाषोपतिष्ठते | २५८––२५९ |
| उपपदविभक्तेः कारक- | २५९ |
| तल्लक्षयत्त्वञ्च | २६४ |
| श्तिपा शपानुबन्धेर- | २६६––२६७ |


इत्यादि ।

---

## टिप्पणीस्थविषयाणां सूची ।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| मङ्गलवादः | १–२ |
| विषयलक्षणम् | ३ |
| प्रतियोगिता | ४ |
| विषयिनिरूपणम्, प्रमात्त्वम् | ५ |
| विशिष्टसंयोगप्रकारता निरूपणम् | ६–७ |
| निर्विकल्पकादिकम् | ८ |
| प्रकारताभेदनिरू. | १० |
| निरवच्छिन्नत्व-सावच्छिन्नत्व-विधेयत्वलक्ष. | ११ |
| अभावज्ञाने प्रतियोगिज्ञानमावश्यकम् | ११–१२ |
| अवच्छिन्नत्वम् | १२–१४ |
| अन्वयप्रतियोगित्वं, सामानाधिकरण्यम् | १४–१५ |
| तण्डुलम्पचति ( शाब्दबोधः ) | १६–१८ |
| पर्याप्तिः | १९–२२ |
| तद्वत्ताबुद्धिम्प्रति | २२–२३ |
| प्रतिबन्धकत्वम् | २३–२४ |
| विशेषरूपेण सामान्याभावादिनि. | २४ |
| व्यधिकरणधर्माभाव, सम्बन्धत्व-लक्षणभेदाश्च | २५–२६ |
| समभिव्याहृतत्व-साक्षात्त्व-साक्षात्कारत्त्वम् | २६–२७ |
| स्वरूपसम्बन्धः | २७ |
| प्रकारतासंसर्गतावादिनिरूपणम् | २८–३० |
| सामान्यपर्याप्तिलक्षणभेदाः | ३०–३१ |
| अनुयोगित्वम्–अनुवादकत्वम् | ३१ |
| अवच्छेदशब्दार्थः | ३१–३२ |
| अवच्छेदकत्वम् | ३२–३३ |
| विषयताभेदादिनिरूपणम् | ३३–३५ |
| अवच्छेद्यत्वञ्चिम् | ४०–४१ |
| कारणत्वञ्च | ४३ |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| तादात्म्यम् | ४४–४५ |
| शाब्दबोधीयकार्यकारणभावः | ४८–५४ |
| घटो न घट इत्यादि | ५५–६० |
| प्रतिबन्धकत्वं विलक्षणम् | ७१ |
| अव्याप्यवृत्तित्वम् | ७२ |
| लक्षणत्व-अव्याप्तित्व-अतिव्याप्तित्व-असम्भवत्वादिनिरूपणम् | ७५ |
| उत्तेजकत्वम् | ७६ |
| वर्णात्कारः | ८२ |
| हलन्त्यम् ( शा० बो० ) | ८४—८५ |
| अनुमितिः अनुबन्धत्वञ्च | ८८ |
| उपदेशत्वम् | ९० |
| तुल्यास्य प्र० ( शा० बो० ) | ९१—९२ |
| भूवादिसूत्रीयसादृश्ययुक्तयः | ९३—९५ |
| अणुदित्सूत्र ( शा० बो० ) | ९६—९८ |
| नवेति विभाषा ( शा० बो० ) | ९८–९९ |
| तपरस्तत्कालस्य ( शा०बो ) | १००–१०२ |
| स्थानेऽन्तरतमः ( „ ) | १०६–१०८ |
| स्थानिवत्सूत्रपरिष्कारविचारः | ११०–११३ |
| अन्तादिवच्च ( खण्डनप्रकारः ) | १२७ |
| एतत्तदोः सुलोपः(परिष्कृतार्थः) | १२८–१२९ |
| अर्थवत्सूत्रायविशि० शा० बो० | १३४–१३७ |
| अर्थवत्सूत्रीयोभयाभावः | १४२ |
| भेदत्वञ्च | १४३ |
| रषाभ्यान्नो णः (परिष्कृतार्थः) | १५५–१५६ |
| इदमेतददश्शब्दार्थाः | १६६ |
| प्रतिपदिकार्थसू० इदमपि सूत्रं क्रियायो० निष्कर्षः | १७८ |
| प्रवृत्तिनिमित्तत्वपरिष्कारः | १८० |
| कर्त्तुः सूत्रे क्वविषयकसूक्ष्मविचारः | १८१-१८२ |
| मङ्गलानन्तरम् परिभाषाव्युत्पत्तिः | १९० |
| व्याप्यधर्मावच्छिन्नविषयतया· | १९१ |
| पूर्वत्रासिद्धीयशास्त्रासिद्धत्वविचारः | १९४ |
| अनेकान्ताः (अनुमानशैली) | १९५ |
| नानुबन्धकृतमने० ( ज्ञापकम् ) | १९७ |
| स्वरविधौ व्यञ्जनमत्र ( „ ) | २०० |
| निर्दिश्यमानत्वपरिष्कारः | २०४ |
| अर्थवद्ग्रहणे ज्ञापने सूक्ष्मो वि० | २०५ |
| अनिनस्मन्ग्रहणानि ( ज्ञापकम् ) | २०८ |
| उपादयोऽव्युत्पन्नानि ( „ ) | २११–२१२ |
| प्रत्ययग्रहणे चापञ्चम्याः ( „ ) | २१३ |
| उत्तरपदाधिकारे प्रत्यय ( „ ) | २२२ |
| सर्वो द्वन्द्वो विभाषा ( „ ) | २२३ |
| अनन्यवत्त्वम् परिष्कृतम् | २२४ |
| अन्तरङ्गपरिभाषायास्त्रिपादीप्रवृत्तौ·महामानम् | २२९ |


इत्यादि ।

श्री सरस्वत्यै नमः

# अथ परिष्कारदर्पणः प्रारभ्यते ।

मङ्गलम्—

नत्वा साम्बं शिवं ध्यात्वा गुरूणाम् पदपङ्कजे ।
कुर्मोऽनायासबोधायामुं परिष्कारदर्पणम् ॥ १ ॥
परिष्कारं विनाऽशोभा शास्त्रप्रज्ञावतामपि ।
आलोच्य दुःखसीमानम् प्रबन्धोऽयन्निबध्यते ॥ २ ॥
परिष्कारधारा च सत्सम्प्रदायानुगा शब्दशास्त्रं विशालं करोति ।
अलङ्कारहीना यथा सुन्दरी नायिका शोभते नैव लोके कदाचित् ॥ ३ ॥
तथा दीप्यते शब्दशास्त्रन्न किञ्चित् परिष्कारधारानवच्छिन्नमेव ।
विचार्य्यैतदेवं सदा दुस्सहं शाब्दिकानां कृते ग्रन्थमेनं करोमि ॥ ४ ॥
काशीप्रयागावधमध्यवर्त्ती कृतश्रमश्शास्त्रनिकुञ्जपुञ्जे ।
ग्रन्थम् परिष्कारततिप्रभूतं करोति मोदाय सतां विभूत्यै ॥ ५ ॥

---

विश्वेश्वरमथाराध्यमाभवाद्य सरस्वतीम् ।
राजनारायणः श्रीमान् लेखनीस्थाञ्च देवताम् ॥ १ ॥
प्रणम्य गुर्वङ्घ्रियुगं पित्रोरपि पुनः पुनः ।
परिष्कृतेर्दर्पणस्य टिप्पणीङ्कर्तुमारभे ॥ २ ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं "समाप्तिकामो मङ्गलमाचरेदथ विघ्नध्वंसकामः" इत्यादिप्रामाणिकप्रत्ययेषु आचरेदित्यस्य स्वबुद्ध्या विरचयेदित्यर्थस्य सर्वसम्प्रदायसिद्धत्वेन "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च प्रथन्ते" इतिव्याकरणमहाभाष्यानुगतेन "मङ्गलाचरणं शिष्टाचारात् फलदर्शनाच्छ्रुतितश्च" इति मीमांसाशास्त्रानुसारेण च श्रीमान् परिष्कारदर्पणकारः स्वनिर्मितमेव मङ्गलं निबध्नाति नत्वा साम्बं शिवमिति । एतेन श्रीगणेशायनमः इत्यादिलघुभूतानामाचरणेनव सिद्धेः हृदि महामङ्गलकरणेन वाचा तदुच्चारणमात्रेण वा सिद्धेः ग्रन्थे लेखो न मङ्गलस्य युक्त इति केचिद् वदन्तः परास्ताः । शिष्टाचारादिवशान् मम शिष्या अपि स्वग्रन्थनिर्माणे मङ्गलं कुर्य्युरिति लेखस्यावश्यकत्वात् ।

सरयूपारीणशुक्लो वेणीमाधवनामकः ।
पुष्पाञ्जलिपरिष्कारम् मुहुः सद्भ्यस्समर्पये ॥ ६ ॥
जननीजनकौ स्तुत्वा जयदेवं गुरुं परम् ।
ग्रन्थमेनं निबध्नामि विदधातु शिवं हरिः ॥ ७ ॥

---

मङ्गलञ्च त्रिविधं भवति "आशीर्नमस्क्रिया वस्तुनिर्देशो वा ऽपि तत् स्मृतम्" इत्यभियुक्तोक्तेः । ग्रन्थकृता च नमस्कारात्मकं वस्तुनिर्देशात्मकं च मङ्गलन्निरुपितम् । अनुभूयते हि सर्वत्रैद "प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तते" प्रवृत्तिम् प्रति च कारणत्रयमभ्युपेयते । इष्टसाधनत्त्व कृतिसाध्यत्त्व वलवदनिष्टाननुबन्धित्त्वप्रकारक ज्ञानभेदात् । इदम् मदिष्टसाधनम् , इदञ्च मत्कृतिसाध्यम् , इदञ्च वलवदनिष्टाननुबन्धि इति ज्ञानत्रयं यत्र जायते तत्रैव कार्य्ये लोकप्रवृत्तिरनुभूयते । एकस्यापि च कारणस्य वैकल्ये न तत्कार्य्यसम्पादनाय लोकानाम् प्रवृत्ति र्दृश्यते । यथा हि—सुमेरुशिखरस्य चतुस्सेटकपरिमितोऽप्यंश आनीयते चेद् यथोचितमत्र जन्मनि सपरिवारं निर्वोढुं शक्नोमि इतीह कार्य्ये इष्टसाधनत्त्वमपि वर्त्तते, न हि तदानयनेन मे कश्चित् बलवाननिष्टस्सम्भवतीति वलवदनिष्टाननुबन्धित्त्वज्ञानमपि वर्त्तते परञ्च प्रवृत्तिर्न भवति कृतिसाध्यत्त्वाभावात् । एवम् , निरर्थके जलताडनादौ कृतिसाध्यत्त्वज्ञानस्य वलवदनिष्टाननुबन्धित्त्वज्ञानस्य च सत्त्वेऽपि इष्टसाधनत्त्वाभावात् न प्रवृत्तिः । न हि खलु जलताडनेन मे कस्यचिदपि इष्टस्य सिद्धिरिति लोकानुभवः । एवमेव च महाबुभुक्षापीडितस्यापि जनस्य विषाक्तमिष्टान्नभोजने न प्रवृत्तिः, तत्र बुभुक्षाशान्तिरूपेष्टसाधनत्त्वस्य हस्तादिनोत्थाय मुखप्रवेशरूपकृतिसाध्यत्त्वस्य च सत्त्वेऽपि 'विषाक्तं यदीदमश्नामि तदा आशुतरम् प्राणांस्त्यक्ष्यामि' इति वलवदनिष्टानुबन्धित्त्वस्यैव सत्त्वेन वलवदनिष्टाननुबन्धित्त्वज्ञानस्य प्रवृत्तेस्तृतीयकारणस्याभावेन प्रवृत्त्यभावस्य दर्शनात् । एवमेव विशिष्टो विचारस्समपादि श्रीविश्वनाथभट्टाचार्य्यैः स्वनिर्मितकारिकावल्यां सिद्धान्तमुक्तावल्याञ्च तथाहि—

इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥ का०
चिकीर्षा कृतिसाध्यत्त्वप्रकारेच्छा च या भवेत् ।
तद्धेतुः कृतिसाध्येष्टसाधनत्त्वमतिर्भवेत ॥ १४७ ॥
वलवद्द्विष्टहेतुत्त्वमतिः स्यात् प्रतिबन्धिका ।
तदहेतुत्त्वबुद्धेस्तु हेतुत्त्वं कस्य चिन्मते ॥ १४८ ॥
द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणम् ।
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्त्तितम् । इत्यादिना ।

अथ को विषयः विषयताचेति प्रश्ने समुत्तरम् । विषिणोति विषयिणमनुबध्नाति स्वेन रूपेण निरूपणीयङ्करोतीति विषयः । विपूर्वकषिञ् बन्धन इति धातुः "नन्दिग्रहिपचादी"ति सूत्रेणाच्प्रत्ययः । "विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः" उपभोगसाधनत्वम्विषयत्वमिति सामान्यलक्षणम् । विषयपदनिष्ठवाचकतानिरूपितवाच्यतावन्तस्सर्वे पदार्था इति मौलिकाकूतम् । नचेश्वरोऽपि विषयपदवाच्यस्तस्य जगद्भ्यो विलक्षणत्वात् अव्यक्तत्वाद्विशिष्टज्ञानविषयत्वाच्चेत्युपरिष्टाद्वक्ष्यमाणः । ज्ञानविषयातिरिक्तज्ञानादिनिरूपितधर्मविशेषो विषयता । स्वरूपन्द्विविधञ्ज्ञानस्वरूपम्विषयस्वरूपञ्च । घटविषयकं ज्ञानम् , ज्ञानविषयो घटः पूर्वं घटप्रतियोगिकज्ञानानुयोगिको बोधः पश्चात् ज्ञानप्रतियोगिकघटानुयोगिको बोधः, विनिगमनावैकल्यात् । घटज्ञानयोः प्रतियोगित्वमनुयोगित्वञ्च सार्वजनीनमिति ।

ननु विषयतासम्बन्धस्य घटादिविषयस्वरूपत्वमेवास्त्विति चेन्न ? विषयताया घटादिविषयस्वरूपत्वे विषयेण साकम्विषयताया आधाराधेयभावानुपपत्त्या अभेदस्य वृत्त्यनियामकत्वाऽभावेन घटो ज्ञानविषयतावानिति व्यवहारानुपपत्तेः । नचाभेदेऽपि आधाराधेयभावो वाच्यः ? घटो ज्ञानविषयतावानितिवत् घटवानिति बोधापत्तेर्दुर्वारत्वात् । तथा च ज्ञानस्वरूपैव विषयता ।

केचित्तु ज्ञानविषयोभयरूपा विषयता । वस्तुतस्तु—विषयता पदार्थान्तरमेव नतु ज्ञानविषयोभयरूपा ।

जातिमान् घट इत्यादौ घटत्वाद्येकविषयवृत्तेरेकज्ञानीयविषयताया जातित्वावच्छिन्नत्व जातित्वानवच्छिन्नत्वाभ्यान्द्वैविध्यमनुपपन्नं ज्ञानस्य विषयस्य चैक्यात् ।

---

विषय इति—आपाततऽप्रतीतस्सन्दिग्धाऽर्थो विषय इति जैमिनिः । "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति शास्त्रेऽस्मिन् पञ्चाधिकरणं स्मृतम् ॥ मीमांसा । विशब्दो हि विशेषार्थस्सिनोतिर्बन्धनार्थकः ।

विशेषेण सिनोतीति विषयोऽतो नियामकः इति केचित् । आरोपाश्रयो विषयः गौर्वाहीक इत्यादौ वाहीको विषय इत्यालङ्कारिकाः । इन्द्रियजन्यज्ञानंविषयः । शब्दस्पर्शरूपरसगन्धा विषयाः । विषिण्वन्ति स्वात्मकतया विषयिणन्निरूपयन्ति सम्बध्नन्ति वा विषयाः । "विषयाशामहापापाद्यो विमुक्तस्सुदुस्त्यजात् । स एव कल्प्यते मुक्त्यै नान्यःषट्शास्त्रवेद्यपि" इतिपौराणिकाः । शरीरेन्द्रियभिन्नत्वे सति उपभोगसाधनत्वम्विषयत्वम् । नैयायिकाः । विषयो द्विविधः, परोक्षः अपरोक्षश्च । आद्योऽनुमानगम्यः द्वितीयऽप्रत्यक्षविषयः ।

तथाचैतत्सिद्धान्तदापानुसारेण विषयता ज्ञानविषयाभ्यामभिन्नैव । यथा विषयता भिन्ना तथा विषयेऽनुयोगिताख्यो विषयसम्बन्धो भिन्नः, ज्ञाने प्रतियोगिताख्यो ज्ञानसम्बन्धो भिन्नः, ज्ञानविषयस्वरूपत्वे सम्बन्धयोर्ज्ञानविषययोर्विलक्षणत्वाभावात् । ज्ञानं यथा सविषयकन्निर्विषयकं ज्ञानन्न भवति ज्ञानस्य विषये नित्यसाकाङ्क्षत्वात् तथा विषयस्यापि सविषयकत्वापत्तौ यथा ज्ञानविषयो घटस्तथा घटविषयो ज्ञानमिति स्यादतो विलक्षणो ज्ञानविषयभिन्नोऽनुयोगिताख्यप्रतियोगिताख्य इति ।

ननु-अनुयोगिताप्रतियोगिताशब्दार्थः कः ?

प्रति कोऽर्थः पूर्वं योगस्सम्बन्धो विद्यतेऽस्येति प्रतियोगी । प्रतियोगिनो भावः प्रतियोगिता ।

अनुकोऽर्थः पश्चात योगस्सम्बन्धो विद्यतेऽस्येत्यनुयोगी ।

अनुयोगिनो भावोऽनुयोगिता यथा नीलो घट इत्यादौ नीलनिष्ठा प्रतियोगिता घटनिष्ठा अनुयोगिता । ज्ञानविषयो घट इत्यादौ ज्ञाननिष्ठा प्रतियोगिता घटनिष्ठा अनुयोगिता । घटो नास्तीत्यादौ घटनिष्ठा प्रतियोगिता, अभावनिष्ठा अनुयोगिता । एवम् विषयितासम्बन्धोऽपि ज्ञानाऽनुयोगिकविषयसम्बन्धरूपो भिन्न

---

प्रतियोगितेति-प्रतियोगः विरोध इत्यर्थः । विरुद्धसम्बन्ध इत्यर्थो वा । प्रतियोगिता विरोधिता निषेध्यत्वम्वा । घटाऽभावस्य घटो विरोधी भवति इति तस्य प्रतियोगित्वम् । तच्च स्वरूपसम्बन्धविशेषः ।

यथा घटो नास्तीत्यादौ घटेऽभावप्रतियोगिताऽस्ति । अत्राऽभावनिरूपिता घटनिष्ठा प्रतियोगितास्तीत्यर्थः । ननु घटो नास्तीति वाक्यार्थे प्रतियोगिताया कथं लाभ इति प्रश्नः । "अभावबुद्धिर्विशेषणविशेष्यसंसर्गावगाहिनी विशिष्टबुद्धित्वात् संयोगेन घटवद्भूतलमित्यादिविशिष्टबुद्धिवत" इत्यनुमानेनाऽभावे घटादिवैशिष्ट्यबुद्धौ सम्बन्धत्वेन घटाऽभावपदार्थातिरिक्तप्रतियोगितापदार्थसिद्धिः ।

प्रतिकूलसम्बन्धवत्त्वम्प्रतियोगित्वम् । यथा घटाऽभावस्य सम्बन्धः स्वरूपसम्बन्धः तस्य प्रतिकूलः संयोगः तद्वत्त्वात् घटो घटाऽभावस्य प्रतियोगी भवति । अखण्डो धर्मविशेषः प्रतियोगितेति केचित् । अन्योऽन्याऽभावविरहात्मत्वम्प्रतियोगित्वमिति केचित् । वस्तुतोऽभावविरहात्मत्वम्प्रतियोगित्वम् इत्यन्ये । वस्तुनिष्ठाऽभावनिरूपितम्प्रतियोगित्वमिति यावत् । वित्तिवेद्यत्वम्प्रतियोगित्वं वा । यथा चन्द्रवन्मुखमित्यादौ चन्द्रप्रतियोगिकसादृश्याश्रयम्मुखमिति बोधः ।

विषयीति । स्वनिष्ठविषयतानिरूपितविषयितावत्त्वसम्बन्धेन विषयोऽस्त्यस्येति-

एव । ज्ञानस्य विषये सम्बन्धो विषयता । विषयस्य ज्ञाने सम्बन्धो विषयितेति फलितार्थः । विषयता च विषयभेदाद्भिद्यते ज्ञानभेदेन विषयताभेदो न भवति । पुरुषादिभेदेन ज्ञानानाम्भिन्नत्वेऽपि एक एव घटो ज्ञानमात्रे भासते ।

उदाहरणञ्च—चैत्रपुत्रो मैत्रः मैत्रपुत्रश्चैत्रोऽनयोर्ज्ञानयोःको भेदः पूर्ववाक्ये चैत्रत्वचैत्रादि विषयः, उत्तरवाक्येऽपि विषयगणनायां साम्यमेव, विषयभेदादेव ज्ञानभेदः । यथा "देवदत्तस्य पुत्रो यज्ञदत्तस्य पिता" अनयोर्ज्ञानयोस्तरां भेदः ।

---

विषयि । इयम्विषयिताऽपि ज्ञानेच्छाकृतिभावनाऽन्यतमनिष्ठा विषयतावत्स्वरूपसम्बन्धविशेषः । विषयिता च नियमतो विषयतानिरूपिता भवति । विषयतावत् विषयिताऽपि त्रिविधा विशेषणता निरूपिता प्रकारिता १ संसर्गतानिरूपिता संसर्गिता २ विशेष्यतानिरूपिता विशेष्यिता३ । यथा घटवद्भूतलमिति ज्ञाने घटनिष्ठप्रकारतानिरूपिता प्रकारिता१ । संयोगनिष्ठसंसर्गतानिरूपिता संसर्गिता२ । भूतलनिष्ठविशेष्यतानिरूपिता विशेष्यिता३ । एताः प्रकारिता विशेष्यिता संसर्गिताश्च सन्ति । स्वविषयकज्ञानजनकत्वसम्बन्धेन विषयोऽस्त्यस्येति विषयि इन्द्रियम् इति केचित् । विषयाऽसक्तो विषयीत्यालङ्कारिकाः । राजा विषयी इति काव्यज्ञाः । अस्मिन्नेव प्रकरणे विशेष्यिताप्रकारितयोरुदाहरणम् ।

प्रमात्वम्—तद्वति तत्प्रकारकज्ञानत्वम् । तद्वति तद्वैशिष्ट्यज्ञानत्वम्वा प्रमात्वम् । तद्वन्निष्ठविशेष्यतानिरूपित तन्निष्ठप्रकारताशाल्यनुभवत्वम्प्रमात्वम् । तद्वतीत्यत्रावच्छिन्नत्वं सप्तम्यर्थः । विशेष्यितासम्बन्धेन तत्प्रकारकत्वेऽन्वयः । विशेष्यितासम्बन्धेन तदवच्छिन्ना या तत्प्रकारिता तच्छाल्यनुभवत्वन्तत्प्रमात्वम् । "इदमत्रैतत्प्रकारकम्" इति प्रतीत्या विशेष्यस्याऽपि विशेष्यितासम्बन्धेन तत्प्रकारितायामवच्छेदकत्वात् लक्षणसमन्वयः । रङ्गरजतयोरिमौ रजतरङ्गौ इति विपरीतभ्रमे च रजतावच्छिन्नन्न रजतत्वप्रकारकत्वम् , अपि तु रङ्गावच्छिन्नमिति न तत्राऽतिव्याप्तिः। अथवा विशेष्यताऽवच्छेदेन तद्धर्मावच्छिन्नप्रकारितासम्बन्धेन तद्धर्मवत्त्वम् । विशेष्यतासम्बन्धेन तद्विशिष्टत्वे सति तद्वत्त्वम् । विशेष्यतासम्बन्धेन तद्वदवच्छिन्ना या प्रकारिता तच्छाल्यनुभवत्वन्तत्प्रमात्वम् । किञ्च—विशेष्यितासम्बन्धेन तद्धर्मवदवच्छिन्नत्वे सति प्रकारितासम्बन्धेन तद्धर्मवत्त्वम् तत्प्रमात्वम् । विशेष्यिताप्रकारितयोरिव विशेष्यिताप्रकारितासम्बन्धेन विशेष्यविशेषणयोरपि परस्परमवच्छेद्यावच्छेदकभावस्सार्वजनीनः । किञ्च तत्सम्बन्धानुयोगिविशेष्यकत्वावच्छिन्नतत्प्रतियोगिकसम्बन्धावच्छिन्नप्रकारकज्ञानत्वन्तत्प्रमात्वम् । अनधिगतार्थग्राहित्वन्तत्प्रमात्वमिति मीमांसकाः । सर्वज्ञानानां यथार्थत्वात् । तत्प्रकारकज्ञानत्वन्तत्प्रमात्वमिति प्राभाकराः ।

पूर्ववाक्ये देवदत्तत्वदेवदत्तपुत्रत्वादि विषयः, उत्तरवाक्ये यज्ञदत्तत्वयज्ञदत्तपितृत्वादि विषय इति भेदः। पूर्ववाक्ययोर्भेदविचारप्रकारस्त्वित्थम्। चैत्र पुत्रोमैत्र इति ज्ञानस्य मैत्रपदार्थेन साकं यत्सम्बन्धो विशेष्यता धर्म्मिता वा, मैत्रत्वेन साकं विशेष्यतावच्छेदकता धर्म्मितावच्छेदकता च, चैत्रेण साकं विशेषणता प्रकारता वा, चैत्रत्वेन साकं विशेषणतावच्छेदकता प्रकारतावच्छेदकता वा, प्रकारतावच्छेदकतावच्छेदकता समवाये सांसर्गिकप्रकारतावच्छेदकता चैत्रत्वचैत्रयोस्समवायः इति वा, मैत्रपुत्रश्चैत्र इति ज्ञाने चैत्रे विशेष्यता चैत्रत्वे विशेष्यतावच्छेदकता। पूर्वज्ञाने प्रकारतावच्छेदकता चैत्रत्वे, द्वितीयज्ञाने प्रकारता मैत्रे--प्रकारतावच्छेदकता मैत्रत्वे प्रकारतावच्छेदकतावच्छेदकता समवाये सांसर्गिकप्रकारतावच्छेदकता वा समवाये। एवं योग्यानन्तसम्बन्धानां सत्त्वाद् वाक्यार्थयोर्भेदः।

एकः कालिकसम्बन्धः तेन सर्वे पदार्थास्सर्वत्र सन्ति। अत्र कालिकतायाः अभावेऽपि कालिकसम्बन्धेन स्वकालाधेयत्वसम्बन्धेन वाऽस्त्येवेत्यादिसामान्यसम्बन्धा आकाशादावूहनीयाः।

यस्मिन्वाक्ये परस्परम्विशेषसम्बन्धोऽस्ति न तु सामान्यसम्बन्धस्तत्र वशिष्टज्ञानं सविकल्पकम्। सविकल्पकज्ञानं वा भवति। यत्र कालिकादिसामान्यसम्बन्ध एव न विशेषस्तत्र निर्विकल्पकन्निर्विकल्पकज्ञानं वा भवति।

निर्विकल्पकज्ञानं सविकल्पकज्ञाने कारणमिति नियमः घटवटत्वे इति सम्बन्धरहितं पृथक् पृथक् ज्ञानमेव निर्विकल्पकम्। पश्चात्समवायज्ञाने सति सविकल्पकज्ञानमनेकपदार्थानां सम्बन्धज्ञानमेव सविकल्पकज्ञानमिति नियमः।

ज्ञानन्त्रिविधम्—सविकल्पकम्, निर्विकल्पकम्, समूहावलम्बनात्मकञ्च।

---

प्रकारतेति—विषयता विशेषणत्वाऽपरनामा विलक्षणविषयताविशेषः। अयं घट इति ज्ञाने विशेषणस्य घटत्वादेर्विशेषणत्वाऽपरनामा विषयताविशेषः। संसर्गावच्छिन्नविषयतेति यावत्। भासमानवैशिष्ट्यप्रतियोगित्वम्प्रकारत्वम्।

रूपरसादिगुणानां सुवर्णाम्रादिद्रव्याणाञ्च परस्परं समवायसम्बन्धः परन्तु गुणद्रव्ययोस्समवायस्यानुयोगित्वन्द्रव्ये प्रतियोगित्वं गुणे "रूपवत्सुवर्णम्" रसवदाम्रफलम्" इत्येव वाक्यन्नतु "सुवर्णवद्रूपम्–आम्रफलवान् रस" इति। एवम्भाषणम् चलनम् हसनमित्यादिक्रियाणाम् चैत्रमैत्रदेवदत्तविष्णुदेवादिनामकद्रव्याणाञ्च परस्परं समवायसम्बन्धः तत्रापि समवायनियामकानुयोगित्वन्द्रव्य एव समवायनिश्चायकप्रतियोगित्वं चलनादिक्रियायामेव। अतः चलनवान्मैत्रःभाषणवान् चैत्र इत्येव नतु

परस्परं निरूप्यनिरूपकभावानापन्नविषयतानिरूपकज्ञानत्वम् समूहालम्बना-त्मकत्वम् । घटः पटस्येति ।

---

चैत्रवद्धापनम् मैत्रवचलननिति । एवमेव जातिद्रव्ययोः जातिगुणयोः जातिक्रिययोश्च यद्यपि परस्परं समवायसम्बन्धस्तथापि जातिजातिमतोर्जातिद्रव्ययोर्वा समवायनियामकानुयोगित्वन्द्रव्य एव प्रतियोगित्वञ्जातावेव । अत एव घटत्ववद् द्रव्यम् रूपत्ववान् गुणः चलनत्ववती क्रिया इत्यादिव्यवहारो न तु द्रव्यत्ववद् घटत्वम् गुणवद्रूपत्वम् इत्यादि । एवम्भूतले घटाऽभाव इत्यादिस्थले परस्परयोस्स्वरूपसम्बन्धो यद्यपि तथापि स्वरूपसम्बन्धस्यानुयोगित्वम्भूतल एव । स्वरूपसम्बन्धप्रतियोगित्वसम्बन्धो घटाऽभाव एव । घटाऽभाववद् भूतलम् इति भवति, नतु भूतलवान् घटाऽभाव इति । संयोगसम्बन्धविषये विचारः । यत्र भूतले सुवर्णघटःरजतघटश्च संयुक्तौ तत्र सुवर्णघटवद्भूतलं रजतघटवद् भूतलमित्येव भवति नतु भूतलवान् सुवर्णघटः भूतलवान् रजतघट इति । परन्तु एकस्मिन्नेव भूतले यद्यपि घटद्वयं संयुक्तम् तथापि सुवर्णघटवान् रजतघटःरजतघटवान् सुवर्णघट इति न भवति । तथा च कतिपयसंयोगसम्बन्धो विशिष्टव्यवहारविषयः कतिपयेन संयोगेन विशिष्टव्यवहारो न भवति । यथा सुवर्णरजतघटादौ भूतले मिश्रीकृत्य संयुक्तौ, यद्यपि संयोगो द्वयोःपरस्परन्तथापि भूतलेन साकं यस्संयोगस्स तु विशिष्टव्यवहारनिर्द्धारकः । एकीकृत्य दृश्यमानयोस्सुवर्णघटरजतघटयोर्यस्संयोगस्स तु विशिष्टव्यवहारनियामको न भवत्यत एव सुवर्णघटवद्भूतलमिति रजतघटवद्भूतलमिति च भवति नतु सुवर्णघटवान् रजतघटःरजतघटवान् सुवर्णघट इति द्वयोर्घटयोस्संयोगेऽपि ।

तथा च संयोगो द्विविधो विशिष्टव्यवहारनियामकस्तदनियामकश्चेति फलितम् । सुवर्णघटरजतघटयोस्संयुक्तयोरपि प्रतियोगित्वानुयोगित्वयोरभावादिति तत्त्वम् । उक्तप्रतियोगित्वानुयोगित्वे स्वत्वादिसम्बन्धानामपि भवतः । राज्ञःपुरुष इत्यादौ स्वत्वं षष्ठ्यर्थः, स्वत्वानुयोगित्वम्पुरुषे, स्वत्वप्रतियोगित्वं राजनि, यस्य स्वत्वादिसम्बन्धस्तत्र तस्य स्वत्वस्य सम्बन्धःप्रतियोगिता । यत्र हि स्वत्वम्भासते तत्रैवानुयोगितासम्बन्धो यथा सुवर्णघटः सुवर्णनिष्ठजनकतानिरूपितजन्यतावान् घटः । सुवर्णस्य घटे जन्यत्वसम्बन्धो जन्यत्वसम्बन्धस्यानुयोगित्वन्निश्चायकं घट एव, प्रतियोगित्वं सुवर्णे एवैवम्विधाःप्रकारास्स्वयमूह्याः । वृक्षे फलन्नास्ति फलाऽभावस्य वृक्षे स्वरूपसम्बन्धस्तन्नियामकः परिचायकः अवच्छेदकः व्यवस्थापकस्सङ्कोचको वाऽन्योऽपि सम्बन्धो यथा तत्रैवाधाराधेयभावः भूतले घटः अत्राधाराधेयभावसम्बन्धनियामकस्संयोगः । हस्ते क्रिया घटे रूपम् द्रव्येषु जातिः एष्वाधाराधेयभावनियामकसम्बन्धस्समवायः । गुडे तिक्ताऽभावः, वायौ रूपाऽभावः, भूतले घटाऽभावः ।

विशेषसम्बन्धा यथा—आधारत्व, आधेयत्व, आश्रयत्व, आश्रयित्व, आश्रितत्व, जन्यत्व, जनकत्व, स्वत्व, स्वामित्व, निरूपकत्व, निरूपितत्व, विषयत्व, विषयित्व, अवच्छेद्यत्व, अवच्छेदकत्व, अवयवत्व, अवयवित्व, संयोग, स्वरूप इत्यादयः। "घटाकाशः ज्येष्ठातपः" अत्र घटस्याकाशे अवच्छेद्यत्वसम्बन्धः। ज्येष्ठस्यातपेऽवच्छेद्यत्वसम्बन्धः।

दण्डी पुरुषः संयोगसम्बन्धावच्छिन्न दण्डत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यतेति।

घटवद्भूतलम्—संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यता। वृक्षे फलन्नास्ति—अत्र फलाभावस्य वृक्षे स्वरूपसम्बन्धः। यद्यपि वृक्षस्य फलाभावे आधेयत्वं फलाभावस्य वृक्षे आधारत्वं तथापि तयोर्नियाम्याधाराधेयभावानियामकसम्बन्धस्स्वरूपसम्बन्धः। संयोगसमवायस्वरूपसम्बन्धानान्नियमोऽयम्। एकपदार्थोऽपरपदार्थेन सम्बद्धः। एते सम्बन्धाः परस्परमुभयपदार्थसापेक्षा एव। घटस्य भूतले संयोगसम्बन्धस्तर्हि भूतलस्यापि घटे संयोगः घटस्य नीले समवायसम्बन्धस्तर्हि नीलस्याऽपि घटे समवायः। भूम्या घटाऽभावे स्वरूपसम्बन्धस्तर्हि घटाऽभावस्यापि भूम्यां स्वरूपसम्बन्धः। परन्त्वनुयोगित्वप्रतियोगित्वयोर्निश्चायकयोस्सत्वं लोकव्यवहारबलेन च भूतलवान् घट इति न भवति पूर्वम्विशिष्टम्।

निर्विकल्पकसविकल्पकसमूहालम्बनात्मकज्ञानानां दृष्टान्ताः। एकगुरुसन्निधौ चत्वारश्शिष्यास्तेषां सतीर्थ्यत्वं सामान्यमेव सम्बन्धः। सार्द्धम्पठनमात्रमेव शयनभोजनपाठचिन्तादीनां व्यवहाराणान्न सम्बन्धः। क्वचित्तु एकगुरुसन्निधौ चैत्रमैत्रदेवशाक्तनामकचत्वारश्शिष्यास्तेषां सतीर्थ्यत्वसामान्यसम्बन्धस्तु स्वतन्त्रस्तिष्ठति विशेषसम्बन्धस्तु तत्र चैत्रस्य मैत्रश्श्यालकः देवनामकस्य शक्तिनामकः पैतृष्वस्रीय इति परस्परं विशेष्यविशेषणभावेन विशेषसम्बन्धः। एवमेव एकगुरुसन्निधौ नाथप्रतिमणिचन्द्रनामकाश्चत्वारश्शिष्याः। सतीर्थ्यत्वसामान्यसम्बन्धस्तेषाम्। एकत्रैव पठनात्। परन्तु नाथस्य पितृव्यपुत्रश्चन्द्रः मणिर्नाथस्य मातुल इति विशेषसम्बन्धः। यस्मिन् ज्ञाने विषयाणान्न विशेषसम्बन्धः किन्तु सामान्यसम्बन्ध एव तद् ज्ञानन्निर्विकल्पकम्। यस्मिन् ज्ञाने सर्वेषाम्विषयाणाम्विशेषसम्बन्धज्ञानन्तद् ज्ञानं सविकल्पकम्। यस्मिन् ज्ञाने कतिपयविषयाणां परस्परसामान्यसम्बन्धः। कतिपयविषयाणाम्परस्परम्विशेषसम्बन्धः। एवमाकारकं ज्ञानं समूहालम्बनात्मकम्। अत एव परस्परनिरूप्यनिरूपकभावानापन्नविषयतानिरूपकज्ञानमेव समूहालम्बनात्मकमिति तत्त्वज्ञाः।

मकः निश्चायकः अवच्छेदकः सङ्कोचकः परिचायकः व्यवस्थापको वा कश्चन विलक्षणस्सम्बन्धः सर्वत्र । यथा घटवद् भूतलमित्यत्र घटनिष्ठाधेयतानिरूपिताधारतावद् भूतलमित्येव शुद्धो बोधस्तथापि तदवच्छेदकस्संयोगः । भूतले घटाभावः—अत्राधाराधेयभावनियामकस्स्वरूपसम्बन्धः ।

ननु यथा घटवद् भूतलमिति वाक्यन्तथा भूतलवान् घटः, रूपवान् घटः, घटवपद्रूम्, घटाभाववद् भूतलम्, भूतलवान् घटाभावः, एवम्विधाः, प्रयोगाः, कथन्न भवन्ति संयोगादीनामुभयनिरूप्यत्वात् इति चेन्न ? संयोगसमवायस्वरूपाणामपि सम्बन्धानान्निश्चायकः कश्चन सम्बन्धो भवति । पदार्थद्वय एषां सम्बन्धानान्निश्चयाकस्सम्बन्धोऽनुयोगिताख्यः प्रतियोगिताख्यश्च । यदि संयोगादीनामनुयोगिताख्यस्स्यात्तदा तत्र विशिष्टबोधः । यत्र केवलप्रतियोगित्वसम्बन्ध एव तत्र न विशिष्टबोधः । घटवद् भूतलमित्यत्र घटभूतलयोर्यस्संयोगस्तस्य नियामकमनुयोगित्वम्भूतलेऽतो घटवद् भूतलमिति भवति भूतलवान् घट इति न भवति । संयोगस्य घटे प्रतियोगित्वं सम्बन्धोऽनुयोगित्वाभावात । दुग्धवान् घट इति भवति घटवद् दुग्धमिति न भवति । यद्यपि संयोगस्योभयत्र तुल्यत्वमेव तथाप्यनुयोगित्वम्प्रतीतिबलाद् घट एव, प्रतियोगित्वम् दुग्ध एवातो दुग्धवान् घट इत्येव भवति । एवं रूपरसादिगुणानां सुवर्णाम्रादिद्रव्याणाम्परस्परं समवायः । परन्तु गुणद्रव्ययोस्समवायस्य निश्चायकानुयोगित्वन्द्रव्य एव न गुणादावत एव रूपवत्सुवर्णं रसवदाम्रफलम् इत्यादि भवति न तु सुवर्णवद् रूपम्, आम्रफलवान् रस इत्यादि भवति । क्रिया चैत्रमैत्रद्रव्ययोश्च परस्परं समवायसम्बन्धः। अत्र समवायनिश्चयाकानुयोगित्वमेवातश्चलनवान् मैत्रो भापणवान् चैत्र इति भवति । मैत्रवच्चलनं चैत्रवद् भापणमिति न भवति ? अनुयोगित्वस्य निश्चायकस्य क्रियायामभावात इति ।

यद्यपि समवायसम्बन्धो घटपटादौ परस्परन्तथापि समवायनियामकानुयोगित्वमवयवेषु प्रतियोगित्वमवयविपु अतः "पटवन्ति सूत्राणि घटवन्ति कपालानि" इत्येवमादयो व्यवहाराः । सूत्रवान् पटः, कपालवान् घटः इति न भवति पूर्वोक्तयुक्तेः । राजपुरुष इत्यादौ स्वस्वत्वस्यापि नियामको निश्चायकः अनुयोगित्वम्पुरुषे प्रतियोगित्वं राजनि । सुवर्णघटः अत्र सुवर्णस्य घटे जन्यत्वं संसर्गस्तस्यानुयोगित्वं घटे, प्रतियोगित्वं सुवर्णे, प्रतियोगित्वम्विशेषणत्वरूपम् अनुयोगित्वम्विशेष्यत्वरूपम् इति फलितार्थः ।

विशेष्यता द्विविधा सावच्छिन्ना निरवच्छिन्ना च । अथ घट इत्यादौ घटत्व-निष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यता इदन्त्वावच्छिन्नत्त्वेन सावच्छिन्ना । केवल-घट इत्याकारकज्ञाने घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठा विशेष्यता निरवच्छिन्ना । पूर्वज्ञान इदन्त्वादिकमेव धर्म्मिंतावच्छेदकम् पदार्थः । विशेष्यतावच्छेदकताया एव धर्म्मितावच्छेदकतापदार्थत्वात् ।

प्रकारतापि द्विविधा सावच्छिन्ना निरवच्छिन्ना च । घट इत्याकारक-

---

प्रकारता द्विविधेति—उपस्थितीया शाब्दबोधीया च "जात्याकृतिव्यक्तयः पदार्थ" इति गौतमसूत्रानुरोधेन घटघटत्वसमवायानामुपस्थितिरित्युपस्थितिकालीना या समवायनिष्ठसांसर्गिकविषयतानिष्ठा प्रकारतोपस्थितिकालीना या घटत्वनिष्ठा प्रकार-ताचोपस्थितीयेति व्यवह्रियते । विश्रृङ्खलभावेन त्रयाणाम्पदार्थानामुपस्थितिरिति पार्थक्येनेति यावत् । अत एव परस्परन्त्रयाणान्निरपेक्षत्वात् । उक्ता द्वयी प्रकारता निरवच्छिन्नैव न तु सावच्छिन्नेत्याकूतम् । घटोऽस्ति, घटाऽभिन्नैकत्वविशिष्टकर्त्तृवृत्ति-स्सत्तेत्यर्थक घटोऽस्तीतिवाक्येऽभेदसम्बन्धावच्छिन्नघटनिष्ठा प्रकारता शाब्दबोधीया। नीलो घट इत्यादौ अभेदसम्बन्धावच्छिन्ना नीलनिष्ठा प्रकारता शाब्दबोधीया । नील-नीलत्त्वसमवायोपस्थितिकाले नीलत्त्वनिष्ठा प्रकारतोपस्थितीया । एवम्विशेष्यताऽपि द्विविधा—उपस्थितीया शाब्दबोधीया च घटपदाद् घटघटत्वसमवायेषु उपस्थितेषु घटनिष्ठा विशेष्यतोपस्थितिकालीनत्त्वेनोपस्थितीयेति व्यवह्रियते । नीलो घट इत्यादौ घटनिष्ठा विशेष्यतोपस्थितिकालीनत्त्वेनोपस्थितीयैव अभेदसम्बन्धावच्छिन्ना घट-निष्ठा विशेष्यता शाब्दबोधीया । शाब्दबोधसम्पादकाभेदादिसम्बन्धादिसामग्री-कदम्बकालिकत्त्वेन शाब्दबोधीया विशेष्यतेति व्यवहारः । उपस्थितीया विशेष्यता च सावच्छिन्नेत्यलम् । प्रकारता सावच्छिन्ना निरवच्छिन्ना च । घटवद्भूतलमित्यादौ संयोगसम्बन्धावच्छिन्नभूतलनिष्ठविशेष्यतानिरूपितघटनिष्ठा प्रकारता घटत्वावच्छि-न्नत्त्वेन सावच्छिन्ना प्रकारता । घटः घटोऽस्ति इत्यादौ घटनिष्ठविशेष्यतानिरूपिता घटत्वनिष्ठा प्रकारता निरवच्छिन्ना । विशेष्यताऽपि सावच्छिन्ना निरवच्छिन्ना च । अयं घट इत्यादौ घटनिष्ठा विशेष्यता इदन्त्वावच्छिन्नत्त्वेन सावच्छिन्ना । केवलं घट इत्यादौ घटनिष्ठा विशेष्यता निरवच्छिना । ननु *किन्तावन्निरवच्छिन्नत्वम्*—यत्किञ्चिन्निष्ठावच्छेदकतानिरूपितावच्छेद्यत्वम् यथा घट इत्याकारकज्ञानीय घटनिष्ठ-विशेष्यतानिरूपिता घटत्त्वनिष्ठा प्रकारता यत्किञ्चिन्निष्ठावच्छेदकतानिरूपितावच्छे-द्यत्त्वाभाववतीति सा निरवच्छिन्नेति व्यवह्रियते । नच घटत्त्वादेर्जातित्त्वेन जातेश्च समवायसम्बन्धेन व्यक्तिवृत्तित्त्वस्याभीष्टत्त्वेन घटत्त्वादिनिष्ठप्रकारतायास्स-मवायसम्बन्धनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावत्त्वेन सावच्छिन्नत्त्वमेव न तु

ज्ञाने स्वरूपतो घटत्वादेर्भानात् घटनिष्ठविशेष्यतानिरूपिता घटत्वनिष्ठा प्रकारता निरवच्छिन्ना ।

---

निरवच्छिन्नत्व युज्यते वक्तुमिति वाच्यम् ? निरुक्ताव्याप्तिदोषवारणाय अथ च सर्वत्रैव प्रकारताया यत्किञ्चित्सम्बन्धावच्छिन्नत्वेन निरुक्तरीत्याऽसम्भववारणाय लक्षणे (निरवच्छिन्नत्वस्य) सम्बन्धातिरिक्तयत्किञ्चिन्निष्ठावच्छेदकतानिरूपितावच्छेद्यत्वाभाववत्त्वमेव निरवच्छिन्नत्वमिति निवेशेन सर्वदोषपरिहारसम्भवादिति ।

एवम्, सावच्छिन्नत्वञ्च—यत्किञ्चिन्निष्ठावच्छेदकतानिरूपितावच्छेद्यतावत्त्वम् यथा घटवद् भूतलमित्यादौ भूतलत्वावच्छिन्नविशेष्यतानिरूपिता घटनिष्ठा प्रकारता घटत्वावच्छिन्नत्वेन घटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावत्त्वाद् भवति सावच्छिन्नेति ।

ननु *किन्तावद्विधेयत्वम्* । न चोद्देश्यतानिरूपितम्विधेयत्वमिति वाच्यम् ? उद्देश्यतानिरूपितत्वम्विधेयत्वम् विधेयतानिरूपितत्वमुद्देश्यत्वमित्युभयोः परस्परापेक्षत्वेनान्योन्याश्रयापत्तेः । न च विशेष्यतावच्छेदकताभिन्नमुख्यविशेष्यतानिरूपितप्रकारत्वम्विधेयत्वम्, पर्वतो वह्निमान् पर्वते वह्निरित्यादौ पर्वते उद्देश्यत्वम्वह्नौ विधेयत्वम् । तावताऽप्यन्योन्याश्रयवारणस्य कर्त्तुमशक्यत्वात् । विषयता त्रिविधा प्रकारताख्या विशेष्यताख्या संसर्गताख्या च । विषयताविशेषत्वम्विधेयत्वम् । विषयताविशेषत्वमुद्देश्यत्वम् इति लक्षणेनाऽदोषात् । उद्देश्यस्य विशेष्यत्वम्विधेयस्य प्रकारत्वमर्थादुद्देश्ये विशेष्यतासम्बन्धः, विधेये प्रकारतासम्बन्ध इत्यभिप्रायः । केचित्तु "यच्छब्दयोगःप्राथम्यं स्यादुद्देश्यस्य लक्षणम्" यच्छब्दयोगः पाश्चात्यं स्याद्विधेयस्य लक्षणमि"ति ब्रुवन्ति । पर्वतो वह्निमान् इत्यादौ पर्वते उद्देश्यता वह्नौ विधेयता "इको यणचि" इक्युद्देश्यतासम्बन्धो विशेष्यता च । यणि विधेयतासम्बन्धः प्रकारता च । न चोद्देश्यस्य विशेष्यत्वमिति स्वीकारे विधेयस्य विशेषणत्वमिति स्वीकारे च पर्वतो वह्निमानित्यादौ निर्वाहेऽपि सर्वेषु घटेषु रूपम् इत्यादौ विधेयस्य रूपस्यैव विशेष्यत्वेन प्रथमान्तपदवाच्यत्वात उद्देश्यस्य घटस्य च विशेषणत्वमिति प्रतीतेस्सार्वजनीनत्वात्कथमुद्देश्ये विशेष्यत्वमिति वाच्यम् ? विशेष्यविशेषणभावयोरन्वयव्यतिरेकसहचारगम्यत्वात् ।

अभावज्ञानम्प्रतियोगिज्ञाने नित्यसाकाङ्क्षमिति—प्रतियोगिज्ञानम्बिनाऽभावज्ञानन्न भवति न गच्छति न भवति नास्तीत्युच्चारिते किन्नास्ति किन्न गच्छति किन्न भवतीत्याकाङ्क्षा नियमेनोपपद्यते । नच सामान्यरूपेणाऽभावश्चतुर्विधः अभावः प्रमेयः अभावः पदार्थ इत्यादिषु प्रतियोगिज्ञानस्य चर्चैव नास्ति कथन्नित्याकाङ्क्षा प्रतियोगिनि । नच प्रतियोगिविशेषविशेषिताऽभावज्ञाने प्रतियोगिज्ञानन्नियमेनापेक्षणीयमिति तात्पर्य्यमिति वाच्यम् ? विशिष्टबुद्धिमात्रे विशेषणज्ञानस्यापेक्षेति

घटवद् गृहमित्यादौ संयोगसम्बन्धावच्छिन्नगृहनिष्ठविशेष्यतानिरूपितघटनिष्ठा प्रकारता घटत्वावच्छिन्नत्वेन सावच्छिन्ना ।

उद्देश्यताविधेयते अपि विषयतावत् अतिरिक्ते एव । यथा पर्वतो वह्निमानित्यत्र संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतेति । अत्र वह्नौ विधेयता पर्वते उद्देश्यता ।

अवच्छिन्नत्वञ्च—

---

नियमः, विशिष्टबुद्धौ विशेषणज्ञानङ्कारणमित्यपि नियमः नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीति न्यायात्। तथा च विशिष्योपादानस्यानुपयोगादिति वाच्यम् ?

तत्सादृश्यमभावश्च तदन्यत्वन्तदल्पता। अप्राशस्त्यम्विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ?

न ञ्पदवाच्यतावच्छेदकं यत्क्रियान्वयितावच्छेदकविलक्षणं रूपन्तेन रूपेणाऽभावज्ञानम्प्रति प्रतियोगिज्ञानस्य नियमेनापेक्षेतिनियमाऽऽकारः । अभावश्चतुर्विध इत्यादौ क्रियान्वयितावच्छेदकत्वस्याभावेन दोषाऽभावात् । नञर्थताऽवच्छेदकत्वसमनियतषट्त्वाश्रयवन्त इत्यर्थस्तेन "न पञ्च सप्त" इत्याद्यापत्तिः । अनिक्षुश्शरः, अत्र घटो न, अयं घटो न, अनुदरा कन्या, अब्राह्मणो वार्द्धुषिकः असुरो दैत्य इत्याद्युदाहरणानि । अतः मीमांसकाऽभिमतान्वितो घटो घटपदशक्य इत्यन्विताभिधानवादो निरस्तप्रायः ।

तत्प्रकारकतद्विशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति तत्प्रकारकतद्विशेष्यकोपस्थितिः कारणमिति नियमः। न च नीलत्वप्रकारकनीलविशेष्यक शाब्दबोधम्प्रति घटप्रकारकघटविशेष्यकोपस्थितेः कारणतापत्तिरिति वाच्यम् ? तत्पदजन्यतत्प्रकारकेतिनिवेशेनादोषात्। न च घटपदजन्यशाब्दबोधे शब्दाश्रयत्वेनाकाशस्याऽपि शाब्दबोधप्रसङ्गः, एवमभेदादिसंसर्गेऽपि दोष इति वाच्यम् ? वृत्तिज्ञानाधीनतद्धर्मप्रकारकतद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति तत्पदनिष्ठवृत्तिज्ञानाधीनतद्धर्मप्रकारकतद्धर्मावच्छिन्नविशेष्यकोपस्थितेः कारणत्वेनाकाशादेर्वृत्तिज्ञानाधीनानुपस्थितत्वेनाव्यभिचारात्। तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मावच्छिन्ननिरूपित वृत्तिविशिष्टज्ञानं हेतुः । ज्ञाने वृत्तिवैशिष्ट्यञ्च स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्य स्वाश्रयपदविषयकत्वोभयसम्बन्धेन विशेष्यविशेषणभावव्यत्यासेन घटप्रकारक घटत्वविशेष्यकशाब्दबोधवारणाय तद्धर्मावच्छिन्नेति । घटपदाकाशविषयकशाब्दबोधवारणाय स्वाश्रयपदेति शाब्दिकाः ।

अवच्छिन्नत्वम्—व्यापकत्वम् । यथा ह्रदे वह्निमत्ताबुद्धिनिरूपितप्रतिबन्धकतायां ह्रदो न वह्निमान् इति निश्चयीयविषयिताया अवच्छिन्नत्वम् । अवच्छिन्नत्वा-

प्रतियोगित्वविषयतावत् विषयतादावपि घटत्वादेस्सम्बन्धविशेष एव। घट-त्वावच्छिन्ना विषयतेत्यस्य कोऽर्थः ? घटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती विषयतेत्यर्थः।

अवच्छेदकत्वञ्च—

शक्यत्वे सति शक्यव्यावर्त्तकत्वमवच्छेदकत्वम्। यथा घट इत्यादौ घटत्वम् घटपदशक्यम् पटादिपदार्थव्यावर्त्तकञ्च।

अन्यूनानतिप्रशक्तत्वमवच्छेदकत्वम्वा। घट इत्यादौ घटत्वन्न न्यूने वर्त्तते नाधिके वर्त्तते किन्तु सकल एवेति घटत्वमवच्छेदकम्।

अत्रायन्निष्कर्षः अवच्छेदकत्वं स्वरूपसम्बन्धविशेषः स च क्वचित् प्रतियोग्यं-शप्रकारीभूतधर्म्मत्वम्।

यथा प्रमेयधूमाभावप्रतियोगिताया अवच्छेदकत्वं धूमत्वे। क्वचित्तु अनतिरिक्त-

---

वच्छेदकत्वयोः (स्वरूपसम्बन्धरूपयोः) तुल्यवित्तिवेद्यत्वेन साकाङ्क्षत्वेन च परस्परं निरूप्यनिरूपकभावो बोध्यः। तथा च अवच्छेदकतानिरूपकत्वाकत्वमवच्छि-न्नत्वमित्युक्त्यैव निर्वाहेऽवच्छिन्नत्वनिरुक्तिः शिष्यबुद्धिवैशद्यायेति।

सामानाधिकरण्यं वा तत्। यथा वह्निव्याप्यधूमवान् पर्वतः इति परामर्शनिरू-पितयोर्धूमनिष्ठविषयतयोरवच्छेद्यावच्छेदकभावः। अत्रेदमनुसन्धेयम्, मध्यवृत्ति-विषयतयोर्भेदपक्षे पर्वतत्वावच्छिन्नविशेष्यतानिरूपितधूमनिष्ठप्रकारत्वस्य व्याप्ति-निष्ठप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वस्य च परस्परम् अवच्छेद्यावच्छे-दकभावः।

स्वरूपसम्बन्धविशेषो वा। यथा मूले वृक्षः कपिसंयोगी न शाखायाम् इत्यादौ कपिसंयोगस्य मूलावच्छिन्नत्वम्। वृक्षसम्बन्धिमूलभागवृत्तित्वमित्यर्थः। शाखा-याश्च कपिसंयोगाभावावच्छिन्नत्वम् फलितम्।

विशिष्टत्वं वा तत्। यथा घटत्वावच्छिन्नो घट इत्यादौ।

साहित्यं वा तत्। यथा शरीरावच्छिन्न आत्मनि भोगो जायते इत्यादौ आत्मनः शरीरावच्छिन्नत्वम्।

अनुकूलत्वं प्रयोजकत्वं वा तत। यथा फलावच्छिन्नव्यापारो धात्वर्थं इत्यत्र व्या-पारस्य फलावच्छिन्नत्वम्। अवच्छिन्नत्वं सम्बन्ध इति शाब्दिकाः।

इयत्ताकरणत्वं वा तत। यथा द्रोणो व्रीहिरित्यादौ द्रोणावच्छिन्नो व्रीहिरिति।

सीमाकरणत्वं वा। यथा कोटरावच्छिन्नः पक्षी घटावच्छिन्नमाकाशमित्यादि।

ननु प्रतियोगितावच्छेदकत्वं किमिति प्रश्नः।

येन रूपेण (धर्म्मेण) यस्याऽभावादौ प्रतियोगिता बोध्यते स धर्मः प्रतियो-

वृत्तित्वन्तत् । तच्च द्विविधम् । तत्राद्यम् तच्छून्यावृत्तित्वे सति तदधिकरणवृत्त्यभावाप्रतियोगित्वम् । यथा घटाभावप्रतियोगितायाअवच्छेदकत्वं घटत्वे ।

द्वितीयन्तु व्यावर्तकत्वसामानाधिकरण्यस्वनिष्ठावच्छेद्यताकत्वैतत्त्रितयसम्बन्धेन यत किञ्चिद् धर्म्मविशिष्टत्वम् यथा घटकारणताया अवच्छेदकत्वं दण्डे । क्वचित्तु

---

गितावच्छेदकः । यथा घटाऽभावे घटस्य घटत्त्वरूपेण प्रतियोगिता बोध्यते अतस्तत्र घटत्त्वम्प्रतियोगितावच्छेदकम् । अयञ्च धर्मः क्वचिदेकः क्वचिदनेकः अग्निर्नास्तीत्यादौ अग्नित्त्वमेवैकम्प्रतियोगितावच्छेदकम्, महानसीयवह्निर्नास्तीत्यादौ महानसीयत्त्वम्वह्नित्वञ्चेत्युभयम् प्रतियोगितावच्छेदकम् । घटपटोभयन्नास्तीत्यादौ घटत्त्वम् पटत्त्वम् उभयत्त्वञ्चेति त्रयम् । सम्बन्धोऽपि प्रतियोगितावच्छेदको भवति । स च येन सम्बन्धेन प्रतियोगिताया अभावांशे भानम् तादृशसम्बन्धः । यथा संयोगेन घटोनास्तीत्यादौ संयोगेन घटस्याऽभावांशे प्रतियोगिताभानमिति तत्र संयोगसम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः । एवं साध्यतावच्छेदकसम्बन्धः पक्षतावच्छेदकसंबन्धः आधेयतावच्छेदकसम्बन्ध इत्याद्यूह्यम् ।

अन्वयित्त्वमन्वयप्रतियोगित्त्वम् । तच्च स्वरूपसम्बन्धविशेषः । यथा चैत्रस्य पुत्र इत्यादौ षष्ठ्यन्तार्थस्य प्रतियोगित्वम् । संयोगेन घटवद्भूतलमित्यादौ घटे भूतलानुयोगिकसंयोगसम्बन्धप्रतियोगिता। अत्र विशिष्टबुद्धौ प्रकारतया भासमानस्य घटस्य संसर्गप्रतियोगित्त्वम् इति विशेष्यतया भासमानस्य तु भूतलस्यानुयोगित्त्वम् इति दिक् ।

ननु सामानाधिकरण्यङ्किमिति प्रश्नः । तदधिकरणवृत्तित्त्वं सामानाधिकरण्यम् । यथा वह्निधूमयोस्सामानाधिकरण्यम् । परन्तु सामानाधिकरण्यन्द्विविधम् । दैशिकं कालिकञ्चेति । दैशिकं सामानाधिकरण्यम्वह्निधूमयोः । कालिकं सामानाधिकरण्यन्तु एककालावच्छेदेन वर्त्तमानयोः विभिन्नदेशाधिकरणकयोर्घटपटयोस्सामानाधिकरण्यम् ।

सामानाधिकरण्यञ्च सम्बन्ध इति शाब्दिकाः ।

कार्यकारणभावत्त्वञ्च—यत्किञ्चिन्निष्ठकार्यतानिरूपितकारणत्त्व यत्किञ्चिन्निष्ठकारणतानिरूपितकार्यत्त्वतदन्यतरात्मकधर्मत्त्वम् । यथा—

कार्यकारणभावाद् वा स्वभावाद् वा नियामकात् ।
अविनाभावनियमो दर्शनान्न न दर्शनात् ॥ १ ॥

इत्यादौ धूमध्वजयोः कार्य्यकारणभावः। अत्र कार्यञ्च कारणञ्चेति विग्रहो बोध्यः। अयं च हेतुहेतुमद्भाव इत्यपि कथ्यते । एकस्य स्वकारणापेक्षया कार्यत्त्वे तदपेक्षया चान्यस्य कारणत्त्वम् । अत्रेदमनुसन्धेयम्, कार्योत्त्पत्तिनिश्चयेन अविनाभावो नि-

तदधिकरणस्य तन्निष्ठधर्म्मावच्छेदकत्वम्, यथा मूले वृक्षे न कपिसंयोगश्शाखायाम् इत्यादौ वृक्षाधिकरणस्य मूलस्य वृक्षनिष्ठकपिसंयोगाभावावच्छेदकत्वम्, वृक्षाधिकरणस्य शाखादेर्वृक्षनिष्ठकपिसंयोगावच्छेदकत्वञ्च। यथा वा इह पर्वते नितम्बे हुताशनः न शिखरे इत्यत्र नितम्बरूपदेशस्य हुताशनावच्छेदकत्वम् शिखरस्य तु हुताशनाभावावच्छेदकत्वञ्च। इदानीं चत्वरे गौर्नास्तीत्यादौ एतत्कालेऽपि गवाभावस्यावच्छेदकत्वम्।

सम्भवति लघौ धर्मे गुरौ तदभावादित्यवच्छेदकत्वनिरुक्त्यनुसारेण सकलपर्य्याप्तधर्मविशेषावच्छेदकत्वस्वीकारः।

नन्ववच्छेदकत्वं कथमङ्गीक्रियते तदस्वीकृतिदशायामपि घटोऽस्तीत्यादौ बोधसम्भव इति चेन्न ? यद्यवच्छेदकत्वन्न स्यात्तर्हि भावविशिष्टबुद्धिप्रतिबध्यप्रतिबन्धकभावादीनामेषामपि व्यवस्था न स्यात्। तदव्यवस्थाने च सर्व एव व्यवहारा विलोपमर्हेयुः, तथा हि—घटो नास्तीत्यादिविशिष्टबुद्धौ घटत्वादेरवच्छेदकत्वाभावे घटप्रतियोगिकाभावकर्त्तृकासत्त्वेत्यर्थस्वीकारे "घटो नास्ति, नील घटो नास्ति, घटपटोभयन्नास्ति" इति विशिष्टबुद्धीनाम्परस्परम्वैलक्षण्यन्न स्यात्। सर्वत्रैव घटप्रतियोगिकाभावप्रतीतेः। अवच्छेदकत्वस्वीकारे तु घटो नास्तीति विशिष्टबुद्धौ घटत्वमात्रनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकत्वस्य नीलघटो नास्तीति बुद्धौ नीलत्वघटत्वरूपधर्मद्वयनिष्ठावच्छेदकताद्वयनिरूपितप्रतियोगिताकत्वस्य, घटपटोभयन्नास्तीति बुद्धौ च घटत्वपटत्वउभयत्वरूपधर्मत्रयनिष्ठावच्छेदकताप्रतियोगिताकत्वस्यावगाहनात्। विषयवैलक्षण्येन प्रतीतिवैलक्षण्यमिति चेन्न ? घटो नास्तीति बुद्धौ घटप्रतियोगिताकाभावः। नीलघटो नास्तीति बुद्धौ नीलत्वघटत्वोभयत्वादिवैलक्षण्येन तयोर्वैलक्षण्यम् अवच्छेकतावैलक्षण्यमेव तद् वैलक्षण्यं साधयेदित्यस्यायुक्तत्वात्।

अवच्छेदकत्वाऽस्वीकारे संयोगेन घटोनास्तीत्यादौ विशिष्टत्वासम्भवेनैकवाक्यत्वासम्भवः। अवच्छेदकत्वस्वीकारे तु संयोगेनेत्यस्य संयोगसम्बन्धावच्छिन्नत्वम् °: तस्य प्रतियोगिनस्सम्बन्धे प्रतियोगितायामन्वयः, प्रतियोगितावच्छेदकस्य

---

णीयते। तदुत्पत्तिनिश्चयश्च कार्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः। तथाहि—कार्यस्योत्पत्तेः प्राक् अनुपलम्भः कारणोपलम्भे सत्युपलम्भः, उपलब्धस्य पश्चात् कारणानुपलम्भादनुपलम्भ इति पञ्चकारण्या धूमधूमध्वजयोः कार्यकारणभावो निश्चीयते इत्यलमधिकेन।

सम्बन्धेऽवच्छिन्नप्रतियोगितायामन्वयस्तथा च संयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन घटवान् अभावः, अवच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन वा घटत्ववानभाव इत्यकामेनापि भवद्भिरवच्छेदकत्वमङ्गीकार्यम् इत्यास्तां स्वरूपसम्बन्धविशेषरूपावच्छेदकत्वप्रबन्धः इति खण्डनपरिशिष्टग्रन्थमतम् ।

अथ ज्ञानस्य सत्त्वं कथमङ्गीक्रियते विषयस्य कथन्न सत्त्वमङ्गीक्रियते, वाक्यात् तथाङ्गीकारे उभयोरेव तत्सम्भवादिति चेन्न ? विधिनिषेधयोर्द्वयोरेव ज्ञानभास्यत्वात् । अन्यथोभावपि न निष्पद्येयाताम् । अनिष्पत्तिरपि तथेत्यकामेनापि ज्ञानसत्वमङ्गीकार्यम् ।

यदि च यथा ज्ञानम्विषयमवभासयति दीपसूर्यवत् तथा विषयोऽपि ज्ञानम्प्रत्युज्जीवयेदिति विषयम्बिना ज्ञानोदयाऽसम्भवेन विषयस्यापि सत्वमवश्यं स्वीकार्यम् उभयोः परस्परापेक्षत्वात् । एवमपि ज्ञानानां सर्वानुस्यूतत्वस्योभयवादिसिद्धत्वात् तस्य प्रामाण्यमावश्यकम् विषयस्य तथाभावान्न सत्वम् ।

अथ विषयत्वेन मिथ्यात्वाभ्युपगमे ज्ञानस्यापि स्वानुव्यवसायभास्यत्वेन विषयत्वापत्तौ ज्ञानस्यापि मिथ्यात्वापत्तिर्दुर्वारा। ज्ञानस्य सत्वम्भाष्यादौ स्पष्टीकृतम् गौतमादिनेत्यादिविशिष्टविचारः खण्डनपरिशिष्टे द्रष्टव्यः ।

देवदत्तो गृहङ्गच्छति—अत्र षट् पदानि सन्ति देवदत्त १ सु २ गृह ३ अम् ४

---

तण्डुलम्पचतात्त्यस्य शाब्दबोधप्रकारः—कर्त्तुर्देवदत्तादेर्देवदत्तत्वेन मांसपिण्डमर्थः प्रतिपदिकार्थं विधानात्तदुत्तरवर्त्तिसुप्रत्त्ययस्य स एवार्थः तण्डुलशब्दस्यतण्डुलत्त्वेन तण्डुलरूपार्थः, तदुत्तरवर्त्त्यम्प्रत्त्ययस्याऽश्रयोऽर्थः, फलाश्रयत्त्वञ्च कर्मत्त्वमनन्यलभ्यो हि शब्दार्थ इति न्यायेन "फलव्यापारयोर्धातुराश्रये तु तिङस्स्मृता" इति वचनेन च फलस्य धातुलभ्यत्त्वादाश्रयमात्रं द्वितीयार्थः, पचधातोः फले व्यापारे च शक्तिः । फलम्विक्लित्त्यादि, व्यापारः फूत्कारत्त्वाधस्सन्तापनत्त्वचुल्ह्युपरिधारणत्त्वादिः । तदुत्तरवर्त्तितिप्प्रत्त्ययस्याश्रयोऽर्थः "लः कर्मणो"तिसूत्रेणाश्रये कर्त्तरि तद्विधानात् । "तान्येकवचनद्विवचनेति" एकवचनसंज्ञकत्वेन "द्व्येकयोर्द्विवचनैकवचने" इत्त्यनेनैकवाक्यतयैकत्त्वमर्थः । "वर्त्तमाने लडि"तिवलाद्वर्त्तमानकालोऽप्यर्थः । तत्र वर्त्तमानत्त्वस्य स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धेन धात्त्वर्थव्यापारेऽन्वयः । संख्यायाश्च स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धेनाश्रयेऽन्वयः । समानप्रत्त्ययोपात्तत्त्वात् । देवदत्तस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन तिबर्थाश्रयेऽन्वयः । सामान्यविशेषयोरभेदान्वय इति सिद्धान्तात् । आश्रयस्य स्वनिष्ठाऽधारतानिरूपिताऽधेयतासम्बन्धेन धात्त्वर्थव्यापारेऽन्वयः । तण्डुलपदार्थस्य स्व-

गम् ९ तिप् ६ पदार्थाश्च देवदत्तत्व १ देवदत्त २ समवाय ३ पुंस्त्वत्त्व ४ पुंस्त्व ५ समवाय ६ एकत्वत्व ७ एकत्व ८ समवाय ९ गृहत्व १० गृह ११ समवाय १२ क्लीबत्वत्व १३ क्लीबत्व १४ समवाय १५ एकत्वत्व १६ एकत्व १७ समवाय १८ कर्मत्व १९ कर्म २० समवाय २१ गमनत्व २२ गमन २३ समवाय २४ कर्तृत्व २५ वर्तमानकाल २६ कर्तृगतैकत्वत्व २७ एकत्व २८ समवाय २९ देवदत्तस्य कर्त्रर्थभेदः ३० अन्यपदार्थस्य गमनक्रियायां कर्मक्रियाभावसम्बन्धश्च ३३ ।

योजना–समवायसम्बन्धावच्छिन्न पुंस्त्वत्त्वनिष्ठप्रकारतानिरूपिता अथ च समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता च या समवायसम्बन्धावच्छिन्ना चैत्रत्वनिष्ठप्रकारतानिरूपिता चैत्रनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना चैत्रत्वावच्छिन्ना चैत्रनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्तमानकालत्वावच्छिन्ना वर्तमानकालनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अभेदसम्बन्धावच्छिन्ना

---

निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन असर्थाश्रयेऽन्वयः । आश्रयस्य च स्वनिष्ठाऽधारतानिरूपिताऽधेयतासम्बन्धेन धात्वर्थफलेऽन्वयः । फलस्य च स्वनिष्ठजन्यतानिरूपितजनकतासम्बन्धेन व्यापारेऽन्वयः । एवञ्च एकत्वत्वावच्छिन्नदेवदत्ताऽभिन्नाश्रयकवर्तमानकालवृत्तितण्डुलनिष्ठकर्मतानिरूपकविक्लित्त्यनुकूलो व्यापार इति शाब्दिकानाम्मतम् । तण्डुलपदार्थस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन असर्थाश्रयेऽन्वयः, आश्रयस्य च स्वनिष्ठाऽधारतानिरूपिताऽधेयतासम्बन्धेन फलेऽन्वयः फलस्य च स्वनिष्ठजन्यतानिरूपितजनकतासम्बन्धेन कृतावन्वयः, कृतेश्च स्वनिष्ठाऽधेयतानिरूपिताधारतासम्बन्धेन प्रथमान्तदेवदत्तादिपदोपस्थाप्येऽन्वयः । आख्यातार्थसंख्यायाश्च स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धेन प्रथमान्तपदोपस्थाप्य एवान्वयः, विशिष्टप्रबन्धश्च तण्डुलनिष्ठकर्मतानिरूपकविक्लित्त्यनुकूलव्यापारजनककृत्याश्रयैकत्वविशिष्टो देवदत्त इति तार्किकाणाम्मतम् ।

विक्लित्त्यनुकूलव्यापाराश्रयाऽभिन्नदेवदत्तनिष्ठकर्मतानिरूपकविषयत्वाऽपत्त्यनुकूलो व्यापारः प्रेरणाविषयः । यज्ञदत्तो देवदत्तेन तण्डुलम्पाचयतीत्यादौ विवेकः । विक्लित्त्यनुकूलव्यापाराश्रयाऽभिन्नदेवदत्तोद्देश्यकस्वत्वकर्तृकन्दानम्प्रेरणाविषयः । समवायसम्बन्धावच्छिन्नप्रीत्त्यनुकूलविषयतासम्बन्धावच्छिन्नप्रीतिरूपो व्यापारोऽभिलष्यतेरर्थः । विषयतासम्बन्धावच्छिन्नप्रीत्त्यनुकूलस्समवायसम्बन्धावच्छिन्नप्रीतिरूपो व्यापारो रुचेरर्थः । मोदकनिष्ठविषयतासम्बन्धावच्छिन्नप्रीतिजन्यसम-

गृहत्वावच्छिन्ना गृहनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्मत्वावच्छिन्ना कर्मनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या निष्ठत्वसम्बन्धावच्छिन्ना कर्मत्वावच्छिन्ना कर्मनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या संयोगत्वावच्छिन्ना संयोगनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अनुकूलत्वसम्बन्धावच्छिन्ना संयोगत्वावच्छिन्ना संयोगनिष्ठा प्रकारता उक्तसकलप्रकारतानिरूपिता या क्रियात्वावच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्यताकशाब्दबोधः ।

नीलो घटः—"जात्याकृतिव्यक्तयस्तु पदार्थः" इति गौतमसूत्रानुरोधेन जातौ आकृतौ समवाये व्यक्तौ च तत्तच्छब्दानां शक्तिस्तथा च त्रितलावच्छेदकता वृत्तिज्ञानीया तात्पर्यज्ञानीया शाब्दबोधीया च । अत्र नीलत्वनीलसमवायघटत्वघटसमवाया अभेदश्च इति ।

अभेदनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेकता तादृशावच्छेदकतानिरूपिता या समवायनिष्ठसांसर्गिकविषयतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिष्ठावच्छेदकतानिरूपिता या नीलत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपिता या नीलनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपिता या घटघटत्वनिष्ठसमवायनिष्ठसांसर्गिकविषयतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपिता या घटत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपिता या घटनिष्ठा विशेष्यता तादृशविशेष्यता-

---

वायसम्बन्धावच्छिन्नप्रीत्याश्रयो देवदत्तः । उपमानभूतपुत्राऽभिन्नछात्रनिष्ठकर्मतानिरूपक उपाध्यायाऽभिन्नाश्रयकाचरणानुकूलो व्यापारः। उपमानभूतप्रासादाऽभिन्नकुट्यधिकरणकभिक्ष्वभिन्नाश्रयकाचरणानुकूलो व्यापारः । प्रासादीयति कुट्यां भिक्षुः ओजायते, उपमानभूतौजस्त्वाऽभिन्नदुर्बलाऽभिन्नाश्रयक आचरणानुकूलो व्यापारः । त्वद्यति, त्वत्कर्मिका देवदत्तकर्तृकेच्छा । अग्न्युद्देश्यकछागसम्बन्धित्वपावयवभेदोऽभिन्नहविस्सम्बन्धित्वत्कर्तृकप्रेपणप्रेरणाविषयः। सुवृष्ट्यभिन्नाश्रयकभविष्यत्कालवृत्तिभवनाऽभावः । यदि सुवृष्टिस्सुराज्यं यज्ञदत्ताऽभिन्नाश्रयकव्यापारजनकदेवदत्तकर्तृको व्यापारः । भाव्यते–वर्तमानकालवृत्तिकटाऽभिन्नाश्रयक उत्पत्तिजनकदेवदत्तकर्तृकव्यापारजनकयज्ञदत्तकर्तृको व्यापार इति । तिङर्थसंख्याप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति तिङ्जन्याश्रयोपस्थितिः कारणम् वैयाकरणानाम् । तिङर्थसंख्याप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति प्रथमान्तपदजन्योपस्थितिः कारणम् नैयायिकानाम् ।

शालिशाब्दबोधः ।

घटोऽस्ति घटाभिन्नकर्तृवृत्तिस्सत्तेति स्थूलार्थः । समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता या घटत्वावच्छिन्ना घटनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना घटत्वावच्छिन्ना घटनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नवर्त्तमानकालनिष्ठप्रकारतानिरूपिता सत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताकशालिशाब्दबोधः ।

## अथ पर्याप्तिपदार्थः ।

पर्याप्तिश्चायमेको घट इमौ द्वावित्यादिप्रतीतिसाक्षिकस्स्वरूपसम्बन्धविशेष इति।

---

पर्याप्तिः--निस्सामान्यत्वे सति विशेषान्यत्वे समवेतत्वमिति प्राञ्चो जातिपदार्थनिरूपणे । यथा हि सर्वेषु घटेषु एकाकारानुगतप्रतीतिसाक्षिकप्रत्यक्षप्रमाणबलेन घटत्वं जातिः सर्वैरङ्गीक्रियते । तत्र घटत्वस्योपरि न घटत्वत्वादिजातिस्वीकारः द्रव्यकिरणावलीग्रन्थे भगवदुदयनाचार्य्यपादैः "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥" इति कारिकोक्तेन अप्रामाणिकानन्तपदार्थकल्पनाविश्रान्त्यभावरूपानवस्थितिदोषस्य जातिबाधकत्वाङ्गीकारात्तत्र जात्यभावस्य युक्तत्वात् । एवञ्च घटत्वे निस्सामान्यत्वं वर्त्तते । निस्सामान्यत्वे सति समवेतत्वं ( समवायसम्बन्धेन वृत्तित्वं ) विशेषपदार्थेऽप्यस्त्यतस्तत्रातिव्याप्तिवारणाय निविष्टं विशेषान्यत्वमपि ( विशेषपदार्थभिन्नत्वमपि ) वर्त्तते समवेतत्वमपि वर्त्तते यतो हि घटत्वं जातिः जातिव्यक्त्योः समवायसम्बन्धाभ्युपगमात् घटत्वं सर्वत्र घटेषु समवायेन वर्त्तते इति समवेतत्वसिद्धावक्षतेः । एवञ्च निस्सामान्यत्वे सति विशेषान्यत्वे सति समवेतत्वं जातेर्लक्षणं घटत्वादिजातिषु सङ्गच्छते । एवमेव तेषाञ्च आकाशत्वमपि जातिः सिध्यति । परन्तु नैयायिकानां नव्यानाम् मते "नित्यत्वे सति अनेकसमवेतत्वं जातेर्लक्षणम्" इति तेषाम्मत आकाशस्य एकत्वात् तन्मात्रवृत्तित्वाच्च आकाशत्वस्य अनेकसमवेतत्वाभावात् ( अनेक निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावात् ) न जातित्वम् इति सिद्धान्तः । अत्र उदयनकारिकायाम् "व्यक्तेरभेदः" इत्यत्र षष्ठ्यर्थो निष्ठत्वम् , न भेदः अभेदः ( भेदाभावः ) एकत्वमिति यावत् । स्वाश्रयीभूतव्यक्तिनिष्ठो भेदाभावः स्वस्य जातित्वे बाधक इति भावः । स्वम् आकाशत्वं तदाश्रयीभूता व्यक्तिराकाशम् तन्निष्ठो भेदो हि आकाशमाकाशञ्च

पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नसूर्यत्वावच्छिन्नविषयकशाब्दबोधो भवतु इत्याकारक एव भगवत्सङ्केतः। न च केवलचन्द्रत्वावच्छिन्नविषयकबोधः पुष्पवन्तपदाद् भवतु इत्याकारकसङ्केतेन केवलचन्द्रस्यापि बोधोऽस्त्विति वाच्यम् ? पुष्पवन्तपदजन्यचन्द्रत्वावच्छिन्नविषयकसूर्य्यत्वावच्छिन्नविषयकबोधत्वपर्य्याप्तविषयतावच्छेदकताकत्वप्रकारकस्यशक्तिग्रहः। उभयधर्म्मप्रकारकबुद्धित्वमेव कार्यतावच्छेदकमिति नैकबोधः, उक्तरीत्या पर्याप्तिनिवेशात्।

---

इत्याकारको न वर्त्तते इति भेदाभावस्य सत्त्वं स्वस्य नाम आकाशत्वस्य जातित्वे बाधकं भवति। व्यक्तेरभेद इत्यस्य चायमर्थोऽवश्यमनुसन्धेयो यत् स्वाश्रयीभूतव्यक्तिप्रतियोगिको भेदाभावस्स एव स्वस्य जातित्वे बाधकः। तथा च आकाशे "आकाशं घटो न" इत्याकारकभेदस्य अथ च "आकाशघटैतदुभयन्नाकाशम्" इत्याकारकभेदस्य च सत्त्वेन अभेदाभावात् आकाशत्वजातेर्बाधो न युक्त इति केचिद् वदन्तः परास्ताः। निष्कर्षश्च—स्वनिष्ठनिरूपकतानिरूपिताधिकरणताश्रयनिरूपितवृत्तितावत्प्रतियोगितानिरूपकभेदो नास्तीति। तथा च निष्ठत्वसम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताभिन्ना सती निरूपकतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तादृशावच्छेदकत्वानिरूपिता अथ च निरूपकतानिष्ठावच्छेदकतानिरूपिता सती अधिकरणतात्वनिष्ठावच्छेदकतानिरूपिता याऽधिकरणनिष्ठावच्छेदकता तादृशावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता सती वृत्तितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता अथ चाधिकरणनिष्ठावच्छेदकतानिरूपिता सती वृत्तितात्वनिष्ठावच्छेदकतानिरूपिता या वृत्तितानिष्ठावच्छेदकता तादृशावच्छेदकताभिन्ना सती प्रतियोगितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तादृशाऽवच्छेदकत्वनिरूपिता अथ च वृत्तितानिष्ठावच्छेदकतानिरूपिता सती प्रतियोगितात्वनिष्ठावच्छेदकतानिरूपिता या प्रतियोगितानिष्ठावच्छेदकता तादृशावच्छेदकताभिन्नभेदत्वानिष्ठावच्छेदकता भिन्नावच्छेदकत्वानिरूपिता अथ च प्रतियोगितानिष्ठावच्छेदकतानिरूपिता सती भेदत्वनिष्ठावच्छेकतानिरूपिता या भेदनिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपितप्रतियोगिताकाभावरूपः। इतरवारकन्यूनवारकपर्य्याप्तिनिवेशद्वये। इतरवारकपर्य्याप्तिमात्रनिवेशे तु निष्ठत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताभिन्ननिरूपकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपकतानिष्ठावच्छेदकताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणतानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणनिष्ठावच्छेदकताभिन्नवृत्तितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितवृत्तितानिष्ठावच्छेदकताभिन्नप्रतियोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगितानिष्ठावच्छेदकताभिन्नभेदत्वनिष्ठावच्छेदकताभिन्ना-

ननु सम्बन्धावच्छिन्नत्वं प्रकारतायाम् विशेष्यतायाम्वा ? यथा नीलो घट इत्यादौ अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताको बोध आहोस्वित नीलत्वावच्छिन्नप्रकारतानिरूपिताभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नविशेष्यताक इति ।

लाघवात्सम्बन्धावच्छिन्नत्वम्प्रकारतायामेव युक्तम् न तु विशेष्यतायान्तथाहि, संयोगेन घटोऽवृत्तिरिति बुद्धिम्प्रति संयोगेन घटवद् भूतलम्, सयोगेन घटवान् पर्वतः संयोगेन घटवद् गृहमित्यादिनिश्चयानां संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेनैकरूपेणैव प्रतिबन्धकत्वे तदभाववत्ताबुद्धिम्प्रतीति लाघवम् ।

न च सामान्यघटत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेनैव प्रतिबध्यप्रतिबन्धकभावोऽस्त्विति वाच्यम् ?

समवायेन घटवान् पट इत्यादिज्ञानानामपि प्रतिबन्धकत्वापत्या सम्बन्धप्रवेश स्यावश्यकत्वात ।

---

वच्छेदकत्वानिरूपिता प्रतियोगिता तादृशप्रतियोगिताकाभावरूपः । न्यूनवाररूपर्याप्तिमात्रनिवेशे तु स्वनिष्ठावच्छेदकतानिरूपितनिरूपकतानिष्ठावच्छेदकतानिरूपिताधिकरणतानिष्ठावच्छेदकतानिरूपित वृत्तितानिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिरूपितभेदस्वनिष्ठावच्छेदकतानिरूपिता या प्रतियोगिता तन्निरूपकाभावरूपः ।

अत्रेदमनुसन्धेयम्--आकाशत्वादेर्जातित्वबाधाय "व्यक्तेरभेदः" इत्याद्युदयनाचार्यकृतकारिकासारगर्भितं जगाद "एकव्यक्तिमात्रवृत्तिस्तु न जातिः" इति विश्वनाथभट्टाचार्यः स्वीये न्यायसिद्धान्तमुक्तावलीग्रन्थे । क्वचिच्च "एकमात्रव्यक्तिवृत्तिस्तु न जातिः" इति पाठस्स च वृत्त्यर्थगौरवक्लेशादुपेक्षणीयः । एकव्यक्तिमात्रवृत्तित्वं जातित्वाभावस्य साधकम् ( अनुमापकम् ) इति भावः ।

तथाहि गगनत्वं दिक्त्वं कालत्वं वा न जातिः एकव्यक्तिमात्रवृत्तित्वात् रूपवत् इत्यनुमानाकारः । एकव्यक्तिमात्रवृत्तित्वञ्च स्ववृत्तित्व स्वभिन्नावृत्तित्वोभयसम्बन्धेन वस्तुविशिष्टत्वम् स्वम् आकाशम् , कालो दिग् वा, तद्वृत्तित्वम् आकाशत्वस्य कालत्वस्य दिक्त्वस्य च अस्तीति प्रथमसम्बन्धसङ्गतिः । एवम् स्वम् आकाशादि तद्भिन्नं घटादि तद्वृत्तित्वं (तन्निरूपितवृत्तित्वाभावः ) अपि आकाशत्वादेरस्तीति द्वितीयसम्बन्धोऽपि सङ्गच्छते (संघटते) इत्येकव्यक्तिमात्रवृत्तित्वस्य ( एकत्वस्य ) सत्त्वेन जातिबाधो युज्यते । स्वम् नीलघटः तद्वृत्तित्वं घटत्वस्य यद्यप्यस्ति तथापि तद्भिन्न(नीलघटभिन्न) पीतघटादावपि घटत्वस्य वृत्तित्वमेवेति द्वितीय·

न च घटत्वावच्छिन्नप्रकारतानिरूपितसंयोगसम्बन्धावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव प्रतिबन्धकत्वमस्त्विति वाच्यम् ?

संयोगेन घटवानिति ज्ञानस्य प्रतिबन्धकत्वानापत्तेः ।

## ननु निरूपितत्वन्नाम किमिति प्रश्नः ।

यत्किञ्चिन्निष्ठनिरूपकतानिरूपितनिरूप्यतावत्वम् ।

यत्किञ्चिन्निष्ठनिरूप्यतानिरूपितनिरूपकतावत्वन्निरूपकत्वम् ।

ननु प्रकारताविशेष्यतयोस्सनिरूपकपदार्थत्वात् प्रकारतानिरूपितविशेष्यता विशेष्यतानिरूपितप्रकारतेत्यस्यास्वीकारे को दोष इति चेन्न ? परस्परन्निरूप्यनिरूपकभावाऽस्वीकारे संयोगेन घटाभाववद् भूतलमिति बुद्धिम्प्रति संयोगेन घटवद् भूतलमिति निश्चयस्य संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वमिव घटवन्महानसम्पटवद्

---

सम्बन्धाभावात् न घटत्वादेरेकव्यक्तिमात्रवृत्तित्वम् । न च आकाशत्वादिवत् जातेर्बाधः । तत्र प्रथमसम्बन्धमनुपादाय द्वितीयमात्रोपादानेऽव्याप्त्यभावेऽपि स्वं घटस्तद्भिन्नः पटादिः तन्निरूपितवृत्तित्वाभावो घटत्वस्येति तस्यापि एकव्यक्तिमात्रवृत्तित्वापत्तौ जातिबाधेऽतिव्याप्त्यापत्तेः । अतस्तदुपादानम् । प्रथमसम्बन्धमात्राभिधानेऽप्यतिव्याप्तिरेव दोषःतथाहि स्वं घटस्तद्वृत्तित्वं घटत्वस्येति एकव्यक्तिमात्रवृत्तित्वस्य सत्वात् घटत्वस्यापि जातित्वाभावापत्तेरिति द्वितीयसम्बन्धनिवेशः ।

तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वम् १ । तद्वत्ताबुद्धिम्प्रति तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकता २ । तद्वत्ताम्बुद्धिम्प्रति तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयत्वेन प्रतिबन्धकता ३ । तद्वत्ताबुद्धिम्प्रति तदसमानाधिकरणधर्मवत्तानिश्चयत्वेन प्रतिबन्धकता ४ । तद्व्यापकतावच्छेदकतया गृहीतधर्मावच्छिन्नाऽभाववत्तानिश्चयत्वेन प्रतिबन्धकता ५ । ह्रदो वह्निमानिति निश्चयम्प्रति ह्रदो न वह्निमानिति निश्चयस्य प्रतिबन्धकत्वमिति प्रथमोदाहरणम् । ह्रदो वह्निमानितिबुद्धिम्प्रति ह्रदो वह्न्यभावव्याप्यवानिति निश्चयस्य प्रतिबन्धकत्वमिति द्वितोयोदाहरणम् । जलवान्वह्न्यभाववानितिनिश्चयविशिष्टस्य जलवान्ह्रद इति निश्चयस्य प्रतिबन्धकत्वमिति तृतीयोदाहरणम् । तद्वत्ताबुद्धिम्प्रति वह्न्यसमानाधिकरणजलवान्ह्रद इति निश्चयस्य प्रतिबन्धकत्वम् । ह्रदो धूमवानितिबुद्धिम्प्रति धूमव्यापकतावच्छेदकतया गृहीतं यद्वह्नित्वन्तादृशवह्नित्वावच्छिन्नाऽभाववान् ह्रद इति निश्चयस्य प्रतिबन्धकत्वम् । कार्यत्वावच्छिन्नम्प्रति तु कामातुराणां कामिनीजिज्ञासा प्रतिबन्धिका । कार्यविशेषम्प्रति तु क्वचित कस्यचित्पदार्थस्य प्रतिबन्धकत्वम् ।

भूतलमिति समूहावलम्बनज्ञानस्यापि ताद्दशनिश्चयत्वेन प्रतिबन्धकत्वापत्तेः । परस्परनिरूप्यनिरूपकभावस्तु विनिगमनाविरहादेव मन्यते प्राज्ञैरिति।

ननु घटसत्वेऽपि घटो नास्तीति प्रयोगस्स्यात् प्रयागीयघटाभावस्येह सत्वात् इति चेत् सत्यम् ? घटपदार्थस्य स्वावच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धेन नञर्थेऽभावेऽन्वयः घटत्वावच्छिन्नप्रतियोगितानिरूपकाभाव इत्यर्थस्य प्रतीतेः ।

ननु

तत्सादृश्यमभावश्च तदन्यत्वन्तदल्पता ।

अप्राशस्त्यम्विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ।। १ ।।

इत्युक्तेर्नञो भेद एवार्थः प्रसिद्ध इति अनील घट इत्यादौ सामानाधिकरण्यानुरोधेन समासघटकनञो भेदवति लक्षणाकथनं युक्ततरम् ।

ननु घटाभाववद्भूतलम् , घटो नास्ति भूतले, घटाऽभाववद् गृहम् , जने न पुण्यम् , अधातुरर्थवत् , इत्यादिस्थलेऽभावस्याधिकरणस्वरूपत्वमेवास्तु तथा च सामानाधिकरण्यमपि सुप्रसिद्धम् पृथक् वाक्यार्थावबोधश्च लाघवम् एवञ्च भेदवति लक्षणा निरर्थिकेति चेत्सत्यम् ? घटाभाववद् भूतलमित्यादावधिकरणाभावयोराधाराधेयभावो न स्यात् अभावस्याधेयस्याधारस्य भूतलस्य चैक्यात् ।

---

दाहत्वावच्छिन्नकार्य्यम् प्रति मणेः प्रतिबन्धकत्वम् ।

विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम् नानुमानिकसामग्र्या इति सिद्धान्तः ।

समानविषयकानुमितित्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम् । भिन्नविषये तु अनुमितिसामग्र्याः प्रबलत्वम् ।

ननु प्रतिबन्धकत्वङ्किमिति प्रश्नः ? कारणपदस्य क्वचित्प्रयोजकपरत्वात्कारणीभूताऽभावप्रतियोगित्वम्प्रतिबन्धकत्वम् । स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावत्वावच्छिन्नकारणताया अवच्छेदको यो धर्मस्तद्वत्त्वम् । अथवा तद्धर्मावच्छिन्नकार्यतानिरूपिताभावत्वावच्छिन्नकारणतानिरूपित स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नावच्छेदकताश्रयधर्मवत्त्वम् । उदाहरणम् ह्रदो वह्निमानिति बुद्धौ ह्रदो न वह्निमानिति निश्चयस्य प्रतिबन्धकत्वम् । ह्रदो वह्निमानित्यनुमितौ कारणीभूतो योऽभावः ह्रदो वह्न्यभाववानितिनिश्चय इति तस्य प्रतिबन्धकत्वम् । कार्यानुकूलकिञ्चिद्धर्मविघटकत्वम्प्रतिबन्धकत्वमिति वा । दाहानुकूलशक्तिविघटकत्वम्मण्यादीनाम् । अत्र मीमांसकमतेन कार्यसहभावेन प्रतिबन्धकत्वन्तु कार्यसहभावेन प्रतिबन्धकाऽभावरूपकारणदिशा प्रबोध्यम् । निश्चयानाम्प्रतिबन्धकत्वम्पञ्चवि-

यदि चाधिकरणपदार्थोऽन्यः अभावपदार्थोऽन्यस्तदाधाराधेयभावसिद्धिरिति विचारात्।

वस्तुतस्तु—घटाभावे घटो नास्ति इति प्रामाणिकव्यवहारानुरोधेन तादात्म्याभेदस्यापि आधाराधेयभावनियामकत्वं क्वचिदस्त्येव। क्वचिदित्युक्तेर्घटे घट इति न भवति अत एव द्रव्ये गुणाद्यभेदवादिनाम्वेदान्तिनाम्मते घटे रूपमिति प्रत्ययस्य निर्वाहः। तदुक्तमद्वैतसिद्धिव्याख्यायाम् लघुसिद्धान्तचन्द्रिकायां घटे रूपमित्यादौ रूपत्वादिरूपेण तादात्म्येनैवाधारतासम्बन्धान्तराऽस्वीकारात्।

---

धम्। उदाहरणानि—तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयत्वेन प्रतिबन्धकता घटो नास्तीत्यादावत्यन्ताऽभाव इति तत्रानेके भेदाः। सामान्यधर्मविशिष्टप्रतियोगिताकाऽभावः सामान्याऽभावः। वैशिष्ट्यञ्च-स्वान्यूनानतिरिक्तवृत्तित्व स्वनिष्ठावच्छेदकतानिरूपितत्वोभयसम्बन्धेन। विशेषधर्मविशिष्टप्रतियोगिताकाऽभावः विशेषाऽभावः। वै०। स्वान्यूनानतिरिक्तवृत्तित्व स्वनिष्ठावच्छेदकतानिरूपितत्वमित्युक्तसम्बन्धद्वयेन। किञ्चिद्धर्मविशिष्टप्रतियोगिताकाऽभावो व्याधिकरणधर्मावच्छिन्नाऽभावः। वैशिष्ट्यञ्च—स्वाश्रयाऽवृत्तित्व स्वनिष्ठावच्छेदकतानिरूपितत्वोभयसम्बन्धेन।

प्रतियोगित्वविशिष्टधर्मावच्छिन्नप्रतियोगिताकाऽभावः विशेषरूपेण सामान्याऽभावः। वैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वाधिकरणवृत्त्यभावाऽप्रतियोगित्वमित्युभयसम्बन्धेन।

सामान्यरूपेण विशेषाऽभावत्वञ्च—प्रतियोगित्वविशिष्टधर्मावच्छिन्न प्रतियोगिताकाऽभावत्वम्। स्वसामानाधिकरण्य स्वाधिकरणवृत्त्यभावाऽप्रतियोगित्वमित्युभयसम्बन्धेन। अभावविषये बहवो नियमास्सम्पद्यन्तेतराम्। अवच्छेदकभेदोऽभावभेदनियामको भवति। विशेषाऽभावकूटानां सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमिति नियमः। अभावप्रत्यक्षत्वावच्छिन्नम्प्रति योग्याऽनुपलब्धिः कारणमिति नियमः। यदि स्याद्घटस्तर्ह्युपलभ्येतेत्येवम्विधः।

एकप्रतियोगिकयोरप्यत्यन्ताऽभावान्योन्याऽभावयोः प्रतियोगितावच्छेदकधर्मप्रतियोगितावच्छेदकसंसर्गभेदाद् बहुत्वम्। प्रतियोगितावच्छेदकधर्मप्रतियोगितावच्छेदकसंसर्गोभयभेदादत्यन्ताऽभावस्य बहुत्वम्। केवलप्रतियोगितावच्छेदकभेदादन्योन्याऽभावस्य बहुत्वम्। एकत्वेऽपि द्वयन्नास्तीतिप्रतीत्या संयोगेन घटवति भूतले समवायेन घटाऽभावः। विशेषणाऽभावप्रयुक्तविशिष्टाऽभावः। विशेष्याऽभावप्रयुक्तविशिष्टाऽभावः। विशेष्यविशेषणोभयाऽभावप्रयुक्तविशिष्टाऽभावश्च। यथा मथुरास्थशूद्रे प्रयागस्थत्वविशिष्टशूद्रत्वाभावः प्रयागस्थत्वरूपविशेषणाभावप्रयुक्तो विशिष्टा-

न च येनेन्द्रियेण यद्द्रव्यक्तिर्गृह्यते तेनैवेन्द्रियेण तदाश्रयीभूता जातिस्तदभावश्च गृह्यते इति नियमानुरोधेन जले गन्धो नास्ति गन्धाभाववद् जलम् इत्यादौ अधिकरणाभावयोरैक्यात् घ्राणेन्द्रियग्राह्यत्वानुपपत्तिः घ्राणरसनश्रवणानान्द्रव्यग्रहणे सामर्थ्याभावादिति वाच्यम् ? जलगन्धाभावयोरैक्येऽपि जलात्मकगन्धाभावस्य जलरहितकेवलगन्धाभावत्वेन रूपेण सामान्येन विनिगमनाविरहाद् घ्राणेन्द्रियग्राह्यत्वन्दुर्वारमेवेति अभावस्याधिकरणस्वरूपत्वे न कोऽपि दोष इति विशिष्टकल्पनात् ।

न च नञो भेदवति लक्षणा किमर्थमाश्रीयते मास्तु सामानाधिकरण्यम् भेदस्य निपातार्थतया समासघटकपदार्थतया च भेदसम्बन्धेन नामार्थेऽन्वये सति दोषाभावोऽत एव निपातातिरिक्तप्रातिपदिकार्थयोः क्रियानिपातातिरिक्तप्रातिपदिकार्थयोश्च साक्षाद् भेदसम्बन्धेनान्वयोऽव्युत्पन्न इति नियमविरोधोऽपि नेति वाच्यम् ? जले नीलभेद इतिवत् जलेऽनील इत्यत्रापि नीलभेदान्वयबोधेन भवितव्यम् । नच समानविभक्तिकविशेष्यविशेषणबोधकपदसमभिव्याहारः कारणम्वाच्यम् ? अभेदान्वयबोध एव तादृशनियमस्य स्वीकारात् ।

---

भावः । मथुरास्थब्राह्मणे मथुरास्थत्वविशिष्टशूद्रत्वाभावश्च विशेष्याभावप्रयुक्तो विशिष्टाभावः । तत्र मथुरास्थत्वरूपविशेषणस्य सत्त्वेऽपि शूद्रत्वावच्छिन्नविशेष्यत्वाभावात् । काशीस्थकन्धहारे च मथुरास्थत्वविशिष्टशूद्रत्वाभावः विशेषणविशेष्यैतदुभयाभावप्रयुक्तः । तत्र हि मथुरास्थत्वरूपविशेषणस्य शूद्रत्वावच्छिन्नविशेष्यस्य चाभावात् इति विशिष्टाभावस्य त्रैविध्यं समन्वेयम् ।

घटत्वेन पटो नास्तीत्यादिप्रतीत्या व्यधिकरणधर्मावच्छिन्नाऽभाव इति केचित् । केचित्तु घटत्वेन पटो नास्तीति प्रतीतौ पटवृत्तिघटत्वाऽभावमेव केवलान्वयिनम्विषयम्मन्यन्ते । प्राभाकरास्तु नाऽभावः पदार्थान्तरम् यस्मिन्भूतलात्मकेऽधिकरणे घटो नास्ति भूतल इति प्रत्ययस्तत केवलाधिकरणादेव नास्तीति व्यवहारोपपत्तावभावस्य न पदार्थान्तरत्वम् । किन्त्वधिकरणात्मक एवाऽभाव इति ।

अथ किन्तावत्सम्बन्धत्वमिति प्रश्नः । न्यायमते सम्बन्धिभिन्नत्वे सति सम्बन्ध्याश्रितत्वम् सम्बन्धत्वम् । स्वभिन्नसम्बन्ध्याश्रितस्वभिन्नप्रतियोगिकस्सम्बन्ध इति केचित् । यथा घटभूतलयोस्संयोगः प्रत्यक्षस्थक इन्द्रियार्थसन्निकर्षः । किञ्च सम्बद्व्यवहारहेतुत्वं सम्बन्धत्वम् । किञ्च यत्किञ्चित्पदार्थानुयोगिकत्वविशेषत्वं सम्बन्धत्वम् । सांसर्गिकविषयताश्रयत्वं सम्बन्धत्वम् ।

सम्बन्धो द्विविधः वृत्तिनियामकः वृत्त्यनियामकश्च । तत्र वृत्तिनियामकश्च संयोगसमवायस्वरूपकालिकादिभेदेनानेकविधः । वृत्त्यनियामकोऽपि विषयविषयिभावप्रति-

वस्तुतस्तु—विनिगमनाविरहादभेदान्वयबोधे भेदान्वयबोधे च समानविभक्तिकविशेष्यविशेषणवाचकपदसमभिव्याहारज्ञानस्य हेतुत्वात् उक्तप्रयोगानुपपत्या भेदान्वयदोषो विभावनीयः इति प्रश्नः ।

---

योग्यनुयोगिभावाधाराधेयभावस्वस्वामिभावतादात्म्यादिभेदेनानेकविधः । प्रथमे संयोगसमवायौ मुख्यौ नान्ये तद्भिन्नास्तु गौणा एव । वृत्तिनियामकश्च कदाचित्क्वचित् विरोधितानियामकोऽपि भवति । तथाहि—साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताबुद्धिम्प्रति येन सम्बन्धेन साध्याऽभावप्रकारकनिश्चयऽप्रतिबन्धकस्सः । यथा संयोगेन पर्वते वह्निसाधने दैशिकविशेषणतासम्बन्धः । अयं साध्यवत्ताग्रहविरोधितानियामकसम्बन्ध इति रीतिः । धर्मशास्त्रे तु-गोत्रजत्वादिस्सम्बन्धः । यथा योनिसम्बन्ध इत्यादौ सम्बन्धशब्दस्यार्थं इत्याहुः । नीतिशास्त्रज्ञास्तु नृणां संसर्गस्सम्बन्ध इति । स च त्रिविधः विद्याजन्यः योनिजन्यः प्रीतिजन्यश्च ।

श्लोकः—सम्बन्धस्त्रिविधऽपुंसां विप्रेन्द्र जगतीतले ।
विद्याजो योनिजश्चैव प्रीतिजश्च प्रकीर्त्तितः ॥
मैत्रं तु प्रीतिजम्प्रोक्तं स सम्बन्धस्सुदुर्लभः ।

समृद्धिस्सम्बन्ध इति केचित । हितं सम्बन्ध इति केचित ।
काव्यशास्त्रज्ञास्तु सम्यग् बन्धस्सम्बन्ध इत्याहुः ।

किञ्च वैयाकरणास्तु द्विष्ठत्वे सति सम्बन्धिद्वयभिन्नत्वं विशिष्टबुद्धिनियामकत्वे सतीत्यपि देयम् । तत्र द्विष्ठत्वञ्च पदार्थद्वयवृत्तित्वमात्रमपि तु द्वित्वविशिष्टत्वम् । वैशिष्ट्यञ्च-स्वाश्रयवृत्तित्वस्वाश्रयाश्रयवृत्तित्वान्यतरसम्बन्धेन । प्रथमसम्बन्धफलम् यत्र प्रकारतावच्छेदकविशेष्यतावच्छेदकयोरैक्यन्तत्रत्यसम्बन्धद्विष्ठत्वम् । द्वितीयसम्बन्धनिवेशादभेदस्य तदुपपत्तिरिति ।

समभिव्याहृतत्वम् एकवाक्यतापन्नत्वम् । उदाहरणम् पदानां समभिव्याहृतत्वमाकाङ्क्षा इत्यादौ समभिव्याहृतत्वशब्दस्यार्थः ।

किञ्च-साहित्यं समभिव्याहृतत्वम् । । किञ्च-सहोच्चरितत्वं समभिव्याहृतत्वम् । अव्यवहितत्वं समभिव्याहृतत्वमिति वा ।

ननु यत्र कुत्रचित् साक्षात्सम्बन्ध इति व्यवहारः । अत्र किन्तावत् साक्षात्त्वम् इतरपदार्थाऽप्रतियोगिकत्त्वे सति उद्दिष्टपदार्थप्रतियोगिकत्त्वम् साक्षात्त्वम् । साक्षात्सम्बन्धश्च संयोगसमवाय एतदन्यतररूपः । साक्षात्सम्बन्धत्वञ्च-पारम्पर्य्यरहितत्वम् । यथा शब्दो द्रव्यम् साक्षात्सम्बन्धेन इन्द्रियग्राह्यत्वात् घटवत् इत्यादौ साक्षात्सम्बन्धशब्दस्यार्थः ।

साक्षात्कारत्वञ्च-साक्षात्करोमीत्यनुगतप्रतीतिसाक्षिको जातिविशेषः । लौकिकसन्निकर्षजन्यप्रत्यक्षत्वं साक्षात्कारत्वम् इति केचित् ।

प्रातिपदिकार्थप्रतियोगिकात्यन्ताभावबोधे ( स्वरूपेण ) सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहारः कारणम् इति नियमानुरोधेन जलन्नानीलमिति वाक्यजन्यबोधानन्तरं जलमनीलमिति वाक्याच्छाब्दबोधापत्तिः ।

पूर्ववाक्ये सप्तम्यन्तानुयोगिवाचकपदविरहेणात्यन्ताभावबोधाभावेनानायस्या नीलभेदभेदबोधस्यैवाभ्युपगन्तव्यतया तस्य च जले नीलभेदबुद्धौ विरोधाभावेन प्रतिबध्यप्रतिबन्धकभावानुपपत्तेः । भेदवति लक्षणायान्तु नीलभेदवद्भेदप्रकारको बोधस्तादात्म्येन नीलभेदवत्प्रकारकधियम्प्रतिरुणद्धीति दोषाभावः । किञ्च नीलो मणिर्गुणस्सोऽस्त्रेति वाच्ये तच्छब्देन नीलपदार्थस्य परामर्शवारणाय तच्छब्दस्य वृत्त्युपस्थाप्यैकदेशपरामर्शकत्वन्नास्तीतिनियमस्तथा च अनीलं जलं सोऽभाव इत्यादौ नञो भेदार्थकत्वादेकदेशत्वाभावेन भेदवति लक्षणाभावेन तच्छब्देन भेदपरामर्शकत्वापत्तेः । भेदवति लक्षणायान्तु एकदेशत्वाद् भेदस्य न परामर्शः । वस्तुतस्तु—

नीलभेदवद्भिन्नं जलम्प्रमेयमित्याकारकनीलभिन्नभेदविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षस्य अनीलं जलमित्याकारकशाब्दबोधस्य च यत्र सामग्री तत्रोक्तप्रत्यक्षस्य वारणाय दर्शितशाब्दबोधसामग्र्या प्रतिबन्धकत्वं कल्पनीयं प्रतिवादिनेति महागौरवम् ।

वस्तुतस्तु—

सामानाधिकरण्यस्य समानलिङ्गकत्वव्यापकतया तदभावे व्याप्यस्याप्यभाव-

---

साक्षान्माता साक्षाद् भगिनीत्यादौ साक्षाल्लक्ष्मीरियम्बधूरित्यादौ च "साक्षात् प्रत्यक्षतुल्ययोरिति" कोशस्वरसः ।

ननु तत्र स्वरूपसम्बन्ध इति व्यवहारः । किन्तावत्स्वरूपसम्बन्धत्वमिति प्रश्नः । अनुयोगिप्रतियोग्यन्यतरस्वरूपसम्बन्धविशेषत्वं स्वरूपसम्बन्धत्वम् । अथवा धर्मिद्वयात्मकत्वं स्वरूपसम्बन्धत्वम् । अथवा षट्पदार्थातिरिक्तभावरूपपदार्थविशेषत्वं स्वरूपसम्बन्धत्वम् । किञ्च सम्बन्धान्तरेण विशिष्टप्रतीतिजननाऽयोग्यत्वं स्वरूपसम्बन्धत्वम् । यथा भूतले घटो नास्तीत्यादौ घटाऽभावादेर्भूतलेन सम्बन्धः ।

स्वरूपसम्बन्धश्च द्विविधः केवलस्वरूपः विशेषणता चेति । तत्र प्रथमः भावाऽभावान्यतरप्रतियोगिकः यथा आधेयत्वप्रतियोगित्वादीनां सम्बन्धः । द्वितीयस्त्रिविधः दैशिकविशेषणता१ दिक्कृतविशेषणता१ कालिकविशेषणता३ चेति । तत्राद्यश्चाभावमात्रप्रतियोगिकः । यथा भूतलादिना घटाऽभावादीनां सम्बन्धः । द्वितीयतृतीयौ तु दिक्कालानुयोगिकौ जन्यमात्रप्रतियोगिकौ । यथा गन्धघटादीनां सम्बन्धौ दिक्कालाभ्याम् । इमावेव सर्वाधारताप्रयोजकसम्बन्धौ इति व्यवह्रियते ।

प्रसक्तौ जलमनीले इत्यादेरपि साधुताप्रसङ्ग इति सामानाधिकरण्योपपत्तये भेदवति लक्षणाङ्गीकर्त्तव्येति विशिष्टन्तरवम् ।

घटवद् भूतलमिति ।

संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्न-भूतलत्वावच्छिन्नविशेष्यताकश्शाब्दबोधः ।

घटाभाववद् भूतलम् ।

संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्ना-भावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितेति । किञ्च स्वरूपसम्बन्धा-वच्छिन्नाभावत्वावच्छिन्नविशेष्यताऽभिन्ना याऽभावनिष्ठा प्रकारतेति । किञ्च संयोग-सम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नाभावत्वाव-च्छिन्नविशेष्यतासमानाधिकरणप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताकशा-लिशाब्दबोधः । इति स्थूलार्थः ।

संयोगसम्बन्धावच्छिन्नसमवायसम्बन्धावच्छिन्न घटत्वनिष्ठनिरवच्छिन्नावच्छे-दकतानिरूपिता या स्वरूपसम्बन्धावच्छिन्ना भूतलत्वनिष्ठा निरवच्छिन्नाऽवच्छेद-कता तादृशावच्छेदकतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृशविशेष्यताकशा-लिशाब्दबोधः ।

संयोगसम्बन्धावच्छिन्नसमवायसम्बन्धावच्छिन्नघटत्वनिष्ठा या निरवच्छिन्ना-ऽवच्छेदकता तादृशाऽवच्छेदकतानिरूपिता या घटनिष्ठा प्रकारता तादृशप्रकारता-निरूपिता प्रतियोगित्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता या स्वरूपसम्बन्धावच्छिन्नाऽभावत्वनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपिताऽभावनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या समवायसम्बन्धा-वच्छिन्ना भूतलत्वनिष्ठा निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृशविशेष्यताकशालिशाब्दबोधः । विपरीतो वा—

घटाभाववद्भूतलम् ।

भूतलत्वनिष्ठा या समवायसम्बन्धावच्छिन्ना निरवच्छिन्नाऽवच्छेदकता तादृ-

---

प्रकारतासंसर्गतावादिनौ—"षष्ठी शेषे" इतिपाणिनीयसूत्रेण षष्ठ्या विधानात्स्वत्वं षष्ठ्यर्थस्तस्य पदार्थत्वात्प्रकारतया भानम् । पदनिष्ठशक्त्युपस्थाप्यस्य प्रकारतयैव भानमिति नियमः । पदोनुपस्थितस्य संसर्गतया भानमिति नियमः । शक्तम्पदमिति

शाऽवच्छेदकतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या स्वरूपसम्बन्धावच्छिन्नाऽभावत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या अभावनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारत्वावच्छिन्ना तद्भिन्ना तत्समानाधिकरणा या या प्रतियोगिनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या समवायसम्बन्धावच्छिन्ना घटत्वनिष्ठा निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता या घटनिष्ठा प्रकारता तादृशप्रकारताकशालिशाब्दबोधः। भूतले घटो नास्ति—

---

परिभाषा सार्वजनीना। शक्तिरस्त्यस्मिन्निति विग्रहे "अर्श आदिभ्योऽजि"त्यचि "यस्येतिचे"तीकारलोपः । पदशब्दो द्विविधः साङ्केतिकः यौगिकश्चेति। "सुप्तिङन्तम्पदमि"तिसूत्रेण साङ्केतिकः। पद्यते गम्यतेऽर्थोऽनेनेति पदम्वाक्यमित्यर्थः। नीलो घट इत्यत्राऽभेदसम्बन्धावच्छिन्ननीलत्वनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपिताऽवच्छेद्यतावती या नीलनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या घटत्वनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपिताऽवच्छेद्यतावती घटनिष्ठा विशेष्यता तादृशविशेष्यताकशालिशाब्दबोधेऽभेदस्य संसर्गमर्यादया भानन्न तु प्रकारतया । उदाहरणम् राजपुरुषः अत्र राजपदार्थस्य निरूपितत्वसम्बन्धेन षष्ठ्यर्थस्वत्वेऽन्वयस्तस्य स्वत्वस्याश्रयत्वसम्बन्धेन पुरुषेऽन्वयस्तथा च निरूपितत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपिताश्रयत्वसम्बन्धावच्छिन्नस्वत्वत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबोधः । अथवा निरूपितत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितस्वत्वनिष्ठविशेष्यतासमानाधिकरणप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकः। अथवा निरूपितत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितस्वत्वत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबोधः । अथवा निरूपितत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितस्वत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबोधः। अथवा निरूपितत्वसम्बन्धावच्छिन्ना या राजत्वनिष्ठा निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशावच्छेद्यतावती या राजनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या स्वत्वत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्ना स्वत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या पुरुषत्वावच्छिन्ना पुरुषनिष्ठा विशेष्यता तादृशविशेष्यताकशालिशाब्दबोधः। राजनिष्ठा प्रकारता राजत्वनिष्ठा प्रकारतावच्छेदकता प्रकारतावच्छेदकताऽवच्छेदकता समवाये इति प्रकारतावादिप्रकारः। संसर्गतावादः न स्वत्वं षष्ठ्यर्थः किन्त्वाकांक्षाभास्यसंसर्गः।

घटो नास्ति भूतले ।

उद्देश्यत्वाख्यायाम्विधेयतायाम्विशेष्यतासम्बन्धः विधेयत्वाख्यविषयतायाम्प्रकारतासम्बन्धः ।

"पर्वतो वह्निमान् , पर्वते वह्निः, पर्वत उद्देश्यता वह्नौ विधेयता—"इको यणचि" इङ्निष्ठोद्देश्यतायाम्विशेष्यतासम्बन्धः, यण्निष्ठविधेयतायाम्प्रकारतासम्बन्धः ।

---

तथा च स्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताक इति । न च संसर्गतावादे स्वत्वस्य षष्ठ्यर्थत्वाऽभावेन "षष्ठी शेष" इत्यस्याऽऽप्रवृत्त्या राज्ञ इत्यादौ षष्ठ्येव दुर्लभेति वाच्यम् ? विषयता त्रिविधा प्रकारताख्या विशेष्यताख्या संसर्गताख्या च । षष्ठ्यर्थत्वेऽपि संसर्गताख्यविषयतयैव भानन्न तु प्रकारताख्यविषयतया निरूपितत्वादिसम्बन्धाकल्पनेन लाघवात् । पदत्रयादुपस्थितित्रयाऽकल्पनाच्च ।

तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वमिति नियमानुरोधेन प्रतिबध्यप्रतिबन्धकभावविचारे उपस्थितित्रयस्य कार्य्यकारणभावकोटाव प्रवेशेन विशेषलाववाऽदराच्च ।

न च "प्रकृतिप्रत्ययौ सहार्थम्ब्रूतस्तयोः प्रत्ययार्थः प्रधानमि"तिव्युत्पत्तिविरोधात्कथं संसर्गतया भानमिति वाच्यम् ? प्रत्ययार्थः प्रधानमित्यत्र प्रधानपदम्प्रकारतान्यविषयतावत्परमित्यर्थेनाऽविरोधात् ।

सामान्यपर्य्याप्तिरिति–अयमेको घटः अयमेको घटः इमौ द्वावित्यादिप्रतीतिसाक्षिकस्स्वरूपसम्बन्धविशेषः । उदाहरणम् घटपटयो रूपगन्धावित्यादौ द्वित्वपर्याप्तिः । तस्यार्थः अयमेको घटः अयमेको घट इति नानैकत्वावगाहिन्या अपेक्षाबुद्धिजन्यः । इमौ द्वावित्यादिप्रतीतिप्रमाणकद्वित्वस्वरूपसम्बन्धविशेषः । द्वित्व एव पर्याप्तिसम्बन्धता स्वीक्रियते । द्वित्वम्पर्याप्तिसम्बन्धेन द्वयोरेव, त्रित्वम्पर्याप्तिसम्बन्धेन त्रिष्वेव न प्रत्येकस्मिन् । न च प्रत्येकावृत्तेस्समुदायावृत्तित्वम् न ह्यवयवापर्याप्तधर्मस्य समुदाये पर्याप्तिः इति न्यायविरोध इति वाच्यम् ? समवायसम्बन्धेनैव प्रत्येकावृत्तेस्समुदायाऽवृत्तित्वम् न तु पर्य्याप्तिसम्बन्धेन पर्याप्तिसम्बन्धश्च विशिष्टबुद्धिनियामकस्सम्बन्धः । समवायेन गुणो गुणस्याऽसत्त्वेऽपि चत्वारो गुणा इति प्रतीत्या गुणादिसंख्यासत्त्वनियामकोऽपि तादृशस्सम्बन्धः ।

पर्याप्तिर्द्विविधा ।

अर्द्धपर्याप्तिः पूर्णपर्याप्तिश्च––

यत्राधिकस्य निरासार्थम्पर्याप्तिर्या निवेश्यते सा अर्द्धपर्य्याप्तिः । यथा

भूतलनिरूपितवृत्तित्वाभाववत्सत्ताकर्तृको घटः, भूतलनिरूपितवृत्तित्वाभाववद्घटकर्तृका सत्ता। भूतलनिरूपितवृत्तित्ववद्घटकर्तृकसत्ताभावः। भूतलनिरूपितवृत्तित्ववद्घटकर्तृकसत्ताप्रतियोगिकोऽभावः।

---

पर्वतो वह्निमानित्यादौ साध्यतावच्छेदकवह्नित्वनिष्ठा पर्याप्तिः साध्याभाववद्वृत्तित्वादिरूपे व्याप्यलक्षणे साध्याऽभावपदेन साध्यतावच्छेदकपर्याप्त्यवच्छेदकताकप्रतियोगिताकाऽभावः। पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले महानसीयवह्न्यभाववारणाय विवक्षणीयः। एवं सम्बन्धादिभेदेनावच्छेदकताभेदान्महानसीयवह्न्यभावप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतापर्याप्तेः साध्यतावच्छेदकवह्नित्वेऽपि सत्त्वेन तद्वारणोऽसम्भवः। अतस्साध्यतावच्छेदकपर्याप्त्यवच्छेदकताकेत्यनेन साध्यतावच्छेदकनिष्ठावच्छेदकताभिन्नावच्छेदकत्वाऽनिरूपकधर्मनिरासः।

द्वितीया तु यत्र न्यूननिवारणार्थं पर्याप्तिर्या निवेश्यते सा पूर्णपर्याप्तिः।यथा पर्वतोमहानसीयवह्निमानित्यादौ साध्यतावच्छेदकीभूतमहानसीयत्वविशिष्टवह्नित्वनिष्ठा पर्याप्तिः। अयमाशयः, पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकारिताशाल्यनुमितित्वव्यापकप्रतिबध्यतेत्यादिहेत्वाभासलक्षणे पर्वतो महानसीयवह्निमानित्यत्र पर्वतो वह्निमानित्यनुमितेरपि तादृशानुमितित्वापत्त्या तत्रत्यबाधे व्याप्तिवारणाय साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताप्रकारताकपक्षविशेष्यकानुमितित्वव्यापकत्वम् इति विवक्षणे च उभयत्वप्रत्येकानतिरिक्तम् इति न्यायेन शुद्धवह्नित्वेऽपि साध्यतावच्छेदकतापर्याप्तेस्सत्त्वेन पुनस्तद्दोषापत्त्या साध्यतावच्छेदकताव्यापकतावच्छेदकताप्रकारताकपक्षविशेष्यकानुमितित्वव्यापकप्रतिबध्यतेत्यादि विवक्षणीयम्। तेन पर्वतो वह्निमानितिज्ञानीयप्रकारतारूपन्यूनधर्मव्युदास इति।

अनुयोगितेति--स्वरूपसम्बन्धविशेषोऽनुयोगिता। भूतले घट इत्यादौ भूतले घटसत्तादशायां भूतलनिष्ठा भूतलस्वरूपा संयोगसम्बन्धस्यानुयोगिता। अभावत्वात्मिकाऽनुयोगिता यथा घटो नास्तीत्यादौ घटनिष्ठप्रतियोगितानिरूपिताऽनुयोगिताऽभावे। अनुयोगिता स्वरूपसम्बन्धविशेष इति केचिन्नैयायिकाः।

अखण्डोपाधिरनुयोगितेति यथार्थवादिनः।

अनुवादकत्वञ्च—गृहीतग्राह्यनुभवमात्रजनकत्वम्, स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्त्तिस्वसमानाकारकनिश्चयविषयविषयकतद्विशेष्यकतत्प्रकारकानुभवमात्रजनकत्वम्वा इति केचित्।

नन्ववच्छेदशब्दार्थः क इति प्रश्नः। प्रतियोगित्वमवच्छेदत्वम् १। उदाहरणम् "अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनम् कु० ३ श्लो० २२ टी०" अवच्छेदत्वम्व्याप्तित्वम् २। यथा पक्षतावच्छेदकावच्छेदेन साध्यसिद्धावित्यादौ साध्यनिरू

वस्तुतस्तु भूतले घटः ।

भूतलनिरूपितवृत्तित्ववान् घटः ।

भूतलनिरूपितवृत्तित्ववद्घटप्रतियोगिकोऽभावानुयोगिको बोधः घटपदार्थस्यानुयोगितासम्बन्धेनाऽभावेऽन्वयः ।

---

पिता पक्षतावच्छेदकनिष्ठो व्याप्तिः । अत्र व्यापकत्वमपि अवच्छेदशब्दस्यार्थः सम्भवति । तथा च पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यसिद्धाविति बोधः । इयत्ताकरणत्वमवच्छेदत्वम् ३ । यथा अग्रावच्छेदेन कपिसंयोगः । मूलावच्छेदेन कपिसंयोगाऽभाव इत्त्यादौ । किञ्च अवधारणत्वमवच्छेदत्वम् । तथाहि—

संयोगो विप्रयोगश्च साहचर्य्यम्विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ १ ॥
सामर्थ्यमौचितीदेशः कालो व्यक्तिस्स्वरादयः ।
शब्दार्थस्याऽनवच्छेदे विशेषस्मृतिहेतवः ॥ २ ॥

इत्त्यादौ शब्दार्थस्याऽनवच्छेदे सन्देहे तदपाकरणद्वारा विशेषार्थनिर्णायका इति तदर्थः । किञ्च इयत्ताकरणसाधनत्वमवच्छेदत्वम्वा ५ । यथा अग्रे वृक्षः कपिसंयोगी न मूल इत्त्यादौ संयोगादेरव्याप्यवृत्तिनियामको वृक्षैकावयवो मूलाग्रादिप्रदेशः । अथवा चत्त्वरे गौर्नास्तीत्त्यादौ एतत्कालोऽप्यवच्छेदो भवति । अस्मिन्नर्थेऽवच्छिद्यतेऽनेनेति करणघञन्तोऽवच्छेदशब्दः । तेनावच्छेदशब्दार्थोऽप्यत्र सम्भवति । सङ्कोचत्त्वमवच्छेदत्त्वम्वा ६ ।

...न्ववच्छेदकत्त्वङ्किमिति विशेषप्रश्नः । विषयतात्मकत्त्वमवच्छेदकत्त्वम् स्वरूपसम्बन्धविशेषत्त्वमिति प्रथमलक्षणम् १ । यथा पर्वतो वह्निमानित्त्यनुमित्त्यात्मकज्ञानीयवह्निनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकत्त्वम्पर्वतत्त्वस्य पर्वते वह्निसाधने । स्वाश्रयजन्यत्त्वमवच्छेदकत्त्वमिति द्वितीयलक्षणम् २ । स्वाश्रयविशेषणत्त्वमवच्छेदकत्त्वमिति वा लक्ष० ३ । यथा धात्त्वर्थतावच्छेदकफलशालित्त्वङ्कर्मत्त्वमित्त्यादौ फले धात्त्वर्थताया अवच्छेदकत्त्वम् । स्वन्धात्त्वर्थता तदाश्रयो व्यापाररूपो धात्त्वर्थस्तज्जन्यत्त्वम्फले इति समन्वयः । वैयाकरणास्तु—फलावच्छिन्नव्यापार इत्त्यादौ फलसम्बन्धिव्यापार इत्त्यर्थोऽनुभवगम्यस्तथा च सम्बन्धे एवावच्छेदकत्त्वम्ब्रुवन्ति । व्यापकत्त्वमवच्छेदकत्त्वम् इति चतु० ल० ४ । यथा पर्वतो वह्निमानित्त्यादौ पर्वतत्त्वावच्छेदेन वह्नौ साध्ये पर्वतत्त्वव्यापकवह्निप्रतियोगिकसंयोगत्त्वस्यावगाहमानं संसर्गतावच्छेदकत्त्वम् । अत्र पर्वतत्त्वव्यापकवह्निप्रतियोगिकसंयोगस्याऽप्रसिद्ध्या तादृशसंयोगत्त्वे संसर्गताया अवच्छेदकत्त्वन्न भासते अपि तु केवले संयोग एव । पर्वतत्त्वव्यापकत्त्वं संसर्गतावच्छेदकत्त्वेन धर्मेण । प्रमाणञ्च अवच्छे-

भूतलत्वनिष्ठसमवायसम्बन्धावच्छिन्नप्रकारतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृशविशेष्यत्वाभिन्ना विशेष्यतात्वावच्छिन्ना तादृशविशेष्यतासमानाधिकरणा वा या प्रकारता तादृशप्रकारतानिरूपिता या सप्तम्यर्थवृत्तित्वत्वावच्छिन्न स्वरूपसम्बन्धावच्छिन्नप्रकारता तादृशप्रकारतानिरूपिताऽभावत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तदभिन्ना तत्समानाधिकरणा वा याऽभावनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारत्वाभिन्ना तदवच्छिन्ना तत्समानाधिकरणा वा या प्रतियोगिनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नघटत्वनिष्ठा या प्रकारता तादृशप्रकारताशालिशाब्दबोधः ।

घटो नास्ति भूतले ।

---

दककोटिप्रविष्टानाम्पदार्थानामप्यवच्छेदकत्वमिति नियमात् । व्याप्यत्वमवच्छेदकत्वम् । व्याप्यत्वमित्यस्य स्वव्यापकतत्कत्वमित्यर्थ इति पञ्चमलक्षणम् ५ । उदाहरणम् यद्रूपावच्छिन्नविषयतानिरूपिता विषयिता अनुमितिप्रतिबन्धकतावच्छेदिका तद्रूपावच्छिन्नत्वमिति हेत्वाभाससामान्यलक्षणे ह्रदो न वह्निमानिति निश्चयीयविषयितायां ह्रदो वह्निमानिति अनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताया अवच्छेदकत्वम् । किञ्च स्वव्यापकतत्कान्यत्व तत्सामानाधिकरण्य एतदुभयाऽभाववत्त्वमवच्छेदकत्वमिति षष्ठं लक्षणम् ६ । अत एव व्यधिकरणधर्मस्याऽपि प्रतियोगितावच्छेदकत्वं सिध्यति । किञ्च तदधिकरणाऽवृत्तित्त्वेन प्रमाविषयत्वमवच्छेदकत्वम् इति सप्तमं लक्षणम् ७ । उदाहरणम्—घटत्वेन पटो नास्तीत्यादौ घटत्वे पटनिष्ठप्रतियोगिताया अवच्छेदकत्वम् । किञ्च—विशेषणत्वमवच्छेदकत्वमिति अष्टमं लक्षणम् ८ । यथा वक्तृज्ञानावच्छेदकतयेत्यादौ । नियामकत्वमवच्छेदकत्वमिति नवमलक्षणम् ९ । अत्र किञ्चिद्विलक्षणम् । सामान्यतोऽवच्छेद्यावच्छेदकभावो द्विविधः । स्वरूपसम्बन्धरूपः व्याप्यव्यापकभावश्च । प्रथमोदाहरणम् इदानीं चत्वरे गौर्नास्तीति तत्र एतत्कालगवाऽभावयोरवच्छेद्याऽवच्छेदकभावः । अत्र एतत्कालावच्छेदेन एतस्मिन्काले गवाऽभाव इति शाब्दबोधः । अथवा मूलावच्छिन्नो-वृक्षः कपिसंयोगीत्यादौ मूलादिसंयोगाद्योरवच्छेद्याऽवच्छेदकभावः ।

द्वितीयोदाहरणम् पृथिवी रूपवतीति अत्र रूपपृथिवीत्वयोरवच्छेद्यावच्छेदकभाव इति । पृथिवीत्वव्यापकं रूपमिति शाब्दबोधात् व्याप्यव्यापकरूपावच्छेदकत्वं सिद्ध्यति ।

विषयता त्रिविधा प्रकारताख्या विशेष्यताख्या संसर्गताख्या च । एषा च विष-

समवायसम्बन्धावच्छिन्नघटत्वनिष्ठनिरवच्छिन्नप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यतात्वावच्छिन्ना तादृशविशेष्यताऽभिन्ना वा या घटनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणा या प्रकारता तादृशप्रकारतानिरूपिता या नञर्थाभावत्वावच्छिन्नाऽभावनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तद्भिन्ना वा या अभावनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्ना विशेष्यता तादृशप्रकारतानिरूपिता या समन्यर्थवृत्तित्वस्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना विशेष्यता तादृशविशेष्यतासमाना-

---

यता विविधस्वरूपा भवति । नीलो घट इत्यादौ घटनिष्ठा विषयता विशेष्यतारूपा धर्मितारूपा वा । घटत्वनिष्ठा च विषयता धर्मितावच्छेदकतारूपा । घटघटत्वयोः समवायनिष्ठा विषयता तु धर्मितावच्छेदकतावच्छेदकसम्बन्धरूपा । नीलनिष्ठा प्रकारतारूपा, नीलत्वनिष्ठा प्रकारतावच्छेदकतारूपा, नीलनीलत्वयोः समवायनिष्ठा प्रकारतावच्छेदकतावच्छेदकसम्बन्धरूपा, किंवा प्रकारतावच्छेदकतावच्छेदकतारूपा, समवायसम्बन्धस्यैवात्र प्रकारतावच्छेदकतावच्छेदकत्वात्, नीलघटोभयनिष्ठा चाभेदसंसर्गरूपा इति । तत्र नीलो घट इति शाब्दबोधो धर्मितारूपविषयतासम्बन्धेन घटे जायते, धर्मितावच्छेदकतारूपविषयतासम्बन्धेन घटत्वे जायते, धर्मितावच्छेदकताऽपि विषयतासम्बन्धेन घटघटत्वयोः समवाये जायते, प्रकारताख्यविषयतासम्बन्धेन नीले जायते, प्रकारतावच्छेदकतारूपविषयतासम्बन्धेन नीलत्वे जायते, प्रकारतावच्छेदकतावच्छेदकतारूपविषयतया नीलनीलत्वयोः समवाये जायते, अभेदसंसर्गाख्यविषयतासम्बन्धेन च नीलस्य घटस्य चाभेदसंसर्गे जायते, घटघटत्वतत्समवाय नीलनीलत्वतत्समवाय घटनीलाभेदसंसर्गाणामेषां सर्वेषामेव नीलो घट इति शाब्दबोधविषयत्वादित्यवधेयम् । एवमन्यत्रापि कार्यकारणभावो विज्ञेयः । तथा च विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विषयतासम्बन्धेनोपस्थित्यादिकं कारणमिति वक्तव्यम् । अत्र च समवायेन देवदत्तात्मन्युपस्थित्यादिसत्त्वे यज्ञदत्तस्यापि शाब्दबोधः स्यादिति तद्वारणाय तत्पुरुषीयत्वनिवेशः कर्त्तव्यः । यज्ञदत्तीयघटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति यज्ञदत्तीयघटत्वावच्छिन्नविषयकोपस्थित्यादिकं कारणमिति ।

विषयभेदाद् विषयता भिद्यते नच ज्ञानभेदेन विषयताभेदः ? तत्तत्पुरुषीयज्ञानानामानन्त्यात । नच विषयभेदाद् विषयताभेदः कथम् अवच्छेदकताभेदेन विषयताभेदः कथन्नेति वाच्यम् ? एकत्वद्वित्वादिसंख्या प्रकृत्यर्थं प्रत्ययार्थौ वेति शास्त्रार्थे

धिकरणा या प्रकारता तादृशप्रकारतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृश-विशेष्यतानिरूपिता या समवायसम्बन्धावच्छिन्ना भूतलत्वनिष्ठा प्रकारता तादृश-प्रकारताकशालिशाब्दबोधः । इति सूक्ष्मार्थः ।

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपोऽथ समाधानम्व्याख्यानं षड्विधम्मतम् ॥

## वाक्यं द्विविधम् ।

उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयपरम् । उद्देश्यतावच्छेदकसामानाधि-करण्येन विधेयान्वयपरञ्च ।

तथाहि—

शङ्खो लक्ष्मीपतेःपाञ्चजन्यश्चक्रं सुदर्शनम् । विष्णुसम्बन्धिशङ्खत्वावच्छेदेन पाञ्चजन्यपदशक्यत्वान्वये तात्पर्य्यम् ।

---

प्रचलिते संख्याया विभक्त्यर्थत्वे प्रतिबध्यप्रतिबन्धकभावविवेके गौरवानुसन्धानम् । तथाहि, योग्यताज्ञानस्य १ घटपदजन्यघटोपस्थितेः २ विभक्तिजन्यैकत्वोपस्थितेश्च ३ प्रवेशात् तेषान्त्रयाणाम्विशेष्यविशेषणभावे विनिगमनाविरहाच्च षट् प्रतिबन्ध्य-प्रतिबन्धकभावास्सम्भवन्ति । १ योग्यताज्ञानविशिष्टा या घटोपस्थितिस्तादृशघटो-स्थितिविशिष्टैकत्वोपस्थितेः प्रतिबन्धकत्वम् । २ योग्यताज्ञानविशिष्टा या एक-त्वोपस्थितिस्तादृशैकत्वोपस्थितिविशिष्टघटोपस्थितेः प्रतिबन्धकत्वम् । ३ घटोप-पस्थितिविशिष्टं यत् योग्यताज्ञानं तादृशयोग्यताज्ञानविशिष्टैकत्वोपस्थितेः प्रतिब-न्धकत्वम् । ४ घटोपस्थितिविशिष्टा या एकत्वोपस्थितिस्तादृशैकत्वोपस्थितिवि-शिष्टयोग्यताज्ञानस्य प्रतिबन्धकत्वम् । ५ एकत्वोपस्थितिविशिष्टा या घटोपस्थिति-स्तादृशघटोपस्थितिविशिष्टयोग्यताज्ञानस्य प्रतिबन्धकत्वम् । ६ एकत्वोपस्थितिवि-शिष्टं यद् योग्यताज्ञानन्तादृशयोग्यताज्ञानविशिष्टघटोपस्थितेश्च प्रतिबन्धकत्वम् । संख्यायाः प्रकृत्यर्थत्वे तु ४ चत्वारः कार्यकारणभावाः प्रतिबन्धका वा । तथा-हि १ एकत्वादिप्रकारतानिरूपितघटादिविशेष्यकोपस्थितिविशिष्टयोग्यताज्ञानस्य प्र-तिबन्धकत्वम् । २ घटादिविशेष्यतानिरूपितैकत्वादिप्रकारताकोपस्थितिविशिष्टयो-ग्यताज्ञानस्य प्रतिबन्धकत्वम् । ३ योग्यताज्ञानविशिष्टैकत्वादिप्रकारतानिरूपितघ-टादिविशेष्यकोपस्थितेः प्रतिबन्धकत्वम् । ४ योग्यताज्ञानविशिष्टघटादिविशेष्यता-निरूपितैकत्वादिप्रकारताकोपस्थितेश्च प्रतिबन्धकत्वमिति लाघवानुगृहीतेन प्रकारेण पञ्चकम्प्रातिपदिकार्थं इति वैयाकरणाभिमतजातिव्यक्तिलिङ्गसंख्याकारकभेदेनेत्या-द्ययेनैकत्वद्वित्वादिसंख्याप्रकृत्यर्थ एव न तु विभक्त्यर्थं इत्यलम् ।

नीरूपं स्पर्शवन्मनः ।

रूपशून्यत्वविशिष्टस्पर्शवत्वसामानाधिकरण्येन मनःपदशक्यत्वान्वये तात्पर्य्यम् । मनस्त्वजातेरेव शक्यतावच्छेदकत्वात् । रूपशून्यत्वविशिष्टस्पर्शवत्वम्वाय्वाकाशादावप्यस्ति । अत एव सामानाधिकरण्येनैवान्वयो नत्ववच्छेद्यावच्छेदकभावेन ।

ननु समानाधिकरणप्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभावसम्बन्धं केचिदभ्युपगच्छन्ति, केचिच्च तयोरभेदसम्बन्धमङ्गीकुर्वते तत्र कःपक्षःश्रेयान् इति विचारप्रस्तावे अवच्छेद्यावच्छेदकभावसम्बन्ध एव युक्ततमःप्रतिभाति । तथा हि—यदि तयोरभेदसम्बन्धोऽभीष्यते तदा "संयोगेन पुरुषाभाववान् दण्डः" इति बुद्धिं प्रति "संयोगेन पुरुषवान् दण्डः" इति संयोगसम्बन्धावच्छिन्नपुरुषत्वावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताशालिनिश्चयस्य यथा प्रतिबन्धकत्वम् तथा "रक्तदण्डवत्पुरुषवानयम्" इति निश्चयस्यापि संयोगसम्बन्धावच्छिन्नपुरुषत्वावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वरूपप्रतिबन्धकतावच्छेदकवत्त्वेन प्रतिबन्धकत्वमापद्येत । पुरुषनिष्ठा या दण्डनिष्ठप्रकारतानिरूपिता विशेष्यता तस्या अथ च देशनिष्ठविशेष्यतानिरूपिता या (पुरुषनिष्ठा) प्रकारता तस्याश्च रक्तनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यत्वदेशनिष्ठविशेष्यतानिरूपितप्रकारत्वाभ्याञ्चैक्यात् तादृशप्रतिबन्धकत्वापत्तिरूपदोषापत्तेर्युक्तत्वात् । अवच्छेद्यावच्छेदकभावसम्बन्धस्वीकारे तु अवच्छेदकभेदान्नैव दोषसम्भव इति भावः ।

ननु निरुक्तप्रतीतिषु संयोगसम्बन्धावच्छिन्नप्रकारतानिरूपिता स्वरूपसम्बन्धावच्छिन्ना वा विशेष्यतेत्यादि सर्वत्रैव विनिगमनाविकलमेव श्रूयते तत्र सम्बन्धावच्छिन्नत्वं विशेष्यतायाम् प्रकारतायां वा निवेश्यमिति सप्रमाणमुपपादनीयमिति प्रश्नः । अत्रोच्यते—सम्बन्धावच्छिन्नत्वम् प्रकारतायामेव निवेश्यन्नतु विशेष्यतायाम् , तथा हि—संयोगेन घटोऽवृत्तिरिति बुद्धिम् प्रति संयोगेन घटवद् भूतलम् , संयोगेन घटवान् पर्वतः, संयोगेन घटवान् पट इत्यादिनिश्चयानां संयोगसम्बन्धावच्छिन्नप्रकारताशालिनिश्चयत्वेन एकरूपेणैव प्रतिबन्धकत्वं सङ्गच्छत इति लाघवसम्भवः ।

ननु एवमपि नानाधर्मिकाणां घटनिश्चयानां अनुगतेन एकेनैव रूपेण प्रतिबन्धकत्त्वमस्तु परन्तु प्रयोजनवैकल्यात् तदवच्छेदकप्रकारतायां सम्बन्धावच्छिन्नत्वनिवेशो व्यर्थ एवेति चेन्न ? समवायेन घटवान् पट इति ज्ञानप्रतिबन्धकत्वापत्त्या घट-

त्त्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वासम्भवात्। नच प्रकारतायां सम्बन्धावच्छिन्नत्वमपहाय विशेष्यतायामेव तत्स्वीकारात् प्रतिबन्धकत्वोक्तावपि समवायेन घटवान् पट इतिज्ञानस्य प्रतिबन्धकत्वापत्तिरूपदोषवारणसम्भवे पुनरपि भवदुक्तिर्न प्रामाण्यमभिगच्छतीति वाच्यम्? घटत्वावच्छिन्नप्रकारतानिरूपितसंयोगसम्बन्धावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वे केवलस्य विशेष्यपदाप्रतिपन्नस्य निरवच्छिन्नविशेष्यताकस्य "संयोगेन घटवान्" इतिज्ञानस्य प्रतिबन्धकत्वानापत्तेः। तत्तद्विशेष्याणाम् आनन्त्येन गौरवापत्तेश्च। तस्मात् सम्बन्धावच्छिन्नत्वम् प्रकारतायामेव निवेशयन्तु विशेष्यतायामिति सिद्धान्तः।

ननु प्रकारताविशेष्यतयोर्जन्यजनकयोराधाराधेययोरवच्छेद्यावच्छेदकादीनाञ्च परस्परम् निरूप्यनिरूपकभावःकथमङ्गीक्रियते इति चेत्? प्रतिबध्यप्रतिबन्धकभावस्य याथातथ्येन सिद्धये इति ब्रूमः। अन्यथा निरूप्यनिरूपकभावास्वीकारे "संयोगेन घटाभाववद् भूतलम्"इतिबुद्धिम् प्रति (संयोगसम्बन्धावच्छिन्नघटाभावत्वावच्छिन्नप्रकारताकभूतलत्वावच्छिन्नविशेष्यताकज्ञानम्) "संयोगेन घटवद् भूतलम्" संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकभूतलत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन रूपेण प्रतिबन्धकत्वे "घटवन्महानसम् पटवद् भूतलम्" इति समूहालम्बनात्मकज्ञानस्यापि तादृशनिश्चयत्वेन प्रतिबन्धकत्वापत्तेः। परस्परन्निरूप्यनिरूपकभावस्वीकारे तु निरूपकभेदादेव तद्वारणस्य कर्त्तुं शक्यत्वात्। निरूप्यनिरूपकभावस्तु विनिगमनाविरहादेवावगम्यत इति तत्त्वम्।

### वृत्यनियामकसम्बन्धस्य नाऽभावप्रतियोगितावच्छेदकत्वमिति—

आश्रयत्वस्वरूपसंयोगादीनामेवाधिकरणतानियामकत्वेनाऽभावप्रतियोगितावच्छेदकत्वम्। राज्ञःपुरुष इत्यत्र षष्ठ्यर्थस्वत्वे निरूपितत्वसम्बन्धस्याधिकरणतानियामकत्वाऽभावेन राज्ञो न पुरुष इत्यादौ नाऽभावप्रतियोगितावच्छेदकत्वम्। येन सम्बन्धेन यःपदार्थो यत्र वर्त्तते तेनैव सम्बन्धेन तत्रैव तत्पदार्थस्याऽभावोऽपि नञा प्रत्याख्यते। स्वत्वसम्बन्धेन तु न कस्य चित् पदार्थस्य राजादेःपुरुषादौ स्थितिः प्रसम्भवति येन स्वत्वस्य वृत्तिनियामकत्वं स्यात्। राज्ञःपुरुष इत्युक्ते स्वत्वसम्बन्धेन राज्ञःपुरुषे स्थितिः कथमपि न प्रतीयते स्वत्वस्य येन वृत्तिनियामकत्वं स्यात्। वृत्तिनियामकत्वाऽभावेन च स्वत्वस्य प्रतियोगितावच्छेदकत्त्वाऽभावात् स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावस्य क्वचिदपि प्रसिद्धत्वाऽभावाच्च पुरु-

षो न राज्ञ इत्युच्चारिते न हि स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाऽभावः प्रतीतिगोचरःकिन्तु राजस्वत्वाऽभाव एव तस्मात्स्वत्वस्य प्रकारत्वमेव न संसर्गत्वमित्याशयः। ननु वृत्त्यनियामकत्वस्याधिकरणतानियामकत्वाऽभाववत इत्यर्थः कथम् इति चेत् ? वर्त्तनम्वृत्तिः भावे "स्त्रियां क्तिन्नि"तिक्तिन्प्रत्ययः वृत्तिः कोऽर्थस्स्थितिरधिकरणम् "कृत्यल्युटो बहुलमि"त्यत्र बहुलग्रहणेन वर्त्तन्ते पदार्था यस्मिन्निति अधिकरणेऽपि क्तिन्। वृत्तिरधिकरणमित्यर्थः। यस्य सम्बन्धस्याऽधाराऽधेयभावनियामकत्वं घटवद्भूतलमिति संयोगवत् स्यात्तस्यैव सम्बन्धस्याऽभावप्रतियोगितावच्छेदकत्वम् न तु पुरुषो न राज्ञ इत्यादौ निरूपितत्वादेःपूर्वोक्ताशयवर्णनात्। वस्तुतस्तु—कुण्डलादिस्वामिन्यपि कुण्डलाऽसंयुक्ते कुण्डली देवदत्त इति प्रत्यनुदयाद् वृत्त्यनियामकस्य सम्बन्धस्याऽप्यभावप्रतियोगिताऽवच्छेदकत्वमभवत्येव न कुण्डली देवदत्त इति। किञ्च द्रव्यङ्गच्छति नाभावमित्यादौ समवायसम्बन्धावच्छिन्नाऽधेयत्वस्याऽप्रसिद्धया तदभावबोधाऽसम्भव इत्यपि बोध्यम्।

## अप्रसिद्धप्रतियोगिकाऽभावस्स्वीकार्यो न वेति प्रश्नः।

अभावस्य प्रतियोगिनि नित्यसाकाङ्क्षत्वाद् यत्किञ्चित्प्रतियोगिक एवाऽभावो न तु निष्प्रतियोगिकः। नास्ति अभाव इति कथने किन्नास्ति कस्याऽभाव इति आकाङ्क्षाया विशेषप्रतीतिगोचरत्वात्। यथा ज्ञानन्निर्विषयकन्न भवति किन्तु सविषयकमेव तथाऽभावोऽपि सप्रतियोगिक एव। चैत्रो घटम्पश्यति इत्यादौ चैत्रकर्तृकघटकर्मकदर्शनम्प्रसिद्धमतो न घटम्पश्यति चैत्र इत्यादौ प्रसिद्धप्रतियोगित्वात्तदभावसिद्धिः। घट आकाशन्न पश्यति अभाव आकाशन्न पश्यति, चैत्र आकाशञ्जिघ्रति, चैत्रेणाऽकाशं न दृश्यते, चैत्र आकाशन्न पश्यति इत्यादिषु नञा रहिते चैत्र आकाशम्पश्यतीत्यादौ चैत्रकर्तृकाकाशकर्मकदर्शनन्न प्रसिद्धमिति तत्प्रतियोगिकाभावस्य क्वचिदपि प्रसिद्धत्वाऽभावान्नैवम्प्रयोगा भवन्ति। तत्प्रतियोगिनामप्रसिद्धत्वात्। यःप्रतियोगी क्वचित् स्वातन्त्र्येण लोके प्रसिद्धस्तस्यैवाभावांशाऽन्वयेन तत्तत्प्रयोगा घटन्न पश्यतीत्यादयो भवन्ति। अकाशञ्जिघ्रतीत्यादौ आकाशकर्मकघ्राणन्न क्वचिल्लोके प्रसिद्धमिति तादृशाः प्रयोगा न भवन्ति इति न्यायानुशरणाः। वस्तुतस्सर्वत्राऽभावोऽप्रसिद्धप्रतियोगिक एव। यद्यत्र भूतले घटो नास्तीत्यादावेतद्देशावच्छेदेन घटकर्त्तृकसत्तायाः कथञ्चिदपि प्रसिद्धिर्नास्ति कथन्तत्प्रतियोगिकसत्ताऽभाव इति बोधः।

अयम्भावः, अत्र भूतले घटो नास्तीत्यादौ भूतलस्य घटापेक्षया व्यापकत्वेन महाकारकत्वेन सकलभूतलदेशावच्छेदेन घटसत्ता नास्तीति प्रसिद्धमेव। यत्किञ्चिद्देशावच्छेदेन भूतले घटसत्वेऽपि सकलभूतलावच्छेदेन घटाऽभावस्सर्वप्रसिद्धः। भूतलाऽपेक्षया घटस्य न्यूनरूपकत्वात्तस्याल्पदेशावच्छेदेनैव स्थितिसंभवो लोकगम्यः। एवम्विधा देशा भूतलेऽनेके सन्ति यत्र घटसत्तासम्भवः कदाचिदपि प्रयोजनाऽभावान्न श्रवणदृष्टिगोचरः। यथा पर्वतगुहादिः समुद्रैकदेशादिः गृहभित्तिमध्यभूम्यादिः एषु कदाचिदपि घटसत्ता नास्ति तत्तात्पर्य्येणात्र घटो नास्ति। अत्र भूतले घटो नास्तीत्युच्चारिते भूतलीयैतद्देशावच्छेदेन घटकर्त्तृकसत्ताऽप्रसिद्धा सर्वथैव। एवञ्च अप्रसिद्धप्रतियोगिकाऽभावा एवम्बिधस्थलेऽनेके सन्त्येवेति वाच्यम् ? प्रसिद्धप्रतियोगिकाऽभावाऽप्रसिद्धप्रतियोगिकाऽभावयोश्चर्चा न कर्त्तुं शक्या किन्तु वक्तुरिच्छातात्पर्य्येण सामान्यरूपेण तत्तत्प्रतियोगिकाऽभावविषयक एव बोधः। प्रतियोगी प्रसिद्धः अप्रसिद्धो वेति विचारो न सर्वसम्प्रदायसिद्ध इत्यलम्।

एकत्वमेकमात्रवृत्तित्वञ्च एकशब्दस्येति—

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते ॥ १ ॥

इत्यभियुक्तोक्तिः। सम्पन्नो व्रीहिरित्यत्र सुप्रत्ययस्य नैकत्वमात्रमर्थस्संख्यारूपम् व्रीहिरेव सम्पन्नो नत्वन्नान्तरमिति तात्पर्य्येण सम्पन्नो व्रीहिरित्यस्य प्रयोगः। व्रीहिभिन्नम्व्रीहिसजातीयम्व्रीहिवीजवपनकालावच्छेदेनैव वपनानुकूलव्यापाराश्रयं व्रीहिवपनार्थक्षेत्रात्यन्तसमीपवर्त्तिक्षेत्रोप्तं यदन्यदन्नादिकन्तत्र सम्पन्नत्वम्व्रीह्यपेक्षया नास्तीति किन्तु व्रीहावेव सम्पन्नत्वमित्यन्नान्तरीयसम्पन्नत्वव्यावृत्तिरिष्टा वक्तुर्न सिद्ध्येदेकत्वमात्रैकवचनार्थस्वीकारे, किन्तु स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपं यत्सजातीयद्वितीयरहितत्वन्तदेवैकवचनार्थः। इतरव्यावृत्तिप्रकारस्त्वित्थम्। यत्र स्थले सन्त्यनेके घटास्तत्र स्वम्पीतघटस्तत्सजातीयो द्वितीयो नीलघटः, नीलघटे पीतघटभेदोऽप्यस्त्येव तस्य भेदस्य प्रतियोगी पीतघटस्तत्र यदेकत्वन्तद्भेदप्रतियोगिताऽवच्छेदकमेवेति तदेकत्वन्न सजातीयद्वितीयरहितत्वरूपम्, अतस्तत्र बहुवचनमेव न्याय्यम् यत्रत्वेक एव घटो वरीवर्त्ति तदा सजातीयद्वितीयघटस्याऽभावाद्वर्त्तमानैकघटनिष्ठमेकत्वम् स्वसजातीयद्वितीयघटनिष्ठभेदप्रतियोगितानवच्छेदकमेव। तथा चैतादृशानवच्छेदकैकत्वरूपमेवैकवचन-

स्वरूपमेवैकवचनार्थः । उदाहरणम् सम्पन्नो व्रीहिरित्यादिकम् । अत्र यदि व्रीहिंभिन्नमन्यदन्नं कदाचित् तदा सम्पन्नत्वेन रूपेण व्रीहिसजातीयान्तरस्य सत्त्वात्तत्र वर्त्तमानो यो व्रीहिभेदस्तत्प्रतियोगितावच्छेदकं व्रीहित्वगतैकत्वं स्यादेव । यदाचान्नान्तरन्ततात्पर्यं न सम्पन्नन्तदा सम्पन्नत्वेन रूपेण व्रीहिसजातीयस्यैवाऽभावात् स्वसजातीयद्वितीयनिष्ठभेदप्रतियोगिताऽनवच्छेदकमेव जातव्रीहित्वगतैकत्वम् तदेव सजातीयद्वितीयरहितत्वम् । अत एव "पशुना यजेत स्वर्गकाम" इत्यादौ पशुनिष्ठताद्दशैकत्वस्य सजातीयद्वितीयरहितत्वरूपस्य स्वीकारादेकपशुकरणकयागाद्धर्मसिद्धिः । अत्र संघटनप्रकारः स्वः पशुस्तत्सजातीयो द्वितीय ✕ पशुर्यदि यागे स्यात्तदा द्वितीयपशुनिष्ठस्य एतत्पशुभेदस्यैतत्पशुनिष्ठमेकत्वं भेदप्रतियोगितावच्छेदकं स्यात् । यदि यागे द्वितीय ✕ पशुर्नास्ति तदा एतत्पशुनिष्ठमेकत्वं सजातीयपश्वन्तरनिष्ठभेदस्य प्रतियोगिताऽनवच्छेदकमेव तदेव सजातीयद्वितीयरहितत्वम् । नचैवं यागसम्बन्धित्वेन धर्मेण साजात्यमद्वितीयमङ्गीकृत्य यागसम्बन्धघृतादिष्वप्येतत्पशुभेदोऽस्ति यज्ञभूमौ अन्यकार्य्यसंसिद्धये यदा पशु ✕ केनचिद्बद्धस्तत्रापि पशुसजातीयत्वाद् भेदप्रतियोगितावच्छेदकत्वं दुर्वारमिति वाच्यम् ? स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकत्वरूपेण साजात्याश्रयणात् स्वं यजेतेत्यत्र वर्त्तमानतिङ्विभक्तिस्तत्समभिव्याहृत ✕ पदार्थो यागपदार्थस्तत्संसर्गित्वविशिष्टम् यागसम्बन्धित्वसमानाधिकरणम् यत्प्रकृत्यर्थतावच्छेदकं पशुत्वरूपेण साजात्यमिति फलमित्यर्थः । कार्य्यान्तरार्थोक्तपशौ यागसंसर्गित्वन्नास्ति घृतादिषु पशुत्वजात्यवच्छिन्नत्वन्नास्तीति सर्वत्रैव एकवचनार्थे गतिरेषेति दिक् ।

अथ का प्रकारता विशेष्यता चेतिप्रश्नः ।

विशेष्यतानिरूपितसंसर्गतानिरूपितत्वम्प्रकारत्वम् । प्रकारतानिरूपितसंसर्गतानिरूपितत्वम्विशेष्यत्वम् । न च प्रकारताविशेष्यतयोर्निरूप्यनिरूपकभावेन नान्यतरज्ञानम्विनान्यतरसिद्धिरित्यन्योन्याश्रय इति वाच्यम् ? विषयताविशेषत्वम्प्रकारत्वम् , विषयताविशेषत्वम्विशेष्यत्वमितिनिर्विवादप्रकारात् ।

अथ किन्तावत्पदार्थत्वमिति प्रश्नः ।

---

नन्ववच्छेद्यत्वङ्किमिति प्रश्नः । अवच्छेदकतानिरूपकताकत्वमिति अवच्छिन्नत्ववदवच्छेद्यत्वमपि बोध्यम ।

पदनिष्ठशक्तिनिरूपकत्वम्पदार्थत्वम् । नच लक्षणे पदशब्दस्य सामान्यरूपेण समुपात्तत्तथा च घट ≍ पटपदार्थस्स्यात् पटो घटपदार्थश्च स्यादिति व्यभिचार इति वाच्यम् ? तत्तत्पदनिष्ठशक्तिनिरूपकत्वम् , तत्पदम्बुद्धिविशेषविषयत्वोपलक्षितवक्तृजिज्ञासितधर्मावच्छिन्ने शक्तमित्यभिधानेनाऽक्षतेः । नच घटश्च पटश्च मठश्चेति समूहाऽलम्वनात्मकज्ञानम् । ज्ञानन्त्रिविधम् सविकल्पकम् निर्विकल्पकम् समूहालम्बनात्मकञ्च तत्रोक्तसमूहालम्बनात्मके ज्ञानेऽन्यपदस्यान्यपदार्थस्स्यादिति वाच्यम् ? तत्तत्पदनिष्ठवृत्तिज्ञानाधीनवृत्तिविषयकज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्ना याऽवच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशाऽवच्छेद्यतावती या विषयता तादृशविषयताश्रयत्वम्पदार्थत्वमिति सिद्धान्तलक्षणेन क्वाप्यदोषात ।

---

देशकालयोरवच्छेदकत्वन्तु स्वरूपसम्बंधरूपमेवेति । अवच्छेद्याधिकरणत्वं यस्मिन् पदार्थे सम्भवति तस्यैवावच्छेदकत्वम् ।

तथा च "अवच्छेद्याधिकरणत्वमवच्छेदकत्वमिति दशमलक्षणम् १० । अनतिरिक्तवृत्तित्वमवच्छेदकत्वमिति एकादश लक्षणम् ११ । तच्च द्विविधम्—प्रथमंतु तच्छून्याऽवृत्तित्वे सति तदधिकरणवृत्त्यभावाऽप्रतियोगित्वम् । यथा घटो नास्तीति घटाभावीयप्रतियोगिताया अवच्छेदकत्वं घटत्वे । अन्यूनानतिरिक्तवृत्तिधर्मत्वमवच्छेदकत्वम् । अतोऽतिरिक्तवृत्तिद्रव्यत्वादौ घटाभावीयप्रतियोगिताया अवच्छेदकत्वनिरासः । द्वितीयं तु यत्किञ्चिद्धर्मविशिष्टत्वमवच्छेदकत्वम् वैशिष्ट्यञ्च व्यावर्त्तकत्व० सामानाधिकरण्य० स्वनिष्ठावच्छेद्यताकत्व मितित्रितयसम्बन्धेन । यथा घटकारणताया अवच्छेदकत्वं दण्डत्वे । किञ्च स्वाश्रयसम्बन्धित्वमवच्छेदकत्वमिति द्वादशलक्षणम् १२ । क्वचित्तु तदधिकरणस्य तन्निष्ठधर्मावच्छेदकत्वम् यथा मूले वृक्षेन कपिसंयोगः किंतु शाखायां वृक्षाधिकरणस्य मूलस्य वृक्षनिष्ठकपिसंयोगाऽभावावच्छेदकत्वम् । वृक्षाधिकरणस्य शाखादेर्वृक्षनिष्ठकपिसंयोगावच्छेदकत्वम् । अथवा इह पर्वते नितम्बे हुताशनः न शिखरे इत्यत्र नितम्बरूपदेशस्य हुताशनावच्छेदकत्वम् । शिखरस्य तु हुताशनाऽभावावच्छेदकत्वम् । स्वरूपसम्बन्धविशेषत्वमवच्छेदकत्वमिति त्रयोद० लक्ष० १३ तच्च क्वचित्प्रतियोग्यंशप्रकारीभूतधर्मत्वमवच्छेदकत्वम् यथा प्रमेयधूमो नास्तीति प्रमेयधूमाऽभावप्रतियोगिताया अवच्छेदकत्वं धूमत्वे । न प्रमेयधूमत्वे कुतो नावच्छेदकत्वमिति वाच्यम् । सम्भवति लघौ धर्मे गुरुधर्मस्यावच्छेदकत्वन्नास्तीति नियमात्प्रमेयत्वविशिष्टधूमत्वस्य नावच्छेदकत्वङ्किन्तु शुद्धधूमत्वस्यैवावच्छेदकत्वमिति तार्किकाः । समानाधिकरणयोरेव धर्मयोरवच्छेद्याव च्छेदकभाव इति व्यापको नियमः ।

नन्वु तत्पदनिवेशे लक्षणाननुगमः । तस्य सामान्यार्थकत्वेऽन्यस्मिन्काले या बुद्धिरन्यस्मिन्काले यो विषयस्तस्याऽपि बोधप्रसङ्गः । किञ्चान्यपुरुषबुद्धौ विषयः अन्यपुरुषस्य शाब्दबोधस्स्यादिति स्वोच्चारणानुकूलतत्तत्कालीनेति निवेशे स्वपदस्य तत्तद्व्यक्तिपरतया सर्वथाऽननुगम इति चेन्न ? तत्पदविशिष्टबोधो भवतु इत्येवम्विधो बोधविशेष्यकस्सङ्केतस्स्वीकार्य्यः । वैशिष्ट्यञ्च—स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्नविषयकत्वं स्वजन्यत्वमित्युभयसम्बन्धेन । तत्तत्पदत्वादिरूपा या तकारोत्तरत्कारस्वरूपा पदानुपूर्वी तादृशानुपूर्वी विशेषेणैव तदादिपदानां सङ्केतविषयता, सा चानुपूर्वी सर्वेषु तदादिपदेष्वनुगतरूपैवेति न पदव्यक्तिभेदेन शक्तिभेदः । अद्धेत्थम् , तत्पदं प्रक्रम्यमाणप्रकान्तप्रसिद्धानुभूतार्थपरामर्शकभेदाच्चतुर्द्धा भवति । उदाहरणानि तमानय य इहास्ति १ घट इहास्ति तमानय, तदन्वये शुद्धिमति २

कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ।

सा कोऽर्थः प्रसिद्धा ३

ते लोचने प्रतिदिशम्विधुरे क्षिपन्ती,

ते कोऽर्थोऽनुभूते लोचने इत्यर्थ इति चतुरर्थकस्तच्छब्द इति सिद्धम् ।

## ननु का प्रकारिता चेति प्रश्नः ।

प्रकारो विद्यतेऽस्मिन्निति प्रकारी "अत इनिठनौ" प्रकारिणो भावः प्रकारिता धनमिदं किञ्चैत्रस्य किम्पदार्थस्सम्भावना चैत्रः स्वत्वम् , किंशब्दार्थस्सम्भावना, धनपदार्थः अत्र प्रकारिता आश्रयत्वसम्बन्धावच्छिन्ना, चैत्रनिरूपितस्वत्वस्य सम्बन्धावच्छिन्नप्रकारितासम्बन्धेन किम्पदार्थसम्भावनायामन्वयः । किम्पदार्थसम्भावनायाश्च विशेष्यतासम्बन्धेन मुख्यविशेष्यभूते धनपदार्थेऽन्वयः, आश्रयत्वसम्बन्धावच्छिन्नचैत्रस्वत्वप्रकारकसम्भावनाश्रयीभूतन्धनमिति शाब्दबोधः । इन्दुः किम्मुखम्—

किमिन्दुः किम्पद्मङ्किमु मुकुरविम्बं किमु मुखम् ।

इन्दुपदार्थः किंशब्दार्थस्सम्भावना, मुखशब्दार्थः, अभेदसम्बन्धावच्छिन्नप्रकारितासम्बन्धेन इन्दुपदार्थस्य किंशब्दार्थसम्भावनायामन्वयः, सम्भावनायाश्च विशेष्यतासम्बन्धेन मुखेऽन्वयः, इन्दुनिष्ठप्रकारतानिरूपितप्रकारितावत्सम्भावनाश्रयीभूतम्मुखमितिशाब्दबोधः । यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यता यत्कि-

च्छिन्निष्ठविशेष्यतानिरूपितप्रकारता यत्र, अर्थादेकपदार्थनिरूपितविशेष्यता अपरपदार्थनिरूपितप्रकारता यत्र तदैव प्रकारितासम्बन्ध इति तात्पर्य्यम् ।

जनकत्वङ्कारणत्वम् ।

तच्च द्विविधम् स्वरूपयोग्यत्वम् फलोपधायकत्वञ्च । कारणतावच्छेदकधर्मवत्त्वं स्वरूपयोग्यत्वम् । यथा घटम्प्रत्यरण्यस्थदण्डस्यापि कारणत्वम् । द्वितीयं यथा

ज्ञानजन्या भवेदिच्छा हीच्छाजन्या भवेत्कृतिः । व्यापार॑कृतिजन्यो हि तज्जन्यम्फलमुच्यते ॥ १ ॥

केवलान्वयित्वञ्च ।

अत्यन्ताऽभावाप्रतियोगित्वम् । यो धर्मस्सर्वत्र वर्त्तते यस्य च अत्यन्ताऽभावः अप्रसिद्धः स धर्म॑केवलान्वयी । घटोऽभिधेय॑प्रमेयत्वात इत्यत्र प्रमेयत्वं केवलान्वयीति । गमकत्वञ्च—नित्यसाकाङ्क्षत्वम् । चैत्रस्य गुरुकुलं चैत्रस्य दासभार्येत्यादौ सापेक्षत्वेऽपि नित्यसाकांक्षत्वात्समासः ।

विनाश्यभावत्वम्प्रागभावत्वम् ।

इति नैयायिकाः । शाब्दिकाश्च कारणे शक्तिरूपेणावस्थानम्प्रागभाव इत्याहुः । सांख्याचार्य्यास्तु—भावस्यानागतावस्थैव प्रागभाव इत्याहुः । उत्पन्नस्य घटादे॑कारणसत्त्वात्पुनरुत्पत्तिवारणाय प्रागभावोऽङ्गीकार्य्यं इति फलितम् । घटो भविष्यतीत्यादौ प्रागभावः प्रकृतिप्रत्यययोर्मध्ये कस्यार्थं इति विचारः ।

---

कारणत्वञ्च—कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरणवृत्त्यभावाप्रतियोगित्वे सति तत्तदन्यथासिद्ध्यनिरूपकत्वम् । ननु कार्यप्राक्क्षणे कार्यासत्त्वेन तदानीङ्कार्य्याधिकरणत्वस्य कथङ्कारं सम्भवः ? कार्यकारणयोरेककालावच्छेदेनैकाधिकरणकारणज्ञानवृत्तित्वाभावात्, यावत्कार्य्यज्ञानन्न तावत्कारणज्ञानन्न यावच्चकारणज्ञानन्न तावत् कार्य्यज्ञानमपि नेति परस्परापेक्षत्वरूपगूढतात्पर्य्यादिति । नच कार्य्यकारणयोस्साक्षात्सम्बन्धाभावेऽपि परम्परासम्बन्धेन कश्चिद कार्यासत्त्वकालेऽपि कार्य्यवत्त्वाङ्गीकारेणैकाधिकरणवृत्तित्वात् कारणत्वलक्षणं युक्तमेवेति वाच्यम् ? परम्परासम्बन्धेन कार्य्यवत्त्वमित्यत्रापि कारणत्वज्ञानमन्तरा सिद्धिर्न भवेत् "भक्षितेऽपि लशुने न शान्तो व्याधिरिति"न्यायेन परम्परासम्बन्धस्वीकारेऽपि कार्य्यकारणयोरैक्याभावेन लक्षणे महाप्रलयः । किञ्च उक्तकारणत्वलक्षणात् प्राक् एवं किञ्चिदस्तीत्यवगम्यते तदुत्पत्तिस्तु कुतो न ज्ञायते ? तदुत्पत्तिप्रयोजकत्वादिकं विलक्षणमङ्गीकार्य्यं स्यात् तर्हि विलक्षणं कीदृशम् विलक्षणे विलक्षणङ्कीदृशन्तत्रापि कीदृशमित्यनवस्थाया दुर्वारत्वं स्यात् । वस्तुतस्तु—कल्पितं कार्य्यकारणयोरधिकरणत्वमाश्रित्य लक्षणसंघटने विवादाभावः ।

तादात्म्यञ्च ।

भेदसहिष्णुरभेदस्तादात्म्यमिति केचिद्वेदान्तिनः । तत्सत्तातिरिक्तसत्ताकत्वाऽभावस्तादात्म्यमिति मायावादिनः ।

भेदाऽभेदबुद्धिनियामकस्सम्बन्धविशेषस्तादात्म्यमिति सांख्याचार्य्याः ।

---

तादात्म्यमिति—स्ववृत्त्यसाधारणो धर्मस्तादात्म्यम् । असाधारण्यञ्च एकमात्रवृत्तित्वञ्च भेदविशिष्टं यत्तदन्यत्वम् वैशिष्ट्यञ्च० स्वसामानाधिकरण्य स्वप्रतियोगिवृत्तित्वमित्युभयसम्बन्धेन । नीलो घट इत्यादौ घटे नीलतादात्म्यमवभासते नीलतादात्म्यवान्घट इति बोधः । संघटनप्रकारस्तु स्वन्नीलघटव्यक्तिभेदस्तत्सामानाधिकरण्यन्द्रव्यत्त्वे । किञ्च स्वन्नीलघटव्यक्तिभेदस्तत्प्रतियोगिनी नीलघटव्यक्तिः तद्वृत्तित्वमपि द्रव्यत्वे इत्युभयसम्बन्धेन भेदविशिष्टन्द्रव्यत्वमेव तदन्यत्वन्तद्व्यक्तित्वे तन्नीलघटव्यक्तिवृत्तितद्व्यक्तित्वे इत्याशयः । अत्र केवलस्य स्वप्रतियोगिवृत्तित्वस्यैव सम्बन्धत्त्वे तु नेष्टसिद्धिस्तथाहि, स्वन्नीलव्यक्तिभेदस्तत्प्रतियोगिनी नीलघटव्यक्तिस्तद्वृत्तित्वन्तद्व्यक्तित्वे इत्यनेन सम्बन्धेन भेदविशिष्टमेव तत्तद्व्यक्तित्वमतो द्वितीयसम्बन्धनिवेशस्तथा च स्वन्नीलव्यक्तिभेदस्तत्सामानाधिकरण्यन्तत्तद्व्यक्तित्वे नास्ति (नीलघटव्यक्तिभेदवति घटे) तत्तद्व्यक्तित्वस्याऽभावात् । केवलस्य स्वसामानाधिकरण्यस्यैव सम्बन्धत्वे तु स्वपदेन पटादिभेदस्तत्सामानाधिकरण्यन्तत्तद्व्यक्तित्वे इति भेदविशिष्टमेव भवतीति स्वप्रतियोगिवृत्तित्वस्य निवेशः । एवञ्च स्वम्पटादिभेदस्तत्प्रतियोगी पटादिस्तद्वृत्तित्वन्तद्व्यक्तित्वे नास्तीत्यर्थः । तथा चोभयसम्बन्धेन तद्व्यक्तित्वम् विना भेदविशिष्टं सर्वमेव घटत्वादिकन्धर्मजातं भविष्यति । तदन्यत्वन्तद्व्यक्तित्वे प्राप्तमिति ।

अस्य तादात्म्यस्य सम्बन्धत्वन्तु रूपवान् घटः जातिमान् पट इत्यादौ आश्रयताबुद्धिनियामकत्वात्प्रसिद्धमेव । इदमेव हि तादात्म्यमभेदाऽभेदघटितन्नैयायिकैस्समवायशब्देन व्यवह्रियते । परिगीयते च नैयायिकाभिमतस्य समवायस्य भेदाऽभेदघटिततादात्म्येऽन्तर्भावो वैयाकरणानां केषाञ्चित्, तादात्म्येऽन्तर्भावो वेदान्तिनाम् । स्वरूपसम्बन्धेऽन्तर्भावस्साङ्ख्यावगाहिनाम् । नच वैयाकरणमते नाऽभेदस्संसर्गं इति कथंकारं ग्रन्थसम्मेल इति वाच्यम् ? राहोश्शिर इत्यादावौपाधिकभेदेन षष्ठ्युपपादनपरभाष्यप्रामाण्यात्तु केवलस्याभेदस्यैव न संसर्गत्वम् इति तद्भाष्याक्षरार्थः । भेदाऽभेदघटितस्य तादात्म्यस्य तु सम्बन्धत्वमस्त्येव । अन्यथा उपाधिभूतशिरश्चैतन्यसमूहस्याऽपि राहुपदार्थत्वे समूहसमूहिनोरात्यन्तिकभेदस्य कस्याऽपि मतेऽभावेन समवायसम्बन्धस्वीकर्त्तृभिरपि तत्र समवायानङ्गीकारेण अन्यसम्बन्धस्य च तत्राऽसत्त्वेन षष्ठ्युपपादनं भाष्योक्तमसङ्गतमेव स्यात् ।

ऐक्यन्तादात्म्यमिति केचित्। स आत्मा यस्य स तदात्मा तस्य भावस्तादात्म्यम्।

समानविषयकत्वञ्च—तुल्यरूपविशेष्यविशेषणताशालित्वन्तद्विषयविषयकत्वस्वा इति।

पर्वतो वह्निमान् पर्वतो महानसीयवह्निमान् इत्यनयोर्निश्चययोस्समानविषयकत्वम्।

उत्तेजकत्वञ्च—प्रतिबन्धककोटिप्रविष्टाऽभावप्रतियोगित्वमुत्तेजकत्वम्। दाहं प्रति मणिविशेषस्य प्रतिबन्धकत्वम् लोकगम्यम्।

काव्यशास्त्रज्ञास्तु प्रेरकत्वमुत्तेजकत्वमिति ब्रुवन्ति।

उद्दीपकत्वमुत्तेजकत्वमिति केचित्। वर्द्धकत्वमुत्तेजकत्वमित्यन्ये।

पृच्छेति—

जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनश्शब्दः। यथा गुरुन्धर्मम्पृच्छतीत्यादौ पृच्छतेरर्थः।

अत्र पृच्छधात्वर्थघटके ज्ञाने गुरुवृत्तित्वस्यान्वयः, शब्दे च धर्मविषयकत्वस्यान्वयः, शब्दस्य विषयता व्यापारानुबन्धिनी, ज्ञानस्य विषयता व्यापारानुबन्धिनी, ज्ञानस्य परम्परया शब्दरूपधात्वर्थविशेषणत्वात्तदाश्रयीभूतगुरोर्गौणकर्मता धर्मस्य च धात्वर्थविषयतया प्रधानकर्मतेति। केचिच्छाब्दिकास्तु जिज्ञासाविषयकज्ञानानुकूलव्यापारः। स च कथन्धर्म आचरितव्य इत्यभिलापादिः। पृच्छ्यते शिष्येण गुरुधर्ममित्यादौ पृच्छेरर्थ इत्याहुः। पृच्छा प्रश्न इति काव्यज्ञा आहुः।

---

तस्माद्भेदाऽभेदघटितस्य तादात्म्यस्य सम्बन्धत्वे न हानिप्रकारः। क्वचिद्भेदः कालपनिकः अभेदो वास्तवः यथा गुणगुणिनोः। क्वचिदभेदः काल्पनिकः भेदो वास्तवः यथा शब्दार्थयोः। यदि च शब्दादेव सृष्टिरिति पक्षोऽङ्गीक्रियते तदाऽभेदो वास्तवः भेदश्च काल्पनिकः तत्राऽभेदस्योद्भूतत्वविवक्षया "वृद्धिरादैच्" रामेति द्व्यक्षरन्नाम मानभङ्गः पिनाकिनः" इत्यादिनिर्देशाः भेदस्योद्भूतत्वविवक्षया च "तस्य वाचकः प्रणवः" इति योगदर्शनसूत्रम् "ओ वाचकम्प्रगृह्यपदमिति" व्याकरणमहाभाष्यम् "शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्," गौरितिशब्दो गौरितिचार्थो गौरिति ज्ञानम् इति "शब्दार्थौ परस्पर तादात्म्यवन्तौ" इतरेतराध्यासवत्त्वात् यत्र यत्र इतरेतराध्यासः तत्र तत्र तादात्म्यं यथा गुणगुणिनोः, यत्र न तदात्म्यन्न तत्रेतरेतराध्यासः यथा घटपटयोरिति।

पृच्छधातोः "ग्रहिज्यादिभ्योऽङ्कि"ति ङिति सम्प्रसारणे पृच्छेति। तत आचक्षाणणिजन्तात् ण्वुलि पृच्छक इति।

प्रश्नत्वमिति।

यद्धर्मविशिष्टे यद्धर्मावच्छिन्नस्य सम्बन्धो यत्प्रश्नवाक्यात्प्रतीयते तदुत्तरवाक्यात्तद्धर्मविशिष्ट एव तद्धर्मव्याप्यधर्मावच्छिन्नसम्बन्धश्चेत्प्रतीयते भवति तदैव प्रश्नोत्तरभावनिबन्धः। कस्माद् घट इति प्रश्ने दण्डाद् घट इत्युत्तरम्। किङ्करोतीति यत्नविशिष्टे प्रश्ने पचतीत्यनेन पाककृतिबोधः।

प्रश्नवाक्ये यत्प्रधानं समानलिङ्गवचनत्वादिकं तेनैव प्रश्नविषयजिज्ञासानिवर्तकम्। के शिष्या अस्येति प्रश्ने कठा इत्येवोत्तरम् न तु कठ इति।

अभिधानप्रयोजनादिजिज्ञासात्वम्प्रश्नत्वम्। यथा भोः किन्नामधेयन्तव किमर्थमत्राऽगतम् अत्र जिज्ञासापदेन तत्प्रयोज्यकथनानुकूलव्यापारो लक्ष्यते—अविज्ञातप्रार्थनञ्च प्रश्न इत्यभिधीयते। किञ्च—जिज्ञासाविष्करणत्वं प्रश्नत्वम् कीदृशो गवय इति प्रश्नः।

शाब्दिकम्मन्यास्तु—उत्तरप्रयोजिकेच्छा प्रश्न इत्याहुः। अत्र खण्डनखण्डखाद्यम्, प्रश्नशब्दस्याज्ञातार्थविषयकज्ञानानुकूलव्यापारस्वरूपत्वार्थकत्वम्। यदि तद्विषयकं ज्ञानन्नासीत्तदेच्छैव नोदेति।

ज्ञानजन्या भवेदिच्छा इच्छाजन्या भवेत्कृतिः।
व्यापारः कृतिजन्यो हि तज्जन्यं फलमुच्यते॥ १॥

यदि तद्विषयकं ज्ञानमस्ति तदा प्रश्नशब्दार्थो न सङ्घटते। पिष्टपेषणसिद्धसाधनदोषश्च समायाति। ईश्वरसद्भावे किंप्रमाणमिति प्रश्ने किंशब्दोऽपि सहायकः। किंशब्दस्य षडुदाहरणानि "अनिर्द्धारितविशेषविशिष्टम्" यथा कीदृशो गवयपदवाच्य इति, कस्मै नाथ समर्प्यकौरवकुलंव्योमान्तमालंबसे "ईषदर्थः"।

यथा न किमप्यस्याऽस्ति इति। "अतिशयः" यथा किमप्येष प्रगल्भत इत्यादौ। अत्रातिशयितम्प्रगल्भत इति बोधः। "प्रश्नः" यथा किमिदं किन्नरकुण्ठि छष्यत इत्यादौ "वितर्कः" स च द्वयोर्वस्तुनस्सम्भावनात्मकं ज्ञानम्। यथा किमिन्दु〰किम्पद्ममिति। "कुत्सा" किं गौरिति, स किं सखा साधु न शास्ति योऽधिपमित्त्यादि। १ अनिर्द्धारितविशेष २ विशिष्ट ईषदर्थ ३ अतिशय ४ प्रश्न ५ वितर्क ६ कुत्सा इतिभेदात् षडर्थाः〰प्रतिभान्ति। खण्डनखण्डखाद्ये तु चत्त्वार एवार्था निर्दिष्टाः।

यथाविधं यं विषयन्निजस्य प्रश्नस्य निर्वक्ति परो यथोक्त्या,
वाच्यस्तथैवोत्तरवादिनाऽपि तयैव वाचा स तथाविधोऽर्थः ॥
प्रश्नस्य यस्स्याद्विषयस्स वाच्यो वाचाऽनयैवेष भवेन्निरुक्तः ।
इदन्त्वयाऽव्यास्थितमेतयैव गिरा स्वपृच्छा विषयस्य वक्त्रा ॥ इति ।

समानाधिकरणत्वन्तु—

विभिन्नविभक्तिराहित्ये सति अभेदसम्बन्धेनैकार्थबोधजनकत्वम् समानाधिकरणत्वम् ।

नीलो घटः महानवमी परमराज्यम् इति पचन्तन्देवदत्तम्पश्य "लटश्शतृशानचा"विति वैयाकरणा आहुः । नैयायिकास्तु—एकाधिकरणवृत्तिकत्वं समानाधिकरणत्वम् । हेतुसमानाधिकरणात्यन्ताभावेति व्याप्तिलक्षणे । अथवा कोटिद्वयसहचरितत्वं समानाधिकरणत्वम् । यथा धूमधूमाऽभावसमानाधिकरणो वह्निरित्याहुः ।

समानाऽकारकत्वञ्च ।

स्वस्मिन् यादृशी तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारिता तादृशतद्वद्विशेष्यत्वावच्छिन्नतत्प्रकारिताशालित्वं समानाकारकत्वम् ।

किञ्च स्वस्मिन् यादृशनिरूप्यनिरूपकभावापन्नविषयताकत्वं तादृशनिरूप्यनिरूपकभावापन्नविषयताकत्वमिति सूक्ष्मदर्शिनः ।

अथ किम्प्रकृत्यर्थत्वमिति प्रश्नः ।

नच प्रकृतिवृत्त्युपस्थाप्यत्वम्प्रकृत्यर्थत्वमिति वाच्यम् ? कर्तृकर्माद्यर्थककृदन्तीयप्रत्ययविशिष्टे वृत्त्यभावात्तत्र व्यभिचार इति ? रागःपाक इतिभावकृदन्तवत् तत्र समुदायशक्तिस्वीकारात् । नच कृदन्तानुपूर्वीणामनन्तत्वेन गौरवमिति वाच्यम् ? प्रकृतिप्रयोज्यशाब्दबोधविषयत्वम्प्रकृत्यर्थत्वमिति परिष्कारात् । नच पचन्तौ पठन्तावित्यदौ शतृप्रत्ययान्तसमुदायप्रयोज्यविषयत्वस्य धात्वर्थेऽपि सत्त्वात्तस्यापि प्रकृत्यर्थत्वापत्तिरिति वाच्यम् ? प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकव्याप्यधर्मावच्छिन्ननिरूपितवृत्तिप्रयोज्यशाब्दबोधविषयत्वमिति लक्षणात् । वस्तुतस्तु—प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतासमानाधिकरणनिरूपकतानिरूपितनिरूप्यतावद्वृत्तिप्रयोज्यशाब्दबोधविषयत्वम्प्रकृत्यर्थत्वमिति, पुरो मृग्यम् ।

## विशेष्यतावच्छेदकावच्छिन्नत्वञ्च—

स्वाऽभाववदवच्छेदकत्वानिरूपितत्वम् । अर्थात् स्वाऽभाववत्पदार्थनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वाऽभाववत्त्वम् । विशेष्यतावच्छेदकातिरिक्तपदार्थनिष्ठा याऽवच्छेदकतानिष्ठा निरूपकता तादृशनिरूपकतानिरूपितनिरूप्यत्वाऽभाववत्त्वमिति फलितार्थः ।

## स्वावच्छेदकावच्छिन्नत्वञ्च—

स्वाऽभाववदवच्छेदकत्वाऽनिरूपितत्वम् । स्वनिष्ठा या अवच्छेदकता तादृशावच्छेदकताभिन्नो यः पदार्थस्तन्निष्ठा याऽवच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशावच्छेद्यतावन्निष्ठनिरूपकतानिरूपितनिरूप्यत्वाऽभाववत्त्वम् ।

## ( शाब्दबोधकारणनिरूपणम् )

ननु शब्दजन्यबोधविषयत्वमेव शाब्दबोधत्वमिति तत्र कानि कारणानीतिप्रश्नः । आकाङ्क्षायोग्यताऽऽसत्तितात्पर्य्याणि । नीलो घट इत्यादौ अभेदसम्बन्धावच्छिन्ननीलत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वनिष्ठा या निरवच्छिन्नाऽवच्छेदकता-तादृशावच्छेकतानिरूपिता याऽवच्छेद्यता तादृशावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना घटत्वावच्छिन्ना घटनिष्ठा विशेष्यता तादृशविशेष्यताकशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति सुप्रत्ययान्त"नील" इतिपदसमभिव्याहृतसुप्रत्ययान्तघट इति पदसमभिव्याहाररूपाऽकाङ्क्षाज्ञानम् कारणमित्याकाङ्क्षाज्ञानाऽऽकारः । घटः कर्मत्वमानयनं कृतिरिति वाक्याच्छाब्दबोधनिवारणाय घटनिष्ठकर्मतानिरूपकानयनत्वावच्छिन्नम् प्रति घटपदाव्यवहितोत्तरद्वितीयाविभक्तिसमभिव्याहाररूपाकाङ्क्षाज्ञानङ्कारणम् । नच अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामित्यादौ विभि-

---

शाब्दबोधीयकारणशाब्दबोधयोश्च द्विधा कार्यकारणभावः । आत्मनिष्ठसम्बन्धसमवायेन विषयनिष्ठसम्बन्धविषयतया च । समवायसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति समवायसम्बन्धेनोपस्थित्यादिकङ्कारणम् । विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विषयतासम्बन्धेनोपस्थित्यादिकङ्कारणम् । एवम्प्रकारेण कार्यकारणभावद्वैविध्यम् । तत्र प्रथमकार्यकारणभावोपपत्तिस्तु आत्मनिष्ठसम्बन्धसमवायेनेत्यस्य शाब्दबोधस्य तत्कारणीभूतोपस्थितियोग्यतातात्पर्य्यज्ञानताज्ञानानाञ्च ज्ञानरूपत्वेन समवायसम्बन्धेनात्मनि स्थितिर्भवतीति शाब्दबोधादिप्रतियोगिकेनात्मनिष्ठेन

ऽन्वयदर्शनेन कथमाकाङ्क्षेति वाच्यम् ? पुत्रेण सहैव राजपदस्य तात्पर्यग्रहाभिधानात्। अन्वयबोधजननयोग्यतत्तत्पदयोस्सम्बन्ध आकाङ्क्षेति फलितम् । अभेदसम्बन्धावाच्छिन्ननीलत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्नघटत्वावच्छिन्नविशेष्यताकशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति नीलपदजन्यनीलत्वावच्छिन्नोपस्थितिविशिष्टघटपदजन्यघटत्वावच्छिन्नोपस्थितिविशिष्टरूपयोग्यताज्ञानङ्कारणम् । नन्वताहशयोग्यताज्ञानस्य शाब्दबाधात्प्रागसम्भवो वाक्यार्थस्य कस्यचिदपूर्वत्वादिति वाच्यम् ? वाक्योच्चारणानन्तरन्तत्तत्पदार्थस्मरणद्वारा संशयनिश्चयान्तररूपयोग्यताज्ञानसम्भवात् । बौद्धपदार्थस्य स्वप्नाद्यनुरोधेनावश्यकत्वाद्बौद्धम्पदार्थमुररीकृत्यान्वयबोधनिर्विवादात । वह्निना सिञ्चतीति प्रत्युदाहरणम् । सेचनव्यापारे वह्निकरणकत्वस्याऽयोग्यत्वात । वस्तुतस्तु—योग्यताज्ञानस्य न शाब्दबोधहेतुत्वम्वह्नौ सेचनकरणकत्वाऽभावो लोकगम्य इत्यर्थानुपपत्त्या तत्र शाब्दबोधो नेति गाम्भीर्यांव । वस्तुतस्तु—वह्निना सिञ्चतीति वाक्यम्भवत्येव "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति" चेत्युक्तिरत एव वन्ध्यासुतादिशब्दानां प्रातिपदिकत्त्वम् । अद्रवेण वह्निना कथं सेकम्ब्रवीपीत्युपहासापत्तेश्च । स्वप्नाद्यनरोधेन बौद्धपदार्थस्यावश्यकत्वात् वह्निना सिञ्चतीति लोके न प्रयोगोऽप्रामाण्यग्रहात् ।

---

समवायसम्बन्धेनैव कार्यकारणभावः । समवायसम्बन्धेन शाब्दबोधकारणानि आत्मनि भवन्तीति समवायसम्बन्धेन शाब्दबोधरूपकार्यमप्यात्मन्येवास्ति तथा च फलितमाह समवायसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति समवायसम्बन्धेनोपस्थित्यादिकङ्कारणम् । नचैवम्प्रथमकार्यकारणभावे समवायेन घटविषयकोपस्थितिसत्त्वेऽपि पटत्वावच्छिन्नविषयकशाब्दबोध आपद्येतेति वाच्यम् ? तत्तद्विषयप्रवेशेन समवायसम्बन्धेन पटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायसम्बन्धेन पटत्वावच्छिन्नविषयकोपस्थित्यादिकङ्कारणमिति कार्यकारणभावाङ्गीकारात् । द्वितीयकार्यकारणभावोपपत्तिस्तु समवायसम्बन्धेन यथा ज्ञानमात्मनि तिष्ठति तथैव विषयतासम्बन्धेन ज्ञानम्विषयेऽपि तिष्ठतीति ज्ञानस्वरूपाणां शाब्दबोधतत्कारणानाम्विषयतासम्बन्धेन विषयेऽपि सम्भवात् विषतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विषयतासम्बन्धेनोपस्थित्यादिकङ्कारणमिति फलति । नचैवङ्कार्यकारणभावे विष्णुमित्रस्य घटत्वावच्छिन्नविषयकोपस्थित्यादिसत्त्वे यज्ञदत्तस्याऽपि घटत्वावच्छिन्नविषयकशाब्दबोधस्स्यादनिष्ट इति वाच्यम् ? कार्यकारणभावे तत्तत्पुरुषीयत्वनिवेशेन

अभेदसम्बन्धावच्छिन्ननीलत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्नघटत्वावच्छिन्नविशेष्यताकशालिशाब्दबोधं नीलो घट इति वाक्यञ्जनयत्वित्याकारकतात्पर्य्यज्ञानं तत्तच्छाब्दबोधकारणम् । अत एव सैन्धवमानयेत्यादौ (द्व्यर्थकसैन्धवमानयेत्यादौ) तात्पर्य्यज्ञानकारणाद्भोजनसमये लवणार्थप्रत्ययो यात्राप्रकरणेऽश्वप्रत्यय इति लोकव्यवहारसङ्गतिः । नच—

शक्तिग्रहव्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः ॥

इति शिष्टनियमवाक्येन प्रकरणादिनैव सैन्धवपदार्थस्य तत्तत्स्थले प्रतीतिरिति तात्पर्य्यज्ञानस्य कथङ्कारणत्वमिति वाच्यम् ? तस्मिन्प्रकरणे किन्तात्पर्य्यम् कीदृशतात्पर्य्यविशिष्टम्प्रकरणमित्याद्यनुभवेन तात्पर्य्येणव प्रकरणमपि निर्णेयमिति लघीयसा प्रकारेण तात्पर्य्यज्ञानस्यैव शाब्दबोधे कारणत्वस्वीकारात् । अत एव नानार्थे तात्पर्य्याद् विशेषावगतिरिति न्यायाकारस्सार्थकस्समुपपद्यते । अत एव शुकोच्चारितवाक्ये मौनिपुरुषोच्चारितवाक्ये च शिक्षयितुस्स्वभावस्येश्वरस्य च तात्पर्य्यज्ञानङ्कारणमनायत्या सार्वजनीनमिति ।

अव्यवहितोत्तरनिवेशविचारलेखः ॥ नन्वेकनीलो घट इत्येतद्विषयकशाब्दबुद्धित्वावच्छिन्नरूपकार्य्यत्वत्वावच्छिन्नम्प्रति आकाङ्क्षायोग्यताऽऽसत्तितात्पर्य्याणां कारणत्वमनुपपन्नम् । किञ्च अनेककारणाऽभ्युपगमे परस्परजन्यबोधे व्यभिचारः । यत्र स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानजन्यनीलप्रकारकघटविशेष्यकबोधस्तत्रैव नीलपदजन्यनीलत्वावच्छिन्नघटपदजन्यघटत्वावच्छिन्नोपस्थितिरूपयोग्यताज्ञानन्नास्ति परन्तु नीलप्रकारकघटविशेष्यकबोधस्त्वस्त्येव कार्य्यमस्ति

---

विषयतासम्बन्धेन देवदत्तीयघटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति विषयतासम्बन्धेन देवदत्तीयघटत्वावच्छिन्नोपस्थित्यादिकङ्कारणमिति द्वितीयः कार्यकारणभावः ।

ननु कार्यकारणभावद्वये किम्वैलक्षण्यम् कुत्र च लाघवम्पूर्वत्र विषयनिवेशः अपरत्र तत्पुरुषीयत्वनिवेश इत्युभयकार्यकारणभावयोस्तुल्यत्वमेव, किञ्च कश्च कार्यकारणभावस्सार्वत्रिक इति चेन्न ? नीलो घटः पीतो घटःसुन्दरो घट इत्येवम्विशेषणानि बहूनि, विशेष्यन्त्वेकमेव अत्र विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विष-

हेतुर्नास्ति अतो हेतो ऽकार्य्यतावच्छेदकानाक्रान्तत्वन्दोष इति चेन्न ? स्वन्त-नीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानाऽव्यवहितोत्तरजायमानाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानङ्कारणम्। एवं नीलपदजन्यनीलत्वावच्छिन्नघटपदजन्यघटत्वावच्छिन्नोपस्थित्यव्यवहितोत्तरजायमानाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति नीलपदजन्यनीलत्वावच्छिन्नघटपदजन्यघटत्वावच्छिन्नोपस्थितिरूपयोग्यताज्ञानं कारणम् । एवमभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधन्नीलो घट इति वाक्यञ्जनयत्वित्याकारकतात्पर्य्यज्ञानाऽव्यवहितोत्तरजायमानाऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दं प्रति नीलघटपदार्थविशिष्टतात्पर्य्यज्ञानङ्कारणम् । एवन्नीलपदाव्यवहितोत्तरवर्त्तिघटपदत्वरूपाऽऽसत्तिज्ञानाऽव्यवहितोत्तरजायमानाभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधम्प्रति नीलपदाव्यवहितोत्तरघटपदत्वरूपासत्तिज्ञानङ्कारणम् । एवम्प्रकारेण तत्तत्कारणाऽव्यवहितोत्तरत्वन्निवेश्य व्यवहितहेतो ऽकार्यतावच्छेदकानाक्रान्तत्वाऽभावात ।

आसत्तिज्ञानमपि शाब्दबोधे कारणम् । तत्पदाव्यवहितोत्तरवर्त्तितत्पदत्वमासत्तित्वम् । प्रकृतान्वयबोधानुकूलत्वया तत्तत्पदजन्यपदार्थबोधजनकत्वेन तात्पर्यविषयीभूततत्तत्पदाऽव्यवहितोत्तरतत्तत्पदत्वमासत्तित्वम् । गिरिःभुक्तम् अग्निमान् देवदत्तेनेत्यादौ गिरिपदार्थभुक्तपदार्थयोरन्वयो नापेक्षाविषयस्तत्र तयोस्तात्पर्य्याऽभावात । किन्तु गिरिपदार्थाग्निमत्पदार्थयोरेवासत्तिरिति पदार्थविशिष्टपदव्यवधा-

---

यतासम्बन्धेनोपस्थित्यादिकङ्कारणमिति विषयनिष्ठसम्बन्धेन कार्यकारणभावे महल्लाघवम् । तथाहि—उक्तवाक्ये आत्मनिष्ठसमवायसम्बन्धेनेतिकार्यकारणभावेन शाब्दबोधे समवायसम्बन्धेन अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायसम्बन्धेन अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकोपस्थित्यादिकङ्कारणमिति । एवं समवायेन अभेदसम्बन्धावच्छिन्नपीतत्वावच्छिन्नप्रकारतानिरूपित घटत्वावच्छिन्नविशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायेनाभेदसम्बन्धावच्छिन्नपीतत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकोपस्थित्यादिकङ्कारणमितिमुद्रया सुन्दरत्वावच्छिन्नप्रकारतेति पृथक् २ कार्यकारणभावे महद्गौरवम् । विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति इतिरीत्या विषयनिष्ठविषय-

जेन शाब्दबोधः। तथा च अभेदसम्बन्धावच्छिन्ननीलत्वनिष्ठा या निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता यावऽच्छेद्यता तादृशावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना नीलत्वावच्छिन्ना नीलनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या घटत्वनिष्ठा निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशाऽवच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना घटत्वावच्छिन्ना घटनिष्ठा विशेष्यता तादृशविशेष्यताकशालि शाब्दबोधत्वावच्छिन्नम्प्रति नीलपदनिष्ठवृत्तिज्ञानाधीनोपस्थितिविशिष्टनीलपदाऽव्यवहितोत्तरवर्त्तिघटपदार्थनिरूपितशक्तिमद्घटपदस्वरूपाऽसत्तिज्ञानङ्कारणम्। उदाहरणप्रत्युदाहरणे स्फुटतरे। नच मौनिश्लोकादौ कण्ठताल्वाद्यभिघातजन्यत्वमुच्चारणत्वन्नास्तीतिवर्णसमुदायात्मकपदस्वाऽभावात् कथङ्कारमासत्तिज्ञानमिति वाच्यम्? पदाऽभावेऽप्यानुमानिकपदज्ञानस्यावश्यकत्वेनाऽदोषात्। अन्यथा पदज्ञानरूपकारणाऽभावेन मौनिश्लोकादौ शाब्दबोधस्यैवानापत्तेः। तथा ययोः पदयोरन्वयबोधजनकत्वेन मौनिनस्तात्पर्य्यमवगम्यते तयोरव्यवधानेनानुमानिकज्ञानम्वर्त्तत एवेति तत्त्वम्। न च स्थाल्यामोदनम्पचति गच्छति देवदत्तो गृहमित्यादौ ओदनादिपदव्यवधानेन कथमासत्तिज्ञानङ्कारणन्तत्र कथम् भवेदिति वाच्यम्? प्रकृतान्वयबोधानुकूलत्वेन तत्तात्पर्य्यविषयीभूतत्वेन चासत्यभावाभावात्। एतत्पदम्वाक्यम्वैतदर्थबोधनाय मयोच्चार्य्यत इतीश्वरेच्छा तात्पर्य्यम्।

स्वानवच्छेदकानवच्छिन्नत्वञ्च।

स्वनिरूपकतावच्छेदकताविशिष्टान्याऽवच्छेदकत्वानिरूपितत्वमेव। विशिष्टान्यत्वञ्च–सामानाधिकरण्यसम्बन्धेन व्यभिचारित्वसम्बन्धादिभिर्वा। तेन प्रमेयस्येदमस्तीत्यादौ स्वानवच्छेदकाऽप्रसिद्धावपि दोषाभावः।

---

तासम्बन्धेन शाब्दबोधे तु घटत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन तत्पुरुषीयशाब्दबुद्धित्वावच्छिन्नम्प्रति घटत्वावच्छिन्नविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन तत्पुरुषीयोपस्थित्यादिकं कारणमित्येकेनैव कार्यकारणभावेन नीलो घटःपीतो घटः सुन्दरो घट इत्यादीनामेकघटविशेष्यकवाक्यानां सर्वेषामपि शाब्दबोधानुगमः। अयमाशयः, यत्र यत्र नीलत्वपीतत्वसुन्दरादौ प्रकारतावच्छेदकतासम्बन्धेन शाब्दबोधकारणीभूतमुपस्थित्यादिकम्भविष्यति तत्रतत्रैव प्रकारतावच्छेदकतासम्बन्धेन शाब्दबोधोऽपि भविष्यतीति बहूनां विशेषणीभूतानान्नीलपीतादीनान्नामग्रहणचर्चा नास्ति किन्तु

स्वानवच्छेदकानवच्छिन्नत्वञ्च ।

परस्परनिरूप्यनिरूपकभावेऽपि स्वनिरूपितावच्छेदकताविशिष्टाऽन्याऽवच्छेदकतावदन्यत्वम् । अत्रावच्छेदकतावत्वञ्च—स्वावच्छेद्यप्रकारतानिरूपितविशेष्यत्वावच्छेद्यत्वसम्बन्धेन । इदञ्चावच्छेद्यत्वं साक्षात्परम्परासाधारणम् । परम्परया च तदवच्छेद्यप्रकारतानिरूपितविशेष्यतत्त्वावच्छेद्यत्त्वसम्बन्धेन । पुरुषत्त्वनिष्ठावच्छेदकत्त्वावच्छेद्यप्रकारतानिरूपितविशेष्यतत्त्वावच्छेद्यत्त्वं स्वत्त्वनिष्ठावच्छेदकतायां परम्परयाऽपि नास्ति ।

आनुपूर्वी च ।

वर्णानाम्पूर्वापरीभावो यथा घट इत्यादौ घकारोत्तराकाराकारोत्तरटकारटकारोत्तराकार इति । पूर्वस्य योग्यमनुपूर्वमनुपूर्वमेवानुपूर्वी स्वार्थिक ष्यञ् प्रज्ञादिभ्योऽणित्यण् तदन्तत्वान्ङीप् कम्बुग्रीवादिमद्व्यक्त्यवच्छिन्नशक्तघटपदसमानानुपूर्वीकत्वम् घश्च टश्चानयोस्समाहारो घटमित्यादौ । तत्समानानुपूर्वीकत्वन्तस्मिन् इति । तत्तद्वर्णोत्तरतत्तद्वर्णत्ववत्त्वन्तत्समानानुपूर्वीकत्वम् इति लक्षणं सामान्यम् । नचैवं लक्षणे घकारोत्तराकारोत्तरटकारोत्तरात्वस्य नीलघटपदेऽपि सत्वात घटपदसमानानुपूर्वीकत्वन्नीलघट इति विशिष्टपदस्याऽप्यनिष्टमापद्येतेति वाच्यम् ? तत्पदविशिष्टपदत्वं तत्समानानुपूर्वीकत्वम् । वैशिष्टयञ्च—स्वघटकताऽनवच्छेदकावच्छिन्नाऽघटितत्वस्व घटकतानवच्छेदकावच्छिन्नाघटितत्वसम्बन्धावच्छिन्नस्ववृत्तित्वोभयसम्बन्धेन । तथा च घटपदसमानानुपूर्वीकत्वन्न नीलघटपदे घटपदघटकताऽनवच्छिन्ननीलत्वावच्छिन्नघटितत्वमेवेति लक्षणेऽव्यभिचारात् । न च पदत्वस्य पाणिनीयसङ्केतसम्बन्धेन पदत्ववत्परत्वेनानुगतत्वेऽपि सरो रसः नदी दीनः राज जरा ताल लता इत्यादिशब्दानां समानानुपूर्वीकत्वमापतेत इति वाच्यम् ? स्वार्थबोधप्रयोजकतावच्छेदकधर्म-

---

विशेष्यस्य घटस्यैकत्वात्तस्यैव नामग्रहणचचेंतिविषयनिष्ठविषयतासम्बन्धेन कार्यकारणभावे लाघवस्य सुगमत्वात् । एवमेव यत्र विशेष्याणि बहूनि विशेषणन्त्वेकमेव नीलपटः नीलो घटःनीलो मठ इत्यादवाक्ये तत्र यदि आत्मनिष्ठसमवायेनेतिप्रथमकार्यकारणभावेन शाब्दबोधस्वीकारे समवायेनाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायेनाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकोपस्थित्यादिकङ्कारणमितिरीत्या पृथक् २ कार्यकारणभावेन महद्गौरवम् । विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विषयतासम्बन्धेनोपस्थित्यादिकङ्कारणमिति

वत्त्वमिति तृतीयसम्बन्धनिवेशेन लतातालादिशब्दार्थयोर्भेदेन तत्तत्प्रयोजकधर्मस्य भिन्नत्वेनाऽदोषात्। नच तृतीयसम्बन्धनिवेशे निपातस्याऽनर्थकस्य "प्रातिपदिकसंज्ञा वक्तव्येति" वार्त्तिकोदाहरणे केवलपादपूरणमात्रार्थकत्वे च० वै० तु० ही० त्यादौ अर्थबोधकत्त्वाऽभावेन तस्योत्समानानुपूर्वीकत्वन्न स्यादिति वाच्यम्? तत्तत्समानानुपूर्वीकत्वन्तत्तत्पद एव। तथाहि घटपदसमानानुपूर्वीकत्वं घटपद एव नतु नीलघटे। स्वनिष्ठवत्त्वावच्छिन्नविषयतानिरूपितात्त्वावच्छिन्नविषयतानिरूपितटत्वावच्छिन्नविषयतानिरूपितात्त्वावच्छिन्नविषयत्वावच्छिन्नभेदप्रतियोगितावच्छेदकविषयतात्वसमनियतज्ञानविषयतापर्य्याप्त्यवच्छेदकधर्मवत्त्वं घटे घटसमानानुपूर्वीकत्वम्। पटादिसमानानुपूर्वीकत्वमप्यटादिषु बोध्यमिति निर्विवादः प्रकारः।

## सम्बन्धविचारः।

ननु सर्वत्र अधाराऽधेयभावः प्रतियोग्यनुयोगिभावः। जन्यजनकभावः निरूप्यनिरूपकभाव इति शाब्दबोधे श्रूयते। तत्रायं सन्देहः, सम्बन्धस्योभयपदार्थनिरूपितत्वात विशिष्टे आधाराऽधेयभावे सम्बन्धत्वम् संयोगादिप्रसिद्धसम्बन्धानामुभयनिष्ठत्वदर्शनवत। ननु विशिष्टाधाराऽधेययोरेकत्र मिलितयोर्न वर्त्तमानत्वम् कुत्राऽपि। तस्मादेकसम्बन्धेनैव सम्बन्धिनोस्सम्बन्धत्वम्। आधेये स्वरूपेण आधारे च निरूपकतया प्रत्यासन्नस्याधेयत्त्वस्य सम्बन्धत्वे न कोऽपि दोष इति। अनुयोगिवृत्तिधर्मस्यैव सम्बन्धत्वस्वीकारात क्वचिदाधारतासम्बन्धः। यथा घटस्य भूतले, क्वचिदाधेयतासम्बन्धः यथा भूतलस्य घटे। नीलो घट इत्यादौ नीले प्रति-

---

द्वितोयनियमेन शाब्दबोधे तु तु अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन तत्पुरुषोयशाब्दबुद्धित्वावच्छिन्नम्प्रति अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितविषयता (धर्मितावच्छेदकता) सम्बन्धेनोपस्थित्यादिकङ्कारणमित्येकेनैव कार्यकारणभावेनानेकविशेष्यकाणामनुगमः। यत्र २ घटत्वपटत्वमठत्वादौ धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधकारणीभूतमुपस्थित्यादिकम्वर्त्तते तत्र तत्रैव धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधोऽपि भविष्यतीति विशेष्यभूतानां घटपटमठादीनान्न चर्चा किन्तु विशेषणस्य नोलस्यैकत्वात्तस्यैव चर्चेति। अयम्भावः यत्र २ विशेषणानि बहूनि तत्र२प्रकारतावच्छेदकतासम्बन्धेन कार्यकारणभावः, यत्र२विशेष्याणि बहूनि तत्र२धर्मितावच्छेदकतासम्बन्धेन कार्यकारणभावः। एवञ्च निरुक्तलाघवात विषयतासम्बन्धेन तत्पुरुषोयशाब्दबुद्धित्वावच्छिन्नम्प्रति विषयतासम्बन्धेन तत्पुरुषीयोपस्थित्यादिकं कारणमित्येव कार्यकारणभावो लाघवानुगृहीत इत्यलम्।

योगिता घटेऽनुयोगिता, घटे ज्ञानमित्यत्र घटस्य विषयत्वम् ज्ञानस्य विषयित्वम् । तथा च एकत्रैव सम्बन्धत्वस्वीकारो लाघवादिति नवीनास्तन्न ? आधारतानिरूपिताधेयत्वप्रतियोगितानिरूपितानुयोगित्वादीनाम्परस्परनिरूप्यनिरूपकभावापन्नानान्विशिष्टानामेवाधाराधेयभावसम्बन्ध इत्येवम्व्यवह्रियमाणानां सम्बन्धत्वन्न तु प्रत्येकं सम्बन्धत्वम् । वह्निमान् पर्वत इत्यादौ वह्नित्वावच्छिन्नत्वप्रतियोगित्वस्य संसर्गत्वे वह्नित्वावच्छिन्नत्वप्रतियोगित्वानां यथा संसर्गत्वन्तथाऽधाराऽधेयत्वयोरन्यतयोर्वा संसर्गत्वे न किमपि बाधकम् । तस्मादनुयोगिवृत्तिधर्मस्यैव संसर्गत्वमिति नवीनमतन्न ज्यायस्तरम् । अत्र शाब्दिकलक्षणमपि सहायकम् सम्बन्धो हि सम्बन्धिभ्यां भिन्नो द्विष्ठः विशिष्टबुद्धिनियामकश्चेति ।

## चैत्रस्य गुरुकुलमिति ।

चैत्रनिरूपितगुरुत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावान् गुरुरिति शाब्दबोधस्तत्र गुरुपदार्थो गुरुत्वाकाङ्क्षः । गुरुत्वञ्च चैत्रनिरूपणाकाङ्क्षम् तथा च प्रयोजनाऽभावात्कुलमिति पदम्वाक्ये न देयम् ।

## अथ परिष्कारप्रवर्द्धकसम्बन्धज्ञानम् ।

ज्ञानपार्थक्ये विषयपार्थक्यम् यथा कारणन्तथा विषयैस्सह तत्सम्बन्धानामपि कारणत्वम् । कालाऽकाशादिव्यापकपदार्थानां सर्वैः पदार्थैस्सह कश्चन सामान्यसम्बन्धः केपाञ्चिद् ज्ञानीयविषयाणां घटादीनां कालम्मध्ये संस्थाप्य १ कालिकसम्बन्धः २ कालिकविशेषणतासम्बन्धः ३ स्वसंयुक्तकालसंयोगित्वसम्बन्धः ४ स्वाधारकालाऽधेयत्वसम्बन्धः । तदीयं ज्ञानं मध्ये संस्थाप्य १ स्वविषयकज्ञानविषयत्वसम्बन्धः२ स्वविषयिज्ञानविषयत्वसम्बन्धः ३ स्वनिष्ठविषयतानिरूपकज्ञाननिरूपितविषयताऽश्रयत्वसम्बन्धः ४ स्वनिष्ठविषयतानिरूपितज्ञाननिष्ठविषयितासमानाधिकरणविषयितानिरूपितविषयताऽश्रयत्वसम्बन्धः । एवम्विशेषसम्बन्धा अपि विज्ञेयाः । यथा पूर्वम्पाषाणनिर्माणम्पश्चात्पाषाणेन गृहनिर्मितिस्तथैव पूर्वं घटघट-

---

घटो न पट इति तु वाक्यम्भवति घटो न घट इति न भवति । घटो न पट इत्यत्र घटपटयोःप्रतियोग्यनुयोगिभावलक्षणसम्बन्धः अथवा घटे पटस्य स्वप्रतियोगिकभेदविशिष्टत्वं सम्बन्धः पटप्रतियोगिकभेदवान् घट इत्यर्थः । अत्र अभेदसम्बन्धावच्छिन्नपटत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधम्प्रति नञ्पदजन्योपस्थितिःकारणमिति कार्यकारणभावः ।

त्वयोऽपार्थक्येन ज्ञानं कृत्वा पश्चात् समवायज्ञाने सविकल्पकत्वं पूर्वन्तु घटघटत्वे इत्याकारकन्निर्विकल्पकम् । सम्बन्धज्ञानेनैव सविकल्पकत्वं सिद्ध्यति । सर्वेषां सम्बन्धानाम्विशेषाणां परस्परन्निरूप्यनिरूपकभावः । यथा भूमिष्ठऽपुरुषः यदिविषयभूम्याऽपुरुषेण आधेयत्वसम्बन्धः तदा अवश्यमेव पुरुषस्य भूम्या आधारत्वसम्बन्धः । वृक्षस्य शाखा यदि वृक्षपदार्थस्य शाखायामवयवत्वसम्बन्धस्तर्हि शाखाया अपि वृक्षेण साकमवयवित्वसम्बन्धः । संयोग १ समवाय २ स्वरूपाख्यसम्बन्धानां सामान्यानां निश्चायको विलक्षणस्सम्बन्धोऽनुयोगिता प्रतियोगिताचेति । यथा चन्द्रतुल्यम्मुखम् चन्द्रप्रतियोगिकसादृश्यानुयोगिकम्मुखमित्यर्थोऽत्र सादृश्यसम्बन्धस्य निश्चायको निर्णायको हि सम्बन्धऽ प्रतियोगिता सादृश्यस्य मुखेऽनुयोगितासम्बन्धः । प्रतियोगित्वम्विशेषणरूपम् अनुयोगित्वम्विशेष्यरूपमितिफलितम् । भूतले घटाऽभावः अभावस्य स्वरूपसम्बन्धेन घटे प्रतियोगित्वं भूतलेऽनुयोगित्वमिति विषयत्वम्विषयता वा यत्राऽस्ति स एव विषयः । विषयिता यत्राऽस्ति स एव विषयी । विशेष्यता यत्राऽस्ति स एव विशेष्यपदार्थः । प्रकारता यत्रास्ति स एव प्रकार इति । जन्यतासम्बन्धो यत्राऽस्ति स एव जन्यः आश्रयत्वं यत्राऽस्ति स आश्रयः । स्वामित्वं यत्राऽस्ति स एव स्वामी ।

यत्र कुत्रचिद्विशिष्टज्ञानम्भवति तत्र तत्रानेकपदार्थानाम्विशेष्यविशेषणभावेनैव ।

दर्शनशास्त्रे समष्टिव्यष्टिव्यवहारः । सहस्रलक्षवृक्षसहितवने समुदायरूपतात्पर्येण वनमित्येकवचनं प्रयुज्यते तत्रैव समुदायरूपे समष्टिपदप्रयोगो न्याय्यः । यदि तत्रैव वने अवयवगतसंख्यातात्पर्येण वृक्षा इति प्रयुज्यते तत्रैव व्यष्टिपदप्रयोगो न्याय्यः, लोकव्यवहारदशायां घटपटादिप्रत्येकपदार्थज्ञानम् व्यष्टिरूपम् । ईश्वरज्ञानं समष्टिरूपम् । अनुव्यवसायज्ञानङ्किम्—नीलम्बस्त्रमिति पूर्वं ज्ञानम् यस्य पुरुषस्य जातन्तस्यैव पुरुषस्य नीलम्बस्त्रमहञ्जानामि इत्याकारकं ज्ञानम् जातम् । द्वितीयज्ञानम्प्रथमज्ञानम्विषयीकरोति । तत्र द्वितीयज्ञानमेवानुव्यवसायात्मकम् , ईश्वरविषयकनिर्विकल्पकज्ञानन्नानुव्यवसायात्मकन्द्वितीयज्ञानाऽभावात् । ज्ञानजन्यज्ञानत्वमनुव्यवसायत्वमिति फलितार्थः ।

---

घटो न घट इति नानुमानन्न शाब्दबोधश्च घटा न घट इत्यत्र धर्मी घटस्तत्र प्रकारो घटभेदःप्रकारतावच्छेदको घटः, प्रकारतावच्छेदकतावच्छेदकं घटत्वम् , धर्मितावच्छेदकमपि घटत्वमेव घटे समवायेन घटत्वम्प्रकारः, घटभेदे घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटःप्रकारः स च भेदस्स्वरूपसम्बन्धेन घटे विशेष्ये प्रकार इति पदार्थ-

"जात्याकृतिव्यक्तयः पदार्थः" इति गौतमसूत्रानुरोधेन घटघटत्वसमवायेषु शक्तिस्तथा च घटे घटत्वं समवायेन भासत इति। ननु घटे घटत्वं समवायेन भासत इत्यस्य कोऽर्थः ? निरूपितत्वं सप्तम्यर्थमादाय किं घटनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वं घटत्वेऽयमर्थः, अथवा समवायसम्बन्धावच्छिन्नघटत्वनिरूपिताधिकरणत्वं घटेऽयमर्थः ? उभयत्रापि वृत्तित्वाधिकरणत्वयोरभेदसम्बन्धे घटघटत्वयोरेवभाने पर्य्यवसानम्। भेदसम्बन्धस्वीकारेऽभीष्टबोधो न स्यात् अस्मिन्सन्देहे किमुत्तरमिति विचारयन्तु धीधनाः।

ननु घटवद्भूतलमित्यादौ संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताक इति सार्वजनीनबोधस्तत्रेत्थम्विचारक्रमः। संयोगेन भूतले घटावगाहनमिति फलितम्। संयोगेन भूतले घटावगाहित्वमित्यस्य कोऽर्थः ? किं संयोगेन घटाधिकरणत्वम् अथवा भूतलनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्ववत्त्वम्। किञ्च तादृशाधिकरणत्ववृत्तित्वयोर्भूतलघटाभ्याङ्कीदृक् सम्बन्धः। तयोस्ताभ्यामभेदसम्बन्धस्तर्हि सिद्धो भेदो विरुद्ध्येत। वृत्तित्वाधिकरणत्वयोरपि वृत्तित्वेन अधिकरणत्वेन वाऽन्यसम्बन्धेन स्वीकारे वृत्तित्वाधिकरणत्वयोस्सम्बन्धविशेषजिज्ञासायां सम्बन्धविशेषावच्छिन्नत्वनिवेशे तयोरपि भेदेन अभेदेन वा प्रश्नजिज्ञासायामनवस्थाप्रसङ्गः। कुत्रचिद् गत्वा सम्बन्धानङ्गीकारेण वाक्यार्थस्वीकृतिरिति चेत्तर्हि ? प्रथम एव सम्बन्धानङ्गीकारो न्याय्यः किं शिरोवेष्टननासिकास्पर्शन्यायानुसरणेन। तस्मात्सम्बन्धरहितः कश्चन मानसो बोध एवेत्यधिकमुत्तरम्मृग्यम्।

## तत्पुरुषसमासश्च।

यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वयबोधं प्रति यः समासः स्वरूपयोगः स तदर्थस्य तदर्थे तत्पुरुषः। यथा ग्रामगतादिः।

अपरे च—समासप्रयुक्तलक्षणाशून्योत्तरनामकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामकसमासः। यथा राजपुरुषादिः।

---

निर्देशः। नीलो घट इतिवत्तद्धसंभेदः कारणमिति सार्वत्रिकनियमात् अत एव घटो घट इत्यादावपि न शाब्दबोधःतद्धसंभेदाऽभावत्। नच घटो नीलघट इत्यादावपि नञ्जवयवापर्यासन्यायेन घटत्त्वस्य सत्त्वात्तद्धसंभेदाऽभावात्कथं शाब्दबोध इति वाच्यम् ? तद्धसंवृत्तिर्याऽभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्त्वसम्बन्धेन शाब्दबु-

## कर्मधारयश्च—

समासविशेषः "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति सूत्रम् । अत्रेदमनुसन्धेयम् , कर्मधारये विशिष्टार्थे न शक्तिर्नवा लक्षणा , विनापि ताभ्यां विवक्षितान्वयबोधोपपत्तेः । शाब्दिकास्तु समासमात्रे विशिष्टार्थेऽतिरिक्तां शक्तिं कल्पयन्ति ।

परेतु–क्रमिकम्' अव्यवहितम् यन्नामद्वयम् एकस्य नाम्नोऽर्थे धर्मिणि तादात्म्येन अपरनाम्नोऽर्थस्यान्वयबोधं प्रति समर्थम् तादृशनामद्वयकर्मधारयः । यथा नीलोत्पलमित्यादौ उत्पलादिपदस्यार्थे नीलादिपदार्थस्य तादात्म्येनान्वयः । तथा पुरुषसिंह इत्यादावपि पुरुषादावुत्तरपदलक्ष्यस्य सिंहादिसदृशस्य तादात्म्येनान्वयः । कुम्भस्य समीपमित्यर्थबोधकस्तूपकुम्भादिर्न तादात्म्येनान्वयबोधक इति न तत्रातिव्याप्तिः ।

अन्ये तु–समासप्रयुक्तलक्षणाशून्यतुल्यार्थकोभयनामकसमासः कर्मधारयः । यथा नीलोत्पलमित्यादौ । अत्र पञ्चमूलीत्यादावपि तुल्यार्थकोभयनामकत्वसत्त्वात्तद्वारणाय समासप्रयुक्तलक्षणाशून्येति नामविशेषणम् । धवखदिराविति द्वन्द्ववारणाय तुल्यार्थकेति नामविशेषणम् । नीलोत्पलमित्यत्र यद्यपि नीलपदे नीलगुणाश्रये निरूढलक्षणा तथापि तस्याःसमासप्रयुक्तत्वाभावात नाव्याप्तिः । नामद्वयस्य तुल्यार्थत्वाच्च लक्षणसमन्वयः सम्भवतीति बोध्यम् ? स्तोकपक्का इत्यादौ क्रियाविशेषणैः कर्मधारय एव । महाकविर्महाविज्ञ इत्यादौ कवित्वादाविव प्रकृतेऽप्यनेकनामार्थैकदेशे पचनादावपरनामार्थस्य अभेदान्वयबोधकतया कर्मधारयत्वस्य सम्भवात । स्तोकपक्का इत्यादौ अमः तादात्म्यवाचित्वे तु तत्पुरुषःसम्भवत्येव । क्रियाविशेषणैः समास एवाव्युत्पन्न इति तु न युक्तम् ! स्तोकनम्रा स्तनाभ्यामित्यादेः कालिदासाद्यैः प्रयुक्तत्वात् । कर्मधारये समासे न शक्तिर्नवा लक्षणा, नी-

---

द्धित्त्वावच्छिन्नम्प्रति तद्धर्मभेदःकारणम् तद्धर्मवृत्तित्वञ्च प्रकारतायां स्वनिरूपितावच्छेदकतात्त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । स्वम् अभेदसम्बन्धावच्छिन्ना प्रकारता घटो घट इत्यत्र तद्धर्मो घटत्वगतैकत्वम् तद्वृत्तिर्या स्वरूपसम्बन्धेन घटनिष्ठा अभेदसम्बन्धावच्छिन्ना प्रकारता ( घटे या स्वरूपसम्बन्धेनाभेदसम्बन्धावच्छिन्ना प्रकारता वर्त्तते सा उक्तसम्बन्धेन तद्धर्मे घटत्वगतैकत्वेऽपि वर्त्तते ) तादृशप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता ( घटो घट इत्यत्र प्रकारत्वम्विशेष्यत्वञ्च घटस्यैव ) घटप्रकारकघटविशेष्यकबोधस्यैवापाद्यमानत्वात् तादृ-

त्पदार्थस्योत्पलपदार्थो अभेदसम्बन्धेनैवान्वयोपपत्तौ शक्तिलक्षणानङ्गीकारात् । अत एव तत्पुरुषात् कर्मधारयो लघीयान् भवति । तथाहि "निषादस्थपतिं याजयेत्" इतिश्रुतौ बहुव्रीहितत्पुरुषसमासावपेक्ष्य कर्मधारय एव लक्षणाद्यभावाल्लघीयानिति । अत्रेदमनुसन्धेयम्, निषादस्य संकरजातिविशेषस्य शूद्रान्तर्गततया "स्त्रीशूद्रौ नाधीयाताम्" इत्यनेन निषिद्धत्वाद् वेदसामान्यानधिकारेऽपि "निषादस्थपतिं याजयेत्" इति विशेषश्रुतियाजनान्यथानुपपत्त्यैव यागमात्रोपयुक्तमध्ययनं निषादस्य कल्प्यते । तथा च स्त्रीशूद्राविति सामान्यशास्त्रघटकाध्ययनपदस्य विशेषतः प्राप्ताध्ययनेतराध्ययनपरत्वं वाच्यम् । तेन निषादस्य यागोपयुक्ताध्ययनेतराध्ययननिषेधः, शूद्रान्तरस्य तु अध्ययनमात्रनिषेधः सिद्ध्यति इति ।

## कारकम्—

यद्धातूपस्थाप्ययादृशार्थो अन्वयप्रकारीभूय भासते यः सुबर्थः तद्धातूपस्थाप्यतादृशक्रियायां कारकम् । यथा वृक्षात् पतति, व्याघ्राद् बिभेतीत्यादौ ब्राह्मणाय ददाति, पुत्राय क्रुध्यतीत्यादौ दात्रेण छिनत्ति, घटत्वेन जानातीत्यादौ—स्थाल्यां पचति, शुक्तौ भासत इत्यादौ–ग्रामे गच्छति, घटम्पश्यतीत्यादौ–चैत्रेण पच्यते, घटेन भूयत इत्यादौ च पतप्रभृतिधात्वर्थे पतनादौ पञ्चम्याद्युपस्थापितो विभागादिः प्रकारीभूय भासत इति । तत्तद्धातूपस्थापिततत्तत्क्रियायां विभागादिकं प्रकृते कारकम् ।

अन्ये तु–यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स तादृशधात्वर्थे कारकतया व्यपदिश्यते । तेन वृक्षाव पततीत्यादौ वृक्षादेरपि पतनादिक्रियायामपादानत्वादिकारकव्यवहारः ।

परे तु—क्रियाप्रकारीभूतोऽर्थः कारकमिति शाब्दिकाः ।

केचित्तु—कारकत्वञ्च–क्रियान्वितविभक्त्यर्थान्वितत्वम् । अस्ति च कर्मादौ क्रियान्वितसुब्विभक्त्यर्थान्वय इति समन्वयः । चैत्रस्य तण्डुलं पचतीत्यादौ तु सम्बन्धिनि चैत्रादौ षष्ठ्यर्थसम्बन्धस्य तण्डुलादिनामार्थान्विततया क्रियानन्वित-

---

र्थविशेष्यतावच्छेदकता घटत्वे–विवक्षितपर्याप्तिसम्बन्धस्य प्रतियोगिता तादृशविशेष्यतावच्छेदकतायाम्वर्तते तत्र विशेष्यतावच्छेदकतात्वमपि वर्तते इति सा प्रतियोगिता विशेष्यतावच्छेदकतात्वावच्छिन्ना जाता तथा च उक्तविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तेरनुयोगितावच्छेदकं घटत्वगतैकत्वम् विशेष्यतावच्छेदकतायाः पर्याप्तिर्घटत्वे विवक्षिता, घटत्वमनुयोगि अनुयोगितावच्छेदकं घटत्वग-

त्वान्नातिव्याप्तिः । मैत्रस्य पचतीत्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः । षष्ठ्यर्थसम्बन्धस्य नामार्थेनैव तथा क्रियायाः कर्मत्वादिनैव साकाङ्क्षतया परस्पराकाङ्क्षाविरहात् । ओदनस्य पक्ता मैत्रस्य पाक इत्यादौ कर्मत्वकर्तृत्वार्थिका षष्ठी कारकविभक्तिरेव । "कर्तृकर्मणोः कृति" इत्यनेन विधानात् । अत एव सम्बन्धस्य न कारकत्वम्' क्रियायोगाभावात ।

परंतु—क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड् विधम् , ।
कर्तृकर्मादिभेदेन शेषः सम्बन्ध इष्यते इति शाब्दिकाः ।

अत एव "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः" इत्यादौ "सा लक्ष्मीरुपकुरुते यथा परेषाम्" इत्यादौ च रोगे विपत्तौ इत्यादिनाम्नोः यथाक्रमम् अध्याहारेणैव बोधः । अयम्भावः, अत्रोध्याहृतनामार्थेनैव षष्ठ्यर्थसम्बन्धस्यान्वयः नतु क्रियया इति नात्र कारकषष्ठी इति ।

अत्र गदाधरभट्टाचार्य्यास्तु रोग इत्यस्य नाध्याहारः कार्य्यः । षष्ठ्यर्थसम्बन्धस्य धात्वर्थेऽन्वयेऽपि नेयं कारकविभक्तिः किन्तूपपदविभक्तिरेवेत्याहुः । यदि अध्याहारमन्तरा क्रियायां षष्ठ्यर्थसम्बन्धान्वयः प्रामाणिकस्तदा क्रियान्वितकर्तृत्वकर्मत्वादिषट्कान्यतमान्वयित्वम् कारकत्वम् बोध्यम् ।

अत एव च "चर्मणि द्वीपिनं हन्ति" इत्यादौ निमित्तादेरपि न कारकत्वम् ।
शाब्दिकास्तु—क्रियाजनकत्वयोग्यताबुद्धिविषयत्वम् कारकत्वमित्याहुः ।

## अथ सङ्गतिनिरूपणम् ।

स प्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा ।
निर्वाहकैककार्यैक्ये षोढा सङ्गतिरिष्यते ॥

---

तैकत्वम् इति तन्निष्ठानुयोगितावच्छेदकत्वसम्बन्धेन ( तद्घटत्वगतैकत्वम् ) शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदस्य कारणत्वमस्ति तच्च घटो घट इत्यत्र नास्त्येव विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमपि घटत्वगतैकत्वमेव, प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमपि घटत्वगतैकत्वमेवेति न घटो घट इत्यादावापत्तिः । घटो नीलघट इत्यत्र तु शाब्दबोधो भवत्येव । तथाहि विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं घटत्वगतैकत्वम् प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकञ्च नीलत्वघटत्वैतदुभयगतं द्वित्वमेवेति । एकत्वद्वित्वयोश्च परस्परम्भेदात्तद्धर्मभेदस्य सत्त्वादभेदान्वयबोधो निरवच्छिन्न इति

### प्रसङ्गत्वञ्च—

स्मृतस्योपेक्षानर्हत्वम् । तत्र स्मृतस्य पूर्वाभिहितवस्तुसम्बन्धेन स्मृतस्य, उपेक्षानर्हत्वम् । द्वेष्यज्ञानविषयताविरोधिरूपं जिज्ञासाविषयतावच्छेदकरूपमिति यावत् । स्मृतस्येति कथनन्तु जिज्ञासाया आनन्तर्य्याभिधानप्रयोजकतालाभाय । उपोद्घातादौ लक्षणातिव्याप्तिनिरासाय उपोद्घातादिपञ्चकभिन्नत्वे सतीत्यपि लक्षणे निवेश्यम् । तथा च उपोद्घातादिपञ्चकभिन्नत्वे सति पूर्वाभिहितवस्तुसम्बन्धेन स्मृतिविषयत्वे सति द्वेषविषयतानवच्छेदकत्वमिति लक्षणनिष्कर्षः । यः यन्निरूपणानन्तरन्निरूप्यः स तन्निरूपितसंगतिमानित्यर्थः ।

### उपोद्घातत्वञ्च—

प्रकृतोपपादकत्वम् । एतदेव चाभिहितं "चिन्ताम् प्रकृतिसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इत्यादिना । तत्र उपपादकत्वञ्च, निर्वाहजनकत्वम् । तच्च द्विविधमनुभूयते कचित् प्रकृतघटकसाधकतया कचिच्च अन्यथापि ।

### निर्वाहकैक्यञ्च—

एकनिर्वाहकनिर्वाह्यत्वम् । तद्भिन्नत्वे सति तन्निर्वाहकनिर्वाह्यत्वमिति यावत् ।

### कार्य्यैक्यञ्च—

एककार्य्यप्रयोजकत्वम् । तद्भिन्नत्वे सति तन्निर्वाहकनिर्वाह्यत्वमिति निष्कर्षः । कचित्तु मूलकारिकायाम् "निर्वाहकैककार्यत्वे" इतिपाठ उपलभ्यते तत्र निर्वाहकत्वम् प्रयोजकत्वम्'एककार्यत्वञ्च एककारणकार्यत्वमिति बोध्यम् । केचित्तु- एककार्य्यानुकूलत्वम् कार्य्यैक्यसङ्गतित्वम् । यथा व्याप्तिपक्षधर्मतयोः अनुमितिलक्षणकार्य्यैक्यं सङ्गतिः । इदञ्च एककार्य्यत्वमित्यपि उच्यते ।

### एकवाक्यत्वञ्च ।

साकाङ्क्षत्वे सति एकार्थप्रतिपत्तिपरत्वम् । एवमेव जैमिनिसूत्रम् "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्" इति । घटोऽस्ति कलशोऽस्ति इत्येकार्थप्रतिपादकयोर्वाक्ययोरेकवाक्यत्ववारणाय साकाङ्क्षत्वे सतीति सत्यन्तदलम् । साकाङ्क्षत्वञ्च तदुत्थाप्याकाङ्क्षानिवर्त्तकत्व तन्निवर्त्तनीयाकाङ्क्षोत्थापकत्वान्यतरवत्त्वम् । भूतलं घटवत् इत्युक्ते को घट इत्याकाङ्क्षया प्रयुक्तस्य "कम्बुग्रीवादिमान्" इत्युत्तरस्य तदेकवाक्यत्ववारणाय अर्थैक्यनिवेशः यद्यपि ता-

दृशवाक्ययोरपि यंकञ्चिदर्थमादाय अर्थैक्यमस्ति तथापि परस्परसहकारेण विशिष्टकार्थप्रतिपादकत्वं दलद्वयार्थो विधेयः।

घटकत्वम्—

तद्विषयताव्यापकविषयतावत्त्वम्। स्वभिन्नत्व स्वव्यापकत्वमित्येतदुभयसम्बन्धेन विषयताविशिष्टविषयतावत्त्वम् इत्यर्थः। यथा वह्न्यभावज्ञानीयविषयताव्यापकत्वस्य वह्निविषयतायां सत्त्वेन वह्नेर्वह्न्यभावघटकत्वम्। केचित्तु अवच्छेदकत्वनाम्ना वदन्त्येतत् यथा साध्याभावाधिकरणत्वञ्च साध्यवत्ताग्रहविरोधिताघटकसम्बन्धेन विवक्षणीयम्। साध्याभावप्रतियोगित्वञ्च साध्यताघटकसम्बन्धेन विवक्षणीयम् इत्यादौ घटकत्वम्। तान्त्रिकास्तु योजकत्वमिति नाम्नाऽभिदधति। तद्भेदाश्च—

धावको भावकश्चैव योजकश्चांशकस्तथा।
दूषकः स्तावकश्चैव षडेते घटकाः स्मृताः॥ इति।

घटितत्वम्।

तद्विषयताव्याप्यविषयतावत्त्वम्। यथा वह्न्यभावविषयताया वह्निविषयताव्याप्यत्वेन वह्न्यभावस्य वह्निघटितत्वम्। यथा वा विशिष्टान्तराघटितत्वम्, विशिष्टद्वयाघटितत्वम्, प्रतियोगिवैयधिकरण्यघटितत्वम् इत्यादौ घटितत्वम्।

चक्रकत्वम्।

तदपेक्षापेक्ष्यपेक्षितत्वनिबन्धनानिष्टप्रसङ्गत्वम्। त्रिविधञ्चेदम् उत्पत्तिस्थितिज्ञप्तिद्वारा जननात्। चतुष्पञ्चकक्षादावपि स्वस्य स्वापेक्षापेक्ष्यपेक्षितत्वसत्त्वान्नाधिक्यम्। केचित्तु—स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनप्रसङ्गत्वम्। अपेक्षा च साक्षात् परम्परया च गृह्यते। अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च। तत्र ज्ञप्तौ यथा एतद्घटज्ञानजन्यज्ञानजन्यज्ञानभिन्नं स्यात् इति। उत्पत्तौ यथा—घटोऽयं यद्येतद्घटजन्यजन्यजन्यः स्यात् तदा एतद्घटजन्यजन्यभिन्नः स्यात् इति। इति स्थितौ यथा घटोऽयं यदि एतद्घटवृत्तिवृत्तिवृत्तिः स्यात् तदा तथात्वेनोपलभ्येत इति (वाचस्पतिः) चक्राकारश्छन्दोविशेष इति छान्दोज्ञाः। दद्रुरोग इति भिषज इत्याहुः।

अघटकत्वम्—स्वाविषयकप्रतीतिवृत्तितत्तन्निरूपितविषयितानिरूपकत्वम्।

उपक्रमत्वम्।

आरम्भत्वम् उपायज्ञानपूर्वकारम्भत्वं वा। यथा ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ (ब्र० सू० १-४-१०) इत्यादौ।

तात्पर्य्यनिर्णायकहेतुविशेषत्वं वा । यथा वेदान्तिनये—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च हेतुस्तात्पर्य्यनिर्णये ॥ इत्यादौ ।

## उपसंहारत्वम् ।

सहचारत्वम् , यथा अनुपसंहारी हेतुरित्यत्र साध्यहेत्वोरुपसंहारस्याभावः । उपन्यासो वा सः । "यथा उपनयलक्षणे उदाहरणापेक्षस्तथेत्युपसंहारः" इति गौतमः । दीधितिकारास्तु उपसंहारो निश्चय इत्याहुः ।

विस्तरेण निरूपितस्य पदार्थस्य सारांशकथनेन तन्निरूपणसमापनम् । यथा तदेतत् त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् इति करणलक्षणस्योपसंहारः ।

अन्ये तु ग्रन्थतात्पर्य्यावधारकलिङ्गविशेषत्वं वा । यथा उपक्रमलक्षणे कारिकायाम् ।

एकत्र श्रुतार्थस्यान्यत्रान्वयार्थमुपक्षेपत्वं वा, यथा गुणोपसंहार इत्यादौ । साकल्येन सम्बन्धत्वम् वा । यथा सर्वोपसंहारवत्त्या व्याप्तेर्दुर्ज्ञानत्वात् इत्यादौ ( वाचस्पतिमिश्राः ) ।

मीमांसकास्तु सामान्यप्राप्तस्य विशेषे नियमत्वमेव तदिति प्राहुः ।

## उपसर्गत्वम्—

जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्य्यग्राहकत्वे सति प्राद्यन्यतमत्वम् । यथा प्रहरति विहरतीत्यादौ प्रादिरुपसर्गः । प्रादय उपसर्गा द्वाविंशतिधा प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत प्रति परि उप । "उपसर्गाः क्रियायोगे" इतिशाब्दिकाः । उपसर्गस्य हि त्रेधा प्रवृत्तिः ।

धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते ।
तमेव विशिनष्टयन्य उपसर्गगतिस्त्रिधा ॥ इति ।

आदत्ते, प्रसूते, प्रणमति इत्यादिक्रमेणोदाहरणानि । प्रादयो द्योतका इति नैयायिका वैयाकरणाश्चाहुः । अत्र द्योतकत्वञ्च तात्पर्य्यग्राहकत्वम् । अत्रैवं व्यवस्थितिः उपसर्गाणां मध्ये यत्र यस्योपसर्गस्य किञ्चिदर्थे शक्तिर्न प्रामाणिकी तस्य तत्र द्योतकत्वमेव । यथा प्रसूते इत्यादौ । यस्य च शक्तिः प्रामाणिकी तस्य तत्र

वाचकत्वमेव यथा उपकुम्भम् इत्यदौ अन्यथा तत्राव्ययीभावसमासानुपपत्तेः। तस्य निरर्थकत्वेन निराकाङ्क्षत्वात्।

पूर्वं वाच्यं भवेद् यस्य सोऽव्ययीभाव इष्यते।

इत्यनुशासनात्।

अन्ये तु "प्रादेश्च निरर्थकत्वेऽपि स्वाद्यन्तमिह नामेष्टम्" इत्यनुशासनेन स्वाद्यन्तत्वेन तस्यापि नामत्वात नाम्नामेव समासविधानात् प्रादेःसमास इष्यते उपपद्यते च इत्याहुः। शाब्दिकास्तु सर्वेषां द्योतकत्वमेवेत्याहुः।

काव्यशास्त्रविशारदास्तु उपसर्गो नाम उत्पात इत्याहुः।

उपसर्जनञ्च—गौणम्, अप्रधानम्, यथा धनवान् देवदत्त इत्यादौ विशेषणीभूतं धनमुपसर्जनम्। अत्रोपसर्जनत्वञ्च—वृत्तिजन्यबोधीयप्रकारताश्रयत्वम्। वृत्तिशब्देनात्र वैयाकरणसम्मताः कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयो गृह्यन्ते। शाब्दिकास्तु—विग्रहवाक्ये यन्नियतविभक्तिकं तदुपसर्जनसंज्ञम्, स्वार्थविशिष्टार्थान्तरबोधकमुपसर्जनमिति च वदन्ति "एकविभक्ति चापूर्वनिपाते" इति सूत्रम्। उपसर्जनत्वपरिष्कारस्तु अन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वमित्याद्यभिधास्यते।

## एकमात्रवृत्तित्वञ्च—

स्वाश्रयनिष्ठभेदाप्रतियोग्याश्रयकत्वम्, यथा आकाशत्वस्यैकमात्रवृत्तित्वम्। अत्र भेदश्च व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन विशेषणीयः। स्वप्रतियोगिवृत्तित्व स्वसामानाधिकरण्य एतदुभयसम्बन्धेन भेदविशिष्टान्यत्वमिति हार्दम्। इदञ्च आकाशत्वादेर्जातित्वे बाधकम्।

## एकवाक्यत्वम्—

विशिष्टैकार्थप्रतिपादकत्वम्। निरूप्यनिरूपकभावापन्नविषयताशालिबोधजनकत्वमित्यर्थः। यथा यज्ञदत्तो हरिं भजतीति वाक्यस्यैकवाक्यत्वम्।

तत्प्रयोज्यविषयतया साक्षात परम्परया वा निरूपिता या विषयता तत्प्रयोजकत्वम् इति गदाधराः। अत्र तत्पदजन्यज्ञाननिरूपितत्वेन तत्पदप्रयोज्यत्वव्यवहारो विषयतायामिति बोध्यम्। अत्र विशेष्यताद्वयनिरूपितैकप्रकारताशालिज्ञानजनकवाक्ययोरेव एकवाक्यत्वमिति नियमो ज्ञेयः।

केचित्तु—तदुत्थाप्याकांक्षानिवर्त्तकत्व तन्निवर्त्तनीयाकांक्षोत्थापकत्व एतदन्य-

तत्त्वम् , यथा प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते इत्यादौ प्रतिज्ञादीनां पञ्चानामवयवानामेकवाक्यत्वम् । तदुत्थाप्याकाङ्क्षानिवर्त्तकत्वञ्च तत्प्रतिपाद्यार्थविषयकज्ञानजन्या या आकाङ्क्षा तत्प्रतियोगिकनिवृत्तिजनकज्ञानजनकत्वम् । इदञ्च हेतूदाहरणादीनामेकवाक्यत्वम् । अत्र तत्पदं प्रतिज्ञापरम् । तन्निवर्त्तनीयाकाङ्क्षोत्थापकत्वं च तत्प्रतिपाद्यार्थविषयकज्ञानजन्या या निवृत्तिः तत्प्रतियोग्याकाङ्क्षाजनकज्ञानजनकत्वम् । इदञ्च प्रतिज्ञादीनामेकवाक्यत्वमित्यवधेयम् । अत्र तत्पदन्तु हेत्वादिपरम् ।

अन्ये तु—स्वभिन्नत्व स्वानवच्छिन्नत्व स्वसामानाधिकरण्य एतत् त्रितयसम्बन्धेन विषयताविशिष्टविषयताशून्यबोधजनकवाक्यत्वमिहैकवाक्यत्वमिति प्राहुः ।

एकवाक्यत्वञ्च द्वेधा पदैकवाक्यत्ववाक्यैकवाक्यत्वभेदात् । तत्राद्यं यथा सोऽरोदीदित्याद्यर्थवादसमुदायस्य पदस्थानीयतया विधिपदेनैकवाक्यतया । द्वितीयं यथा यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वन्तत् । यथा "दर्शपौर्णमासाभ्यां यजेत् स्वर्गकाम" इत्यादिवाक्यानां "समिधो यजति" इत्यादिवाक्यानां च परस्परमङ्गाङ्गिभावबोधकतया एकवाक्यता ।

अन्ये तु—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्" वाक्यघटकपदानां विभागे साकाङ्क्षमेकपदरहितस्यापरपदस्य शाब्दबोधाजनकत्वं तयोरेकार्थकत्वम् एकफलप्रतिपादकत्वमित्यर्थः । विभागे साकाङ्क्षत्वे सति एकफलप्रतिपादकं यत्तदेकवाक्यमित्यर्थः ।

अन्ये तु—अविसंवादिवाक्यत्वमेकवाक्यत्वम् "यथा श्रवणकटु नृपाणामेकवाक्यं विवव्रुः" इत्यादौ इति काव्यज्ञाः ।

## करणञ्च ।

स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकम् । इदमेव च साधकतमम् "साधकतमङ्करणम्" इति च पाणिनीयं सूत्रम् । क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् । यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत् करणसंज्ञं स्यात् । एतदेव चोक्तं हरिणा—

> क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
> विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥

अत्र हि वाणनिष्ठव्यापाराव्यवधानेन प्राणवियोगरूपक्रियानिष्पत्तेस्तस्य का-

णसंज्ञा । कारिकायां क्रियाया इत्यस्य फलात्मिकाया इत्यर्थः । विवक्ष्यते इत्यनेन स्थाल्यादीनामपि वैवक्षिकं करणत्वं सूचयति । तदपि चोक्तम्—

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति ।

अन्ये तु—सविकरणस्य यद्धातोरुपस्थाप्ययादृशार्थे तृतीयया यादृशः स्वार्थोऽनुभाव्यते स तद्धातूपस्थाप्यतादृशक्रियायाः करणसंज्ञकं कारकमुच्यते । यथा दात्रेण छिनत्ति घटत्वेन जानातीत्यादौ ।

परे तु—यस्मिन् सति क्रिया भवत्येव तत् करणम् प्राहुः । सव्यापारं निर्व्यापारं वा द्रव्योत्पादकं यत् स हेतुः, तादृशमेव च गुणोत्पादकं यत् सोऽपि हेतुरेव । निर्व्यापारं क्रियोत्पादकं यत् सोऽपि हेतुरेव । सव्यापारं क्रियोत्पादकञ्च करणम् ।

प्राचीननैयायिकास्तु—व्यापारवदसाधारणं कारणं करणम् । यथाऽनुमितिं प्रति व्याप्तिज्ञानम् । यथा वा—

महत्त्वं षड्विधे हेतुरिन्द्रियं करणम्मतम् ।

षड्विधप्रत्यक्षत्वावच्छिन्नम्प्रति चक्षुरादीन्द्रियाणां करणत्वम् । एतल्लक्षणे घटं प्रति कपालसंयोगवारणाय व्यापारवदिति । ईश्वरज्ञानवारणाय असाधारणेति । अत्रासाधारणत्वञ्च—कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । अत्र केचित्—चक्षुस्संयोगादावतिव्याप्तिनिरासाय व्यापारवत्त्वे सतीति वक्तव्यम् । श्रोत्रमनस्संयोगः शब्दो वा व्यापारः सम्भवत्येवेति न श्रोत्रेन्द्रिये करणलक्षणाव्याप्तिरिति ब्रुवते । नव्यास्तु—असाधारणमेव कारणं करणम् । यद्विलम्बात् प्रकृतकार्यानुत्पादस्तत्कारणत्वस्यासाधारणत्वात्मकतया कालादिषु तादृशकारणत्वस्याभावान्नातिव्याप्तिः । व्यापारत्वेनाभिमतेन्द्रियसंयोगादिकमेव प्रत्यक्षे करणमित्याहुः ।

वाक्यवृत्तौ तु—व्यापारवदितिलक्षणस्य जनकतासम्बन्धेन स्वजनकवत्त्वे सति स्वासाधारणकारणमित्यर्थ उक्तः । कुठारस्य छिदिक्रियाकरणत्वे कुठारदारुसंयोगो व्यापारो ज्ञेयः ।

नव्यनैयायिकास्तु—फलायोगव्यवच्छिन्नं कारणमेव तत् । यथा अनुमितिं प्रति परामर्शः करणम् । यथा वा प्रत्यक्षे इन्द्रियार्थसन्निकर्षः करणम् ।

शाब्दिकास्तु—स्वव्याप्येतरयावत्कारणसमवधाने सति यदव्यवहितोत्तरक्षणे फ-

लनिष्पत्तिस्तदिति प्रोचुः । फलायोगव्यवच्छिन्नं फलोपधायकं वा कारणमेव करणम् । ज्ञानादावात्मापि करणमिष्टमेव ।

साङ्ख्याचार्यास्तु—कारणविशेषः करणम् । तच्च द्वेधा आभ्यन्तरं वाह्यञ्चेति भेदात् । अथ चैतेषाम् मते करणं त्रयोदशविधम् । तथा च साङ्ख्यकारिकायाम्—

करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।

इन्द्रियाण्येकादश पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि, पञ्च च ज्ञानेन्द्रियाणि चक्षुः श्रोत्रघ्राणरसनत्वगाख्यानि । यथा च साङ्ख्यकारिकायाम्—

बुद्धीन्द्रियाणि चक्षुः श्रोत्रघ्राणरसनत्वगाख्यानि ।
वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः ॥ २६ ॥ आर्य्यावृत्तम् ।

एकञ्च मनः एवं ( १०।१।२ ) सङ्कलनया त्रयोदशविधं करणं युक्तम् । इति तत्तन्मतभेदात् करणनिरूपणमूह्यम् ।

कर्त्ता च ।

क्रियानुकूलकृतिमान् । यथा चैत्रस्तण्डुलं पचतीत्यादौ चैत्रादिर्मुख्यः कर्त्ता । "स्वतन्त्रः कर्त्ता" इति सूत्रे स्वातन्त्र्यमपि क्रियानुकूलकृतिमत्त्वमेवेति न तद्विरोधः । शाब्दिकास्तु—स्वातन्त्र्यञ्च समभिव्याहृतकारकान्तरानधीनत्वे सति कारकत्वम्, धात्वर्थव्यापाराश्रयत्वं वा । तदुक्तं हरिणा—

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ।
प्राधान्यतः शक्तिलाभात् प्राग्भावापादनादपि ॥ १ ॥
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात् ।
अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात् ॥ २ ॥
आरादप्युपकारत्वात् स्वातन्त्र्यं कर्त्तुरिष्यते । इति ।

नागेशभट्टास्तु—कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसम्बन्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्वर्थाश्रयत्वम् इत्याहुः । घटो भवति पटो नश्यतीत्यादौ अचेतनकर्तृप्रयोगे तु घटपटादिर्गौण एव कर्त्ता घटो भवनाश्रयः पटो नाशप्रतियोगीति बोधात् । कर्त्तुः कारकान्तरप्रवर्त्तनं व्यापार इति मञ्जूषायाम् । केचित्तु साधनान्तरनियोगव्यापारवान् कर्त्तेत्याहुः । अन्ये तु धात्वर्थव्यापाराश्रयः कर्त्ता । अत एव यदा यदीयो व्यापारो धातुनाभिधीयते तदा स कर्त्तेति स्थाली पचति, अग्निः पचति, एधांसि पचन्ति, तण्डुलः पच्यते स्वयमेव इत्यादिकं सङ्-

च्छते । न्याये व्याकरणे च शास्त्रे कर्त्ता त्रिविधः १ शुद्धः २ प्रयोजकहेतुः ३ कर्म-कर्त्ता च । तत्र आद्यस्योदाहरणं मया हरिस्सेव्यते, द्वितीयस्य कार्य्यते हरिणा, तृतीयस्य गमयति कृष्णं गोकुलं गोप इति । शुद्धत्वञ्च हेतुत्व कर्मकर्तृत्व एतदन-धिकरणत्वम् । प्रेरणार्थकणिजप्रकृतिधातूपात्तव्यापाराश्रयत्वमिति यावत् । प्रयोजक-हेतुत्वञ्च णिजर्थप्रेरणाश्रयत्वम् । कर्मकर्तृत्वञ्च—धातूपात्तव्यापाराश्रयत्वे सति णिज-र्थव्यापारेणाप्यमानत्वेन विवक्षितत्वम् । मया हरिस्सेव्यत इत्यत्र मदभिन्नाश्रयको हरिकर्मकसेवनानुकूलो व्यापार इति बोधः । कार्यते हरिणेत्यत्र हर्य्यभिन्नाश्रयक उत्पादनानुकूलो व्यापार इति बोधः । गमयति कृष्णमित्यत्र कृष्णः कर्मकर्त्ता, तथा च गोपाभिन्नकर्तृको गोकुलकर्मकगमनानुकूलकृष्णाश्रयकव्यापारानुकूलो व्यापार इति बोधः । किञ्च यदा सौकर्य्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा का-रकान्तराण्यपि कर्तृसंज्ञां लभन्ते इत्युक्तरीत्या कर्मणः कर्तृत्वविवक्षायां कर्मकर्त्ता भवति । तदुक्तम्—

क्रियमाणन्तु यत्कर्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गुणैः कर्त्तुः कर्मकर्त्तेति तद् विदुः ॥

केचित्तु—

क्रियामुख्यो भवेत् कर्त्ता हेतुकर्त्ता प्रयोजकः ।
अनुमन्ता ग्रहीता च कर्त्ता पञ्चविधः स्मृतः ॥

षड्विधो घातकर्त्तेति मनुः । अष्टविधः कर्त्ता इत्यन्ये । तथाहि—

अनुमन्ता विशसिता नियन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्त्ता च षडेते घातकाः स्मृताः ॥

अत्र चतुर्थचरणे "खादको घातकस्तथा" इत्यष्टविधत्वमपि ।

त्रिधैव ज्ञायते कर्त्ता विशेषेण क्रियाम्प्रति ।
योग्यत्वप्रतिषिद्धत्वविशेषणपदान्वयैः ॥

इति कर्तृत्रैविध्यं भाट्टा मीमांसकाश्च वदन्ति । वेदान्ताचार्य्यास्तु सात्त्विकरा-जसतामसभेदात् कर्त्ता त्रिविध इति प्रचक्षते ।

## कर्मत्वञ्च ।

पदार्थविभाजकजातिविशेषत्वम् उत्क्षेपणत्वादिकाः पञ्च कर्मत्वसाक्षाद्व्या-प्या जातयः । नित्यासमवेतत्वसहितसत्तासाक्षाद्व्याप्यजातित्वम् । परसमवेत-क्रियाजन्यफलशालित्वम् , यथा चैत्रस्तण्डुलं पचतीत्यादौ पाकजन्यविक्लित्तिम-

त्वम् तण्डुलस्य कर्मत्वम् । घटं जानातीत्यादौ तु घटादेर्ज्ञानविषयत्वं कर्मत्वं गौणम् । परसमवेतक्रियाजन्यधात्वर्थफलाश्रयत्वं वा, यथा ग्रामं गच्छतीत्यादौ ग्रामस्य संयोगरूपफलाश्रयत्वं कर्मत्वम् । अत्र परसमवेतेति विशेषणात चैत्रश्चैत्रं गच्छतीति न प्रयोगः । किञ्च ग्रामं गच्छति चैत्र इत्यादौ चैत्रादावतिव्याप्तिवारणाय परसमवेतेति क्रियाविशेषणम् । ग्रामं गच्छतीतिवत् स्वं गच्छतीति प्रयोगवारणाय परसमवेतत्वमपि द्वितीयार्थं इष्यते । शाब्दिकास्तु—कर्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्यतदनधिकरणवृत्तिप्रकृतधात्वर्थफलाश्रयत्वम् । व्याकरणशास्त्रबोधितकर्मसंज्ञकत्वं वा कर्मत्वम् । तेन अधिशय्यते प्रासाद इत्यादौ कर्मणि लकारोपपत्तिः । अधिशेतेः कर्मसंज्ञाविशिष्टान्वितस्वार्थबोधकत्वादित्याहुः ।

यद्वा प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् । तथा च सूत्रम् "कर्त्तुरीप्सिततमङ्कर्म" गां पयो दोग्धीत्यादौ पयोवृत्तिर्यो विभागस्तदनुकूलो व्यापारो गोवृत्तिस्तदनुकूलश्च गोपवृत्तिरिति। अत्र पयसः कर्मत्वसिद्धये प्रयोज्यत्वनिवेशः । जन्यत्वनिवेशे तु तन्न स्यात । यतो हि जन्यत्वं साक्षात्सम्बन्धेनैव । प्रयोज्यत्वन्तु साक्षात् परम्परासाधारणम् । प्रयागात् काशीं गच्छति इत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति । नहि विभागः प्रकृतधात्वर्थः किन्तु नान्तरीयकतया गमने सति उत्पद्यते । प्रयागस्य फलाश्रयत्वेनानुद्देश्यत्वाच्च । ननु प्रकृतधात्वर्थनिवेशेनैवात्र वारणसम्भवात् उद्देश्यत्वनिवेशो व्यर्थ इति चेन्न ? तस्यासाधारणप्रयोजनस्य काशीं गच्छन् पथिमृत इत्यस्य सत्त्वात् । अत्र हि काश्याः फलाश्रयत्वाभावेऽपि फलाश्रयत्वेनोद्देश्यत्वात् कर्मत्वम् । ननु काशीङ् गच्छति चैत्रो न प्रयागम् इति प्रयोगानुपपत्तिः प्रयागस्य फलाश्रयत्वेनोद्देश्यत्वाभावादिति चेन्न ? कर्मलक्षण ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशेषे लक्षणा । तथा च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वम् । तच्च प्रयागस्याप्यस्तीति कर्मत्वं सुलभम् । न्यायसिद्धान्तदीपिकायान्तु करणव्यापारविषयकारणत्वं कर्मत्वम्, यथा व्रीहीन् प्रोक्षतीत्यादौ व्रीहेःकर्मत्वम् । तथा चात्र व्रीहीणाम् प्रोक्षणफलीभूतातिशयानाश्रयत्वेऽपि न कर्मत्वानुपपत्तिः । एवमात्मनाऽऽत्मानं जानातीत्यादौ बोध्यम् ।

## शक्यतावच्छेदकञ्च ।

तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारताकभगवदिच्छीयबोधविषयतायां ध-

र्मिपारतन्त्र्येण यद्विशेषणन्तत्तत्पदशक्यतावच्छेदकमित्युच्यते ।

धर्मिपारतन्त्र्यञ्च—स्वविशेष्ये यद्विशेषणन्तन्निरूपितं यद्विशेषणन्तत्। तथा-हि, घटपदजन्यबोधविषयतावान् घटो भवत्वितीच्छायां स्वं घटत्वं तद्विशेष्यो घट-स्तत्र विशेषणम्बोधविषयता तन्निरूपितविशेषणत्वात्। घटस्य घटपदशक्यतावच्छे-दकबोधविषयतायां धर्मिपारतन्त्र्येण यद्विशेषणं घटत्वं तदेव शक्यतावच्छेदकम्। एवं गुणवत्त्वेन द्रव्यम्बोद्धव्यम् इतीच्छायां गुणवत्त्वमेव शक्यतावच्छेदकम्। बोध-विषयत्वे तस्यावच्छिन्नत्वसम्बन्धेनान्वये धर्मिपारतन्त्र्येण बोधविषयत्वे विशेषण-त्वात्। यथा बुद्धिविषयतावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्नस्तत्पदजन्यबोध-विषयतावान् भवत्वितीच्छायां बोधविषयत्वे धर्मिपारतन्त्र्येण विशेषणन्तत्तद्धर्मवि-शेष एव शक्यतावच्छेदकः? नतु बुद्धिविषयतावच्छेदकत्वन्तस्योपलक्षणत्वात्।

### वृत्तिनियामकत्वञ्च—

वृत्तितावच्छेदकत्वम्। वृत्तितावच्छेदकत्वञ्च तेन सम्बन्धेन तद्वानितिप्रतीति-विषयत्वम्। अधिकरणतानियामकत्वमिति फलितार्थः। वृत्तिरधिकरणम्। वृत्ति-नियामकसम्बन्धाश्च संयोगसम्बन्धः, समवायसम्बन्धः, कालिकसम्बन्धः, स्वरूप-सम्बन्धः, दिक्कृतविशेषणतासम्बन्धः, पर्य्याप्तिसम्बन्धः, स्वाऽभाववद्वृत्तित्वस-म्बन्ध इत्यादिः।

### वृत्त्यनियामकत्वञ्च—

वृत्तितानवच्छेदकत्वम्। तच्च तेन सम्बन्धेन तद्वानितिप्रतीत्यभावविषयत्वम्। वृत्त्यनियामकसम्बन्धाश्च निरूक्तकोटिप्रविष्टा कार्यता इत्यादयः। परम्परासम्ब-न्धाश्च स्वसामानाधिकरण्यस्वसमानकालीनत्वादयः।

### प्रतिबन्ध्यविचारः।

लौकिकसन्निकर्षाऽजन्यदोषविशेषाऽजन्यतत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्र-कारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिबुद्धित्वम्प्रतिबध्यतावच्छेदकम्। नच प्रत्यक्षत्वानुमितित्वोपमितित्वशाब्दबुद्धित्वनिश्चयत्वस्मृतित्वयथार्थानुभवत्वाऽय-थार्थानुभवत्वमेव प्रतिबध्यतावच्छेदकङ्कुतो नेति वाच्यम्? एवम्प्रकारेण प्रत्य-[illegible]त्वाद्यवच्छिन्नम्प्रति प्रतिबन्धकत्वस्वीकारेऽनुमित्यादीनां प्रतिबध्यतावच्छेदक-[illegible]न्तत्वाऽभावेन प्रतिबन्धक[illegible]स्येऽप्यनुमित्यादीनामुत्पत्तिप्रसङ्ग इतिदोषात् [illegible] तत्तद्धर्मावच्छिन्नं प्रति आशंकयेन प्रतिबन्धकत्वस्वीकारेण न पूर्वोक्तदोष इ[illegible]

वाच्यम् ? पृथक् प्रतिबन्धकत्वस्वीकारे महागौरवप्रसङ्गात् ।

### प्रतिबन्धकत्वविचारः ।

अनाहार्याऽप्रामाण्यज्ञानानास्कन्दिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिनिश्चयत्वमप्रतिबन्धकतावच्छेदकम् । नच ज्ञानत्वादीनामेव सामान्यरूपेण प्रतिबन्धकतावच्छेदकत्वमास्तामिति वाच्यम् ? संशयादिसत्वेऽपि तद्वत्ताबुद्धेऽप्रतिबध्यत्वाऽपत्तेः ।

मणिमन्त्रादिन्यायेन यत्प्रतिबन्धकत्वन्तत्र निश्चयादीनामपेक्षा नास्तीति । तथाहि स्वरूपसम्बन्धेन जायमानदाहत्वावच्छिन्नम्प्रति संयोगसम्बन्धेन मणेऽप्रतिबन्धकत्वम् । समवायेन जायमानवटत्वाद्यवच्छिन्नम्प्रति संयोगसम्बन्धेन वृष्ट्यादीनाम्प्रतिबन्धकत्वम् । एवमेव सर्पादिविषप्रदजन्यविशिष्टबाधाम्प्रति मन्त्रौषधादेऽप्रतिबन्धकत्वम् । परन्तु स्वरूपसम्बन्धेन जायमानदाहत्वावच्छिन्नम्प्रति निश्चयत्वाऽसमानाधिकरणसंयोगसम्बन्धेन मणेऽप्रतिबन्धकत्वम्बोध्यम् ।

न च सिद्धिनिष्ठस्यानुमितित्वावच्छिन्ननिरूपितप्रतिबन्धकत्वस्य निश्चयत्वाऽसामानाधिकरण्याऽभावेन सिद्धिनिष्ठप्रतिबन्धकत्वे तल्लक्षणाऽसंघटनप्रसङ्गेन दोष इति वाच्यम् ? बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्त्वान्यप्रतिबन्धकत्त्वस्यैव मणिमन्त्रादिन्यायेन प्रतिबन्धकत्त्वस्वीकारात् । नच कामिनीजिज्ञासानिष्ठप्रतिबन्धकत्त्वस्याऽपि ज्ञानत्त्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्त्वान्यत्त्वाऽभावेन तत्र लक्षणसमन्वयो न स्यादिति वाच्यम् ? ज्ञानत्त्वातिरिक्तऽकि-

---

कारणीभूताभावप्रतियोगित्वम्प्रतिबन्धकत्वम् । यथा "तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वम्" इति नियमानुरोधेन घटवद्भूतलम् इति संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नम्प्रति स्वरूपसम्बन्धावच्छिन्नघटाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वम्, तत्र कारणीभूतोऽभावो घटाभावाभावः (तद्वत्तानिश्चयेनैव घटवत्ताज्ञानम्) तत्प्रतियोगित्वं घटाभावस्येति भवति तद्वत्तानिश्चयस्य प्रतिबन्धकत्वम् । एवमेव अनुमितित्वावच्छिन्नम्प्रति बाधसत्प्रतिपक्षव्यभिचारादिनिश्चयाभावः कारणं भवति तत्र कारणीभूतोऽभावो बाधादिनिश्चयाभावः तत्प्रतियोगित्वं बाधसत्प्रतिपक्षादिदोषाणामिति भवति तेषाम् प्रतिबन्धकत्वमिति रीत्या बोध्यम् ।

च्छिद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाद्यतिरिक्तश्च यो धर्मस्तद्धर्मानवच्छिन्न प्रतिवध्यतानिरूपितप्रतिबन्धकत्वान्यप्रतिबन्धकत्वस्यैव प्रतिबन्धकत्वपदार्थत्वात्। कामिनीजिज्ञासानिष्ठप्रतिबन्धकतानिरूपितप्रतिवध्यतायास्तु ज्ञानत्वताद्दशविशेष्यत्वाद्यतिरिक्तकामिनीज्ञानान्यत्वरूपधर्मावच्छिन्नत्वेन तत्प्रतिवध्यतामादाय लक्षणाऽसंघटनेनाक्षतेः।

अवच्छेदकावच्छेदेन तद्वत्ताबुद्धिम्प्रति अवच्छेदकावच्छेदेन सामानाधिकरण्येन च बाधनिश्चयस्य प्रतिबन्धकत्वात्। परन्तु सामानाधिकरण्येन तद्वत्ताबुद्धिम्प्रति अवच्छेदकावच्छेदेनैव बाधनिश्चयः प्रतिबन्धको न तु सामानाधिकरण्येन बाधनिश्चयः प्रतिबन्धकः एकत्र बाधनिश्चयेऽपि स्थलान्तरे तद्बुद्ध्युदयप्रभावात्।

## व्याप्यवृत्तित्वञ्च।

स्वसमानाधिकरणात्यन्ताऽभावाऽप्रतियोगित्वम्। घटत्व, पटत्व, अभावत्व, कर्मत्वादयः।

## अव्याप्यवृत्तित्वञ्च।

स्वसमानाधिकरणाऽत्यन्ताभावप्रतियोगितावच्छेदकत्वम्। तच्च द्विविधम्, दैशिकाऽव्याप्यवृत्तिः, कालिकाऽव्याप्यवृत्तिश्चेति। आद्यः कपिसंयोगादिः। द्वितीयः द्रव्यं गुणः क्रिया चेति।

## संशय इति।

एकस्मिन् धर्मिणि विरुद्धनानाधर्मप्रकारकं ज्ञानं संशयः। स्थाणुर्वा पुरुषो वेति वाक्ये वाशब्दद्वयेन स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाऽभाव इतिसंशयः।

केचित्तु समुच्चयार्थको वाद्वयशब्दः, अयन्दृश्यमानः पदार्थः स्थाणुः पुरुषश्चेति। केवलज्ञानत्वमात्रोक्तौ विपर्ययादिष्वतिव्याप्तिरापतेत्। ज्ञानत्वानुक्तौ

---

अव्याप्यवृत्तित्वञ्च-स्वप्रतियोगित्व स्वसामानाधिकरण्योभयसम्बन्धेन अभावविशिष्टत्वम्। यथा-हि आकाशप्रधानगुणः शब्दः सोऽव्याप्यवृत्तिः। तथाहि, यत्र काले मृदङ्गावच्छेदेन शब्दोत्पत्तिराकाशे तत्रैव काले घटावच्छेदेन आकाशे शब्दो नोत्पद्यत इति शब्दाभावोऽपि वर्त्तते। एवञ्च स्वं शब्दाभावः तत्प्रतियोगिता शब्दे इति प्रथमसम्बन्धसत्त्वा, स्वं शब्दाभावः तत्सामानाधिकरण्यम् (तदधिकरणाकाशनिरूपितवृत्तित्वम्) अपि शब्दस्येति द्वितीयसम्बन्धसमन्वयेन च भवति शब्दस्याव्याप्यवृत्तित्वम्। एवं जन्यज्ञानादीनामप्यव्याप्यवृत्तित्वं, रूपादीनान्तु न तत्त्वम् तेषामवच्छेदकावच्छेदकावच्छेदेन वृत्तित्वादिति तत्त्वम्।

स्थाणुर्पुरुषो वेतिसंशयो भूयादितीच्छायामतिव्याप्तिः । एकधर्मिविशेष्यकत्वे सति ज्ञानत्वमात्रोक्तौ पर्वतो वह्निमानित्यनुमितावतिव्याप्तिः । विरुद्धनानाधर्मप्रकारकत्वे सति ज्ञानत्वमात्रोक्तौ ह्रदो वह्न्यभाववान् पर्वतो वह्निमान् इति समूहालम्बनेऽतिव्याप्तिः । घटत्वविरुद्धपटत्ववान् पट इतियथार्थज्ञाने पटरूपकधर्मिविशेष्यकत्वस्य विरुद्धधर्मस्य च सत्वादतिव्याप्तिः । अतो नानापदम् विरुद्धपदानुपादाने घटपटवद्भूतलम् इत्यादावतिव्याप्तिः ।

ननु पर्वतो वह्निमान् ह्रदो वह्न्यभाववानितिज्ञाने धर्मिद्वयविशेष्यकत्वासत्त्वादेकधर्मिविशेष्यकत्वस्य च सत्त्वादतिव्याप्तिरिति चेन्न ? एकधर्मिनिष्ठविशेष्यतानिरूपिता या विरुद्धनानाधर्मनिष्ठा प्रकारता तन्निरूपकज्ञानत्वस्यैव संशयपदार्थत्वात । नच द्रव्यं वह्निमत ह्रदो वह्न्यभाववानिति समूहालम्बनज्ञाने द्रव्यत्वेन रूपेण ह्रदस्याऽपि विशेष्यतया एकस्मिन् ह्रदरूपे धर्मिणि वह्नितदभावयोर्प्रकारत्वेनातिव्याप्तिरिति वाच्यम् ? एकधर्मावच्छिन्नविशेष्यतानिरूपितविरुद्धनानाधर्मावच्छिन्नप्रकारतेतिविशेषणेनादोषात । ननु ह्रदो वह्निमान् वह्न्यभाववांश्चेतिसमुच्चये ह्रदत्वरूपैकधर्मावच्छिन्नविशेष्यतानिरूपितेत्यादिसत्त्वादतिव्याप्तिरिति चेन्न ? प्रकारताविशिष्टविशेष्यतानिरूपकत्वस्य सत्त्वात । प्रकारतावैशिष्ट्यञ्च विशेष्यतायां स्वनिरूपितत्व, स्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेनेति समन्वयस्त्वयमूह्यः ।

सम्बन्धावच्छिन्नाः के ।

संयोगसम्बन्धेन घटवान्नेत्यस्य संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेद इत्यर्थः ।

घटसामान्याऽभाव इत्यस्य घटत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगितानिरूपकाभाव इति फलितार्थः । तदवच्छेद्यत्वमित्यस्य तदवच्छिन्नत्वं तन्निष्ठावच्छेदकताकत्वम् तन्निष्ठावच्छेदकतानिरूपकत्वञ्चेति फलितार्थः । कार्यता कारणता आधेयता प्रकारता प्रतियोगिता अवच्छेदकता व्याप्यता व्यापकता इत्यादिसम्बन्धानियमेन सम्बन्धावच्छिन्ना एव भवन्ति नतु निरवच्छिन्नाः । अनुयोगिता अधिकरणता विशेष्यता संसर्गता लक्ष्यता इत्यादयस्सम्बन्धानवच्छिन्ना निश्चयेन भवन्ति ।

कार्यतावच्छेकधर्मर्कः ।

यद्धर्मविशिष्टं कार्यं नियमेन भवति स एव धर्मर्कार्यतावच्छेदको भवति ।

यथा घटत्वविशिष्टं कार्यमित्यत्र घटत्वं कार्यतावच्छेदकं घटत्वावच्छिन्ना कार्यता । मठत्वविशिष्टं कार्य्यम्मठत्वावच्छिन्ना कार्यता । मठत्वं कार्यतावच्छेदकम् । एवमेव कपालत्वविशिष्टं कारणम् कपालत्वं कारणतावच्छेदकम् । कपालत्वावच्छिन्ना कारणतेति तत्त्वम् ।

### लक्ष्यतावच्छेदकधर्मः ।

यद्यद्धर्मविशिष्टं लक्ष्यं भवति स सधर्मो लक्ष्यतावच्छेदक इत्याशयः । जलत्वविशिष्टं लक्ष्यम् लक्ष्यतावच्छेदकं जलत्वम्, जलत्वावच्छिन्ना लक्ष्यतेति फलितम् ।

### केवलान्वयित्वञ्च ।

स्वरूपसम्बन्धेन सर्वत्र वर्त्तमानत्वम्, अत्यन्ताऽभावाऽप्रतियोगित्वम्वा । प्रमेयत्व वाच्यत्व ज्ञेयत्वाभिधेयत्व वस्तुत्व गगनाऽभाव कपिसंयोगाऽभाव व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाऽभाव व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावादयः । एवमन्येऽपि केवलान्वयिनो बोध्याः ।

### साध्यतावच्छेदकम् ।

यद्धर्मविशिष्टस्साध्यस्स धर्मस्साध्यतावच्छेदकः । साध्यो वह्निर्वह्नित्वधर्मविशिष्ट इति वह्नित्वं साध्यतावच्छेदकम्, वह्नित्वावच्छिन्ना साध्यता । एव साधनो धूमः स च धूमत्वविशिष्टः साधनतावच्छेदकं धूमत्वम्, धूमत्वावच्छिन्ना साधनतेति फलितार्थः । घटवद् भूतलम् येन सम्बन्धेन योऽस्ति यत्र तन्निष्ठाऽऽधेयता तत्सम्बन्धावच्छिन्ना । संयोगेन घटो भूतले आधेयतावच्छेदकसम्बन्धस्संयोगः, संयोगसम्बन्धावच्छिन्ना आधेयता ।

### व्यापकतावच्छेदकम् ।

यद्धर्मसम्पन्नो व्यापकस्स धर्मो व्यापकतावच्छेदकः । यद्धर्मसम्बद्धो व्याप्यस्स धर्मो व्याप्यतावच्छेदकः । पर्वतो वह्निमान् धूमादित्यत्र व्याप्यो धूमो धूमत्वविशिष्टः धूमत्वम्व्याप्यतावच्छेदकम्, व्याप्यता च धूमत्वावच्छिन्ना । वह्नित्वधर्मविशिष्टत्वाद्वह्नित्वम्व्यापकतावच्छेदकम् । द्विविधमवच्छेदकत्वम् स्वरूपसम्बन्धरूपमनतिरिक्तवृत्तित्वरूपञ्च । घटकारणतावच्छेदकं दण्डत्वमित्यत्र अवच्छेदकत्वं स्वरूपसम्बन्धविशेषत्वम् । हेत्वधिकरणात्यन्ताऽभावप्रतियोगितानवच्छेदकं गगनः साध्यतावच्छेदकमित्यत्रानतिरिक्तवृत्तित्वरूपम् ।

लक्षणत्वञ्च ।

अव्याप्तिः अतिव्याप्तिः असम्भवश्चेति दोषरहितत्वं लक्षणत्वम् । अन्योन्याश्रयःआत्माश्रयःचक्रकापत्तिश्चेति दोषाः ।

---

लक्षणत्वन्तु—असाधारणधर्मत्वम्, असाधारणत्वञ्च केवलान्वयिभिन्नत्वे सति लक्ष्यतावच्छेदकसमनियतत्वम् । अव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यं हि भवति लक्षणम् ।

अव्याप्तित्वञ्च-लक्ष्यैकदेशावृत्तित्वम्, यथा गोः कपिलत्वम् । तत्र लक्ष्यं गोमात्रं नहि कपिलत्वं सर्वगोषु दृष्टं किन्तु क्वचित् २ इति कपिलत्वलक्षणं श्वेतगवादिषु अवृत्तीति तस्याव्याप्तिग्रस्तत्त्वेन युक्तत्वाभावः । निष्कर्षश्च-लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् अव्याप्तित्वम् । तत्र लक्ष्यं गावः लक्ष्यता गोनिष्ठा लक्ष्यतावच्छेदकं गोत्वम् तत्समानाधिकरणः ( गोत्वाधिकरणश्वेतगोवृत्तिः ) अत्यन्ताभावः कपिलत्वन्नास्ति इत्याकारकस्तत्प्रतियोगित्वं कपिलत्वस्येति अव्याप्तिदोषग्रस्तत्वान्न तद् गोसामान्यलक्षणम् ।

अतिव्याप्तित्वञ्च—अलक्ष्यवृत्तित्वं लक्षणस्य । यथा गोःश्रृंगित्वं लक्षणम् तच्च अतिव्याप्तिग्रस्तम् । तथाहि श्रृङ्गित्वं यद्यपि यावद्गोषु वर्त्तते तथापि तद्गवेतरमहिषादावपि वर्त्तते इति गोसामान्यलक्षणाऽलक्ष्यं यन्महिषादि तद्वृत्तित्वेन न निर्दुष्ट लक्षणम् । निष्कर्षस्तु लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरणयम् तत् । समन्वयप्रकारस्तु लक्ष्यं गावः लक्ष्यता गोनिष्ठा लक्ष्यतावच्छेदकं गोत्वं तत्समानाधिकरणत्वं ( गोत्वाधिकरणगोवृत्तित्वम् ) अपि श्रृंगित्वस्य, लक्ष्यतावच्छेदकगोत्वावच्छिन्नप्रतियोगितानिरूपको भेदः गौर्न इत्याकारकस्तत्सामानाधिकरण्यम् ( तादृशगौर्न इति भेदाधिकरणमहिषादिवृत्तित्वम् ) अपि वर्त्तते श्रृंगित्वरूपलक्षणस्येति तन्न गोसामान्यलक्षणमतिव्याप्तत्वात् ।

असम्भवत्वञ्च-लक्ष्यमात्रावृत्तित्वम् यथा एकशफवत्त्वं गोलक्षणम् । इदञ्च क्वापि लक्ष्ये ( गवि ) न सम्भवति ? सर्वेषामपि गवाम् शफद्वयवत्त्वस्य स्वभावजत्वात । इत्येवं लक्षणमेतदसम्भवग्रस्तन्दुष्यति । निष्कर्षश्च—लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वन्तत् । यथा प्रकृते लक्ष्यतावच्छेदकं गोत्वं तद्व्यापकीभूतोऽभाव एकशफवत्त्वाभावः ( यत्र २ गोत्वन्तत्र २ एकशफवत्त्वन्नास्तीतिप्रतीतेर्गोत्वव्यापकीभूतोऽभाव एकशफवत्त्वाभावः ) तादृशाभावप्रतियोगित्वम् एकशफवत्त्वस्येति इति तदसम्भवदोषाश्रयमलक्षणम् । तथा च अव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयरहितत्वे सति केवलान्वयिभिन्नत्वे सति लक्ष्यवृत्तित्वं लक्षणत्वमिति फलितम

अभावप्रकाराः ।

त्रिविधो विशिष्टाऽभावः, विशेष्याऽभावप्रयुक्तः विशेषणाऽभावप्रयुक्तः उभयाऽभावप्रयुक्तश्च । पटे द्रव्यत्वविशिष्टघटत्वाऽभावः, पटे घटत्वविशिष्टद्रव्यत्वाऽभावः, तृतीयः गुणे घटत्वविशिष्टद्रव्यत्वाऽभाव इति ।

अन्यतमत्वम् ।

भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वमन्यतमत्वम् । भेदद्वयावच्छिन्नप्रतियोगितावच्छेदकत्वमन्यतरत्वम् ।

उत्तेजकत्वम् ।

प्रतिबन्धकतावच्छेदकीभूताऽभावप्रतियोगित्वमुत्तेजकत्वम् ।

तद्घटकत्वञ्च ।

तद्विषयताव्यापकविषयताकत्वम् ।

तद्घटितत्वञ्च ।

तदविषयकप्रतीत्यविषयकत्वम् ।

भावरूपाऽभावपदार्थाः ।

पटाऽभावाऽभावः पटस्वरूपः, पटाऽभावच्छेदोऽपि पटस्वरूप एव । घटभिन्नभेदो घटत्वस्वरूपः, घटभेदाऽभावो घटत्वस्वरूपः, घटवद्भिन्नभेदो घटस्वरूप एव । घटवद्भेदाऽभावो घटस्वरूपः । पटावृत्तिर्नास्तीत्याकारकोऽभावः पटत्वस्वरूपः । स च पटनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभाववत्स्वरूपेण नास्तीति व्यवहारसिद्धाऽभावः । घटपटान्यतराऽभावाऽभावस्य घटपटान्यतररूपतया विशिष्टं शुद्धान्नातिरिच्यत इतिसिद्धान्तोऽभ्युपेयः ।

मङ्गलभेदाः ।

त्रिविधम्मङ्गलम् ।

क्रियात्मकं शब्दात्मकं ज्ञानात्मकञ्चेति । स्वप्रतियोगिचरमवर्णानुकूलकृतिम-

---

उत्तेजकत्वन्तु प्रतिबन्धकसत्त्वेऽपि कार्यजनकत्त्वम् । यथा दाहत्वावच्छिन्नम्प्रति वह्नीन्धनसंयोगस्य प्रतिबन्धकाभावविशिष्टस्य कारणत्त्वम् । तत्र वह्नीन्धनसंयोगे सत्यपि चन्द्रकान्तमणिसमवधाने दाहो न जायते । तत्रैव च यदि उत्तेजकस्य सूर्य्यकान्तमणेस्समवधानं क्रियते तदा चन्द्रकान्तसत्तायामपि दाहो जायत एव । तथा च दाहप्रतिबन्धकचन्द्रकान्तसत्त्वेपि दाहत्वावच्छिन्नजन्यतानिरूपितजनकतावत्त्वं सूर्यकान्तस्येति संघटते तत्रोत्तेजकत्वलक्षणम् ।

दवच्छेदकतासम्बन्धेन जायमानसमाप्तित्वावच्छिन्नम्प्रति समवायसम्बन्धेन क्रियात्मकमङ्गलङ्कारणम् । स्वरूपसम्बन्धेन जायमानसमाप्तित्वावच्छिन्नम्प्रति समवायसम्बन्धेन गगनान्तर्भावेण शब्दात्मकमङ्गलस्य कारणत्वम् । स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासम्बन्धेन जायमानसमाप्तित्वावच्छिन्नम्प्रति समवायसम्बन्धेनात्मान्तर्भावेण ज्ञानात्मकमङ्गलस्य कारणत्वम् ।

## सङ्गतित्वञ्च—

अनन्तराऽभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धत्वम् ।

स प्रसङ्गउपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते ।

स्मृतस्योपेक्षानर्हत्वं प्रसङ्गत्वम् । स्वज्ञानजनकज्ञानविषयत्वमुपोद्घातत्वम् । उपजीव्योपजीवकभावत्वं हेतुत्वम् । उपजीवयतीत्युपजीव्य⌒प्रयोजक इत्यर्थः । उपजीवतीत्युपजीवक⌒प्रयोज्य इत्यर्थः । प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्युत्तरकालिकावश्यवक्तव्यपदार्थत्वमवसरत्वम् । स्वकारणजन्यत्वन्निर्वाहकैक्यम् । एतत्फलयोस्सङ्गतिरिति ज्ञेयम् । स्वकार्यजनकत्वम् कार्यैक्यम् । एतत्कारणयोस्सङ्गतिरिति ध्यानम् । परन्तु अन्यास्सङ्गतयश्च फलकारणयोस्सम्भवन्त्युभयोः ।

## शाब्दबोधविशिष्टसामग्री ।

द्वितीयाविभक्तेरर्थाश्च—निष्ठत्वम्[1], विषयत्वं[2], विशेष्यत्वम्[3], प्रकारत्वम्[4], प्रतियोगित्वम्[5], निरूपितत्वम्[6], व्यापकत्वञ्चेत्यादिः[7] । चैत्रो ग्रामङ्गच्छतीत्यत्र[1] ग्रामनिष्ठोत्तरदेशसंयोगावच्छिन्नक्रियावान् चैत्र इति । घटञ्जानातीत्यत्र[2] घटविषयकज्ञानानुकूलव्यापाराश्रयश्चैत्रः । पृथिवीं लक्षयतीत्यत्र[3] पृथिवीविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारोऽर्थः । पृथिव्या लक्षणम्वक्ति[4] इत्यत्र पृथिवीविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारोऽर्थः । पटन्नाशयतीत्यत्र[5] पटप्रतियोगिकनाशानुकूलव्यापारोऽर्थः । प्रतियोगित्वन्द्वितीयार्थः । घटम्प्रति कारणं[6] दण्ड इत्यत्र घटनिरूपितकारणतावान् दण्ड इति । मासमधीते[7] देवदत्त इत्यत्र मासत्वव्यापकाध्ययनकर्ता देवदत्त इतिशाब्दबोधः ।

तृतीयाविभक्त्यर्थाश्च—कर्तृत्व, करणत्व, ज्ञानज्ञाप्यत्व, अभेद, साहित्य, प्रतियोगित्व, निरूपितत्व, निष्ठत्व, समवेतत्व, समानकालिकत्व, अवच्छि-

न्नत्त्वादयः। उदाहरणानि—चैत्रेण पच्यते तण्डुल इत्यत्र चैत्रकर्तृकपचनकर्माभूतस्तण्डुल इति। परशुना छिनत्तीत्यत्र परशुकरणकछेदनकर्त्ता चैत्रादिः। धूमेन वह्निमनुमिनोमीत्यत्र ज्ञानज्ञाप्यत्त्वन्तृतीयार्थः। धान्येन धनवानित्यत्र धान्याऽभिन्नधनवानिति बोधादभेदस्तृतीयार्थः। पुत्रेणागतः पितेत्यत्र साहित्यन्तृतीयार्थः। रूपेण रहितो वायुरित्यत्र रूपप्रतियोगिकाऽभाववान् वायुरिति प्रतियोगित्त्वन्तृतीयार्थः। पुत्रेण सहित इत्यत्र पुत्रनिरूपितसाहित्यवान् इतिबोधान्निरूपितत्त्वन्तृतीयार्थः। पर्याप्त्या विशिष्टमित्यत्र पर्याप्तिनिष्ठप्रकारतानिरूपकाऽभिन्नमितिबोधान्निष्ठत्त्वमपि तृती०। मया ज्ञायत इत्यत्र मत्समवेतकृतिविषयोऽयमिति बोधात्समवेतत्त्वमपि तृ०। धावता पुरुषेण पीतमित्यत्र धावनसमानकालिकं पुरुषकर्तृकम्पानमिति बोधात् समानकालिकत्त्वमपि तृतीयार्थः। यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्त्वमित्यत्र यद्विषयकत्त्वावच्छिन्नेतिप्रतीत्या अवच्छिन्नत्त्वन्तृतीयार्थः। एवमन्येऽपि कल्पनीयाः।

**चतुर्थ्यर्थाः**—उद्देश्यत्त्व, तृप्तिप्रयोजकत्त्व, समवेतत्त्व, निष्पत्तिप्रयोजकत्त्व, विकारित्त्व, वृद्धिप्रयोजकत्त्व, आश्रितत्त्व, विषयत्त्व, स्वापहरणेच्छाप्रयोज्येच्छाविषयत्त्व, प्रयोजकत्त्व, इच्छाधीनेच्छाविषयत्वादयः। क्रमशस्तत्र विप्राय गान्ददाति भूतेभ्यो बलिमितिभूततृप्तिप्रयोजको बलिरिति। गवे सुखं गोसमवेतं सुखम्, यूपाय दारु यूपनिष्पत्तिप्रयोजकीभूतन्दारु। कुण्डलायाष्टापदमित्यत्र कुण्डलविकार्य्याष्टापदमिति। वृक्षायोदकं सिञ्चतीत्यत्र वृक्षवृद्धिप्रयोजकीभूतसेचनमिति वृद्धिप्रयोजकत्त्वन्तृतीयार्थः। नारदाय रोचते कलह इत्यत्र नारदाश्रितप्रीतिविषयीभूतः कलह इति आश्रितत्त्वमपि चतु०। पुष्पेभ्यःस्पृहयतीत्यत्र पुष्पविषयकेच्छावानयमितिबोधात् विषयत्त्वमपि चतुर्थ्यर्थः। एधेभ्यो गच्छतीत्यत्र इन्धनाहरणेच्छाप्रयोज्येच्छाविषयगमनकर्त्तेति फलितार्थः। अन्नाय यतते—अन्नसम्पादनप्रयोजकीभूतयत्नवानिति प्रतीत्या प्रयोजकत्वञ्चतुर्थ्यर्थः। यागाय यातीत्यत्र यागदर्शनेच्छाधीनेच्छाविषयगमनकर्त्ताऽयमिति बोधात् इच्छाधीनेच्छाविषयत्त्वमपि चतुर्थ्यर्थः। इत्येवमन्येऽपि कल्पनीयाः।

**पञ्चम्यर्थाः**—अवधिमत्त्व, प्रतियोगित्त्व, जन्यत्त्व, स्वकर्तृकोच्चारणाधीनत्त्व, निरूपितत्त्व, ज्ञानज्ञाप्यत्त्व, आरम्भपर्य्यन्ततदपेक्षत्त्वादयः। वृक्षात्पर्णम्पततीत्यत्र वृक्षावधिकपतनाश्रयम्पर्णमिति बोधः। घटाद्भिन्नः पट इत्यत्र घटप्रतियो-

गिकभेदाश्रय ऽपट इति प्रतियोगित्वम्पञ्च० । दण्डाद् घटः दण्डजन्यो घटः साध्याभाववतोऽवृत्तिरितिसाध्याऽभाववन्निरूपितवृत्तित्वाऽभाववानितिनिरूपितत्त्वम्पञ्चम्यर्थः । वह्निमान् धूमादित्त्यत्र धूमज्ञानज्ञाप्यत्त्वम्पञ्चम्यर्थः । आजननात्पठतीत्त्यत्र जननारम्भकपाठकर्त्तेति बोधादारम्भत्त्वमपि । आमरणाद्ध्यायतीत्त्यत्र मरणपर्यन्तध्यानप्रतीत्त्या पर्यन्तः पञ्चम्या अर्थः । आचार्यात्पुराणं शृणोतीत्त्यत्र आचार्यकर्तृकोच्चारणाधीनश्रवणकर्त्ताऽयमिति बोधात् तत्कर्तृकोच्चारणाधीनत्त्वमपि पञ्चम्यर्थः । अयमस्मात्प्रबल इत्त्यत्रैतदपेक्षप्राबल्यवानयमिति बोधात् तदपेक्षत्त्वमपि पञ्चमीविभक्त्यर्थः । एवमन्येऽपि ।

षष्ठ्यर्थाः—एकोनशतं षष्ठ्यर्थाः शतं षष्ठ्यर्था वा । विषयत्त्व[१], विशेष्यत्त्व[२], प्रकारत्त्व[३] प्रतियोगित्त्व[४], निरूपितत्त्व[५], वृत्तित्वस्वामितानिरूपितस्वत्त्व[६], प्रतिपादकत्त्व[७], उच्चरितत्त्व[८], प्रतियोगित्त्वानुयोगित्त्वे[९], अभेद[१०], कर्तृत्व[११], कर्मत्व[१२], अवयवत्त्व[१३], करणत्त्व[१४], समवेतत्त्व[१५], स्वसमभिव्याहृतपदार्थतावच्छेदक[१६]जातिशून्यषष्ठ्यन्तपदार्थव्यावृत्तत्त्वादयः । क्रमेणोदाहरणानि—ग्रामस्य ज्ञानमित्त्यत्र ग्रामविषयकं ज्ञानमितिबोधाद् विषयत्त्वम् । घटस्य लक्षणं कथयतीत्त्यत्र घटविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारप्रतीत्त्या विशेष्यत्त्वं षष्ठ्यर्थः । पृथिव्या लक्षणस्य ज्ञानं जनयतीत्त्यत्र पृथिवीविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारप्रतीत्त्या प्रकारत्त्वं षष्ठ्यर्थः । शत्रोर्नाश इत्त्यत्र शत्रुप्रतियोगिको नाश इति प्रतीत्त्या प्रतियोगित्त्वं षष्ठ्यर्थः । घटस्य कारणमित्त्यत्र घटनिरूपितकारणतावानयमितिप्रतीत्त्या निरूपितत्त्वं षष्ठ्यर्थः । घटस्य रूपमित्त्यत्र घटवृत्तिरूपमिति प्रतीत्त्या वृत्तित्वं षष्ठ्यर्थः । राज ऽपुरुष इत्त्यत्र राजनिष्ठस्वामितानिरूपितस्वत्त्ववानयमिति बोधात् । स्वामितानिरूपितस्वत्त्वमपि षष्ठ्यर्थः । गुरोर्नाम महत्त्वमित्त्यादौ गुरुप्रतिपादकनाममहत्त्वमिति बोधात् प्रतिपादकत्त्वं षष्ठ्यर्थः । आप्तस्य वाक्यम् गुरोर्वाक्यमित्त्यादौ आप्तोच्चरितम् वाक्यमिति प्रतीत्त्या उच्चरितत्त्वं षष्ठ्यर्थः ।

भूतलस्य घटस्य च संयोगस्सम्बन्धः इत्त्यत्र भूतलानुयोगिकः घटप्रतियोगिकस्संयोग इति प्रतीते ऽप्रतियोगित्त्वानुयोगित्त्वे षष्ठ्यर्थौ । राहोश्शिरः नाम्नोर्द्वयमित्त्यत्र राहुभिन्नं शिरः नामाभिन्नं शिरः नामाभिन्नं द्वयमितिप्रतीत्त्या अभेदोऽपि षष्ठ्यर्थः । चैत्रस्य गमनमित्त्यत्र चैत्रकर्तृकं गमनमितिप्रतीत्या कर्तृत्त्वं षष्ठ्यर्थः । जगत ऽपरिपालक इत्त्यत्र जगत्कर्मकपरिपालनप्रतीत्त्या कर्मत्त्वमपि

षष्ठ्यर्थः । देवदत्तस्य पाणिरित्यत्र देवदत्तावयवपाणिरिति बोधादवयवत्त्वं षष्ठ्यर्थः । "नाग्निस्तृप्यति काष्ठानां न पुंसाम्वामलोचने" इत्यत्र करणे षष्ठीविधानात् काष्ठकरणकतृप्त्यभाववानग्निः पुरुषकरणतृप्त्यभाववती वामलोचनेतिबोधात्करणत्त्वमपि षष्ठ्यर्थः । दाराणां सौन्दर्य्यमित्यत्र दारसमवेतं सौन्दर्य्यमितिबोधात्समवेतत्त्वमपि षष्ठ्यर्थः । नराणां क्षत्रियश्शूर इत्यत्र क्षत्रियत्त्वशून्यनरव्यावृत्तवान् क्षत्रिय इति शाब्दबोधप्रतीत्त्या स्वसमभिव्याहृतपदार्थतावच्छेदकजातिशून्यषष्ठ्यन्तपदार्थव्यावृत्तत्त्वमपि षष्ठ्यर्थ इति । एवमन्येऽप्यर्थास्तत्तल्लक्ष्यस्थाऽपरिज्ञेया अलमतिपल्लवितेनेति ।

सप्तम्यर्थाः—आधेय[1]त्त्व, विषय[2]यत्त्व, विशेष्य[3]त्त्व, निरू[4]पितत्त्व, व्यापक[5]त्त्वं, अभेद[6], अवच्छेद्य[7]त्त्व, घटक[8]त्त्व, प्रतिपाद्य[9]त्त्व, प्रकार[10]त्त्व, सामानाधिकरण्य[11]रूपवैशिष्ट्य, समान[12]कालिकत्त्व, पूर्वकालिक[13]त्त्व, उत्तरका[14]लिकत्त्व, अनुयो[15]गित्त्व, प्रतियो[16]गित्त्व, स्वविषयके[17]च्छाधीनत्त्व, स्वसमभिव्याहृतपदार्थतावच्छेद[18]कजातिशून्यसप्तम्यन्तपदार्थव्यावृत्तत्त्व, कार्यकार[19]णभावादयः । भूतले घट इत्यत्र भूतलवृत्तिघट इति प्रतीत्त्या आधेयत्त्वम् । शास्त्रे प्रवृत्तिः सर्पे द्वेषः सुन्दर्य्यां रतिरित्यादौ शास्त्रविषयकप्रतीतिदर्शनेन विषयत्त्वं सप्तम्यर्थः । पर्वते वह्निमनुमिनोमीत्यत्र पर्वतविशेष्यकवह्निविधेयकानुमितिप्रतीत्त्या विशेष्यत्त्वं सप्तम्यर्थः । भूतले घटो वर्त्तत इत्यत्र भूतलनिरूपितवृत्तितावान्घट इति प्रतीत्त्या निरूपितत्वं सप्तम्यर्थः। दिने२स्मरतीत्यत्र दिनत्त्वव्यापकस्मरणप्रतीत्त्या व्यापकत्त्वं सप्तम्यर्थः । विष्णौ भागवत इत्यादौ विष्णवभिन्नभगवद्विषयकभक्तिमानयमिति बोधादभेदोऽपि सप्तम्यर्थः । अग्रे वृक्षऽकपिसंयोगीत्यत्र अग्रावच्छिन्नकपिसंयोगवानिति प्रतीत्त्या अवच्छेद्यत्वमपि सप्तम्यर्थः ।

वाक्ये पदम् वने वृक्षः सूत्रे पदमित्यत्र वाक्यघटकम्पदमिति प्रतीत्या घटकत्त्व सप्तम्यर्थः । वेदे विषय इत्यत्र वेदप्रतिपाद्यो विषय इति बोधात प्रतिपाद्यत्त्वं सप्तम्यर्थः । पर्वते वह्नौ सन्दिहान इत्यत्र पर्वतविशेष्यकवह्निप्रकारकसन्देहवानयमिति बोधात् प्रकारत्त्वमपि सप्तम्यर्थः । द्रव्यकर्मभिन्नत्त्वे सति सामान्यवान् गुण इत्यत्र द्रव्यकर्मभिन्नत्त्वविशिष्टसामान्यवान् गुण इति शाब्दबोधात्सामानाधिकरण्यरूपवैशिष्ट्यं सप्तम्यर्थः । वित्ते नष्टे वितरणमहो कर्त्तुमिच्छन्ति मूढा इत्यत्र वित्त-

न्याधकालिकवितरणचिकीर्षावन्तो मूढा इति शाब्दबोधे समानकालिकत्वमपि सप्तम्यर्थः। पितरि गमिष्यति गत इत्यत्र पितृगमनपूर्वकालिकगमनकर्त्तेति बोधात्पूर्वकालिकत्वं सप्तम्यर्थः। पितरि गते गत इत्यत्र पितृगमनोत्तरकालिकगमनकर्त्ता पुत्र इतिबोधादुत्तरकालिकत्वं सप्तम्यर्थः। भूतले पटसंयोग इत्यत्र भूतलानुयोगिकपटप्रतियोगिकसंयोग इति शाब्दबोधदर्शनादनुयोगित्वं सप्तम्यर्थः। भूतलसंयोगः पटे इत्यत्र भूतलानुयोगिकपटप्रतियोगिकबोधात्प्रतियोगित्वमपि सप्तम्यर्थः।

चर्मणि द्वीपिनं हन्तीत्यादौ चर्मविषयकेच्छाधीनद्वीपिहननकर्त्तेति बोधात्स्वविषयकेच्छाधीनत्वमपि सप्तम्यर्थः। नरेषु क्षत्रियश्शूर इत्यत्र नराणां क्षत्रियश्शूर इतिवद् क्षत्रियत्वशून्यनरव्यावृत्तशूरत्ववान् क्षत्रिय इतिबोधात्स्वसमभिव्याहृतपदार्थतावच्छेदकजातिशून्यसप्तम्यन्तपदार्थव्यावृत्तत्वमपि सप्तम्यर्थः। ओदनभक्षणे क्षुत् शाम्यतीत्यत्र ओदनभक्षणजन्यक्षुच्छान्तिमानयमिति बोधात् कार्यकारणभावोऽपि सप्तम्यर्थः। एवमन्येऽपि सप्तम्यर्था याथातथ्येनोहनीयाः।

शाब्दबोधो द्विविधः, पूर्वं खण्डशाब्दबोधः पश्चादखण्डशाब्दबोधश्च। तथाहि पटमानयेत्यत्र पटपदस्य पटरूपोऽर्थः। कर्मत्वञ्च द्वितीयाया अर्थः, आङ्पूर्वकनीधातोरानयनमर्थः, मतभेदेनाख्यातस्य कर्त्ता कृतिर्वा अर्थ इत्येवं प्रकारेण खण्डशाब्दबोधो गौणः। गौणत्वञ्च शक्तिज्ञानजन्योपस्थितिप्रयोज्यशाब्दबोधीयविषयत्वाऽभाववत्त्वम्। पटनिष्ठकर्मतानिरूपकाऽऽनयनानुकूलव्यापाराश्रयस्त्वमितिविशिष्टशाब्दबोधोऽखण्डः। बालबोधव्युत्पत्तये प्रथमः। द्वितीयस्तु सार्वजनीनः। शाब्दबोधः पुनरपि द्विविधः वैदिकः लौकिकश्चेति। श्रुतिस्मृत्यादिप्रतिपाद्यो वैदिकः। लौकिकश्च शिष्टवाक्यजन्य एव। तत्रत्यप्रक्रियाक्रमस्त्वित्थम्, घटमानयेत्यत्र पूर्वं घटपदज्ञानम् पश्चाद् घटपदनिष्ठशक्तिज्ञानम् द्वाभ्यामुपस्थितिः पश्चाच्छाब्दबोधः। एवं लक्षणास्थले पूर्वम्पदज्ञानं पश्चाच्छक्तिज्ञानम् द्वाभ्यां शक्यार्थोपस्थितिः पश्चादन्वयतात्पर्य्यानुपपत्तिभ्यां लक्ष्यपदार्थे तात्पर्यज्ञानम् पश्चाल्लक्ष्यपदार्थोपस्थितिः तत्पश्चाल्लक्ष्यदार्थविषयकशाब्दबोधः गङ्गायां घोष इति व्यञ्जनावृत्तिरपि कैश्चित्स्वीक्रियते "दूरस्था भूधरा रम्या" इत्यत्र भूधरपदस्य पर्वतनृपयोस्समाना शक्तिरेव। "गच्छ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्ममे"त्यत्र भर्तृगमनानन्तरमरणव्यापारवती। परन्तु प्रकरणवलेन शक्त्यैव निर्वाहे न व्यञ्जनाशक्तिरिति तार्किकाः। अनुल्लिख्यमानजात्यखण्डोपाध्यतिरिक्तधर्माणां स्वरूपतो भाने प्रमाणाऽ-

भाव इति नियममनुसृत्य उल्लिख्यमानजात्यखण्डोपाधीनां तदतिरिक्तघटपटादिधर्माणाञ्च किञ्चिद्धर्मपुरस्कारम्बिना भानन्न भवतीति सिद्धनियमः। उदाहरणम्—पर्वतो वह्निमानिति अत्र जातेरनुल्लेखात्पर्वतत्वस्य वह्नित्वस्य च वह्नित्वेनैव स्वरूपेण भानन्न तु वह्नित्वत्वेन रूपेणेति। यत्र तु वह्नित्वविशिष्टवान्पर्वत इति उल्लिख्यमानेन व्यवहारस्तत्र वह्नित्वस्योल्लिख्यमानत्वेन वह्नित्वत्वेन रूपेण भानम्। वाह्नित्वनिष्ठा साध्यतावच्छेदकता वह्नित्वत्वावच्छिन्ना। यत्र जातेरखण्डोपाधेर्वोल्लेखस्तत्र जात्यखण्डोपाधिवृत्तिधर्मपुरस्कारेणैव भानम्। जात्यखण्डोपाध्यतिरिक्तधर्माणाञ्च सर्वदैव किञ्चिद्रूपेणैव भानन्न तु स्वरूपत इति सिद्धान्तः।

प्रकारताविशेष्यता विषयता संसर्गता अवच्छेदकताश्च ज्ञानभेदेन तत्तद्धर्मैरवच्छिन्नास्तत्तद्धर्म्मैरनवच्छिन्नाश्च भवन्तीति पदार्थज्ञाः।

इति पारिभाषिकप्रकरणम्।

## अथ शब्दसाङ्केतिकप्रकरणम्।

### अइउण् ऋलृक्।

ननु यथा सामान्यरूपेण तत्र२ अकार इकार उकार हकार इत्यादिषु "वर्णात्कार" इति गणवार्त्तिकेन चतुर्दशसूत्रीघटकाकारादिस्वरूपेभ्योऽपि कारप्रत्ययः कुतो न कृत इति चेन्न? "वर्णात्कार" इति वार्त्तिके "रोगाख्यायां ण्वुल्बहुल"मितिसूत्रीयबहुलग्रहणानुवृत्त्या "क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव" बहून् अर्थान् लातीति बहुलम् क्वचित्कारप्रत्ययो नेति कल्पनात्। किञ्च एषां सूत्राणामनादित्वेन साक्षाद्भगवद्वेदस्वरूपत्वेन छान्दसत्वा "च्छन्दसि दृष्टानुविधिः" "दृष्टानुविधित्वाच्च छन्दस" इति भाष्यप्रामाण्येन "छन्दोवत्सूत्राणि

केचित्तु—एवम् परिष्कुर्वन्ति, वर्णविशिष्टात् कारप्रत्ययो भवति। वै०त्वनिष्ठवर्णत्वव्याप्यजात्यवच्छिन्नविशेष्यताप्रयोजकतापर्य्याप्त्यधिकरणघटितत्व-त्वनिष्ठवर्णत्वव्याप्यजात्यवच्छिन्नविशेष्यताप्रयोजकतापर्य्याप्त्यधिकरणेतराघटितत्वैतदुभयसम्बन्धेन। अनूकार इत्यादौ तु "अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्ति" इत्यनेन अनादिषु वर्णबोधकत्वातिदेशात् कारप्रत्ययसिद्धिः। अपरे तु वषट्कार इत्यादौ यथा कारशब्देन समासस्तथैव अस्कार इत्यादावपीति न दोषलेशोऽपीति वदन्ति।

भवन्तीति" सामान्य "हलन्त्यमि"त्यादिसूत्रापेक्षया एषां गरीयस्त्वेन कारप्रत्ययानुत्पत्तेश्च। किञ्च अक्षरानुपूर्वीसम्पादन एवैषान्तात्पर्यमिति वर्णनेन तस्याऽप्रवृत्तेश्च। किञ्च एषां सूत्राणामुत्पत्तिप्रकाशसमये वक्ष्यमाणकारप्रत्ययादिविधीनामनुत्पन्नत्वेन तस्य प्रत्ययस्यैषु सूत्रोपात्तवर्णेषु कथमप्यप्रवृत्तेश्च। न च "अनकारस्मिविशेषयिष्यामः" इति भाष्यप्रयोगे "उच्चैस्तराम्वा वषट्कार" इति सौत्रप्रयोगे एवकार इति लौकिकप्रयोगे अनकारः अस्कारः उच्चारणार्थाकारघटितहकारादिष्वकार एवकारः अस्कार उच्चारणार्थ इत्यत्र हकार इत्यत्र च समुदाये वर्णत्वव्यवहाराऽभावात्कथङ्कारङ्कारप्रत्ययविधिरिति वाच्यम् ? बहुलग्रहणात्क्वचित्संघातादपि कारप्रत्ययविधानात् भावघञन्तकारशब्देन समासाभिधानेन प्रयोगसिद्धेश्च। "अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिम्प्रयोजयन्तीति" परिभाषाबलेन अन् इनिति समुदाये वर्णत्वबोधनात्कारप्रत्ययसौलभ्याच्च। "यीवर्णयोर्दीधीवेव्योः" "छ्ट्तिथोः" अदसोऽसेर्दादुदो मः" इत्यादिष्विकारस्योच्चारणार्थत्वेन सर्वसम्मतेन किकार इत्यादिष्वपि कारप्रत्ययस्सर्वाभिमतः। ननु "स्वं रूपं शब्दस्याऽशब्दसंज्ञे" तिसूत्रबलेन वर्ण इति स्वरूपबोधनेन वर्ण इत्याकारकानुपूर्वीमत् वर्णशब्दात्कारप्रत्यय इत्यर्थापत्तौ वर्णकार इत्येव रूपन्नतु अकार इकार इति रूपमिति चेन्न ? वर्ण (वर्ण क्रियाविस्तारगुणवचनेषु) इति धातुः। तत्र वर्णक्रिया वर्णकरणम् वर्णयति विस्तारयति सर्वं स्फोटात्मकञ्जगदिति वर्णः। "वर्णम्वाहु॒ पूर्वसूत्रे" अथवा पूर्वसूत्रे वर्णस्याक्षरमिति संज्ञा क्रियते इति "अमङणनम्" इति भाष्यम्। किञ्च

वर्णज्ञानम्वाग्विषयो यत्र च ब्रह्म वर्त्तते। तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते॥ १॥

इति भाष्यम्। व्याकरणान्तरे वर्णा अक्षराणि इति वचनमिति कैयटः। वर्णानुपलब्धौ चानर्थगतेः अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः वर्णेनाऽप्यनर्थकेन न भवितव्यङ्किपुनरियता सूत्रेण, उभयमिदम्वर्णेषूक्तम् अर्थवन्तोऽनर्थकाश्च वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते न वा, एकवर्णवच्च,चु टु तु लशर्व्यवायेनेति वा, त्रिभिश्च मध्यमैर्वर्गैर्शसैश्च व्यवायेनेति" अनेकप्रमाणव्यवहारधाराभिर्वर्ण इति शब्दशास्त्रीया महासंज्ञा इति "अशब्दसंज्ञे"तिनिषेधात्स्वरूपसूत्राऽप्रवृत्तेः। "वर्णात्कार" इत्यारम्भसामर्थ्याच्च "वर्णकार" इति रूपस्य क्वाऽप्यश्रुतेश्च। श्रुतिश्चेद्भावघञन्तकारशब्देन वर्णं करोतीति वर्णकार इति कर्मणन्तेन सिद्धेश्च। तथा च वर्णत्वेनाभिमतात्कारप्रत्यय इत्यर्थः। "इक्श्तिपौ धातुनिर्देशे" इत्यतो निर्देश इत्यनुवृत्त्या समुपस्थित-

त्वाद्वर्णनिर्देशे वर्णबोधकात् कारप्रत्यय इत्यर्थः । प्रमेयशब्दस्याऽपि वर्णबोधकत्वेन ततᳲकारप्रत्ययापत्तेः । उच्चारणार्थाऽकारविशिष्टकादीनाम्वर्णबोधकत्वाऽभावेन ककार इति विशिष्टप्रयोगेषु तदनापत्तेश्च । न च वर्णत्वव्याप्यजात्यवच्छिन्नविषयताकबोधकजनकात्कारप्रत्यय इतिप्रमेयादेस्तत्त्वाऽभावान्न दोष इति वाच्यम् ? ककारादिबोधनेच्छया यदा तत्पदम्प्रयुज्यते तदा तच्छब्दादपि कारप्रत्ययापत्तेः । अनुस्वारानुनासिकविसर्गजिह्वामूलीयादिभ्यᳲकारप्रत्ययापत्तेश्च । अत्र गुरुचरणाः—वर्णविशिष्टात्कारप्रत्ययो भवति । वैशिष्ट्यञ्च स्वाद्यवयवकत्व स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकवर्णत्वव्याप्यजात्यवच्छिन्नबोधकत्वेन तात्पर्यविषयत्व स्वविशिष्टाऽघटितत्वमिति त्रितयसम्बन्धेन। द्वितीयवैशिष्ट्यञ्च स्वेतरत्व स्वसमभिव्याहृताऽकारेतरत्वमित्युभयसम्बन्धेन । तच्छब्दस्य तकारविशिष्टदकारघटितत्वेन ततो न कारप्रत्ययः । द्वितीयसम्बन्धाद्वाग्देवतातात्पर्यक अशब्दे न दोषः । अकार इकार इत्यादौ स्वाद्यवयवकत्वम्व्यपदेशिवदेकस्मिन्निति परिभाषाबलेन बोध्यमित्याहुः । अत्र शुक्लाः—"वर्णात्कार" इत्यस्य स्थाने "अलᳲकार" इति न्यासः । अलिति प्रत्याहारः अल्पदमकारादिलान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ने शक्तम् । अलप्रत्याहारान्तर्गतवर्णस्वरूपात्कार इति तु न ? "अयोगवाहानामट्सूपसंख्यानं शर्षु चे"तिबलेनायोगवाहेभ्यᳲकारप्रत्ययापत्तेः । "आदेᳲकार" इतिन्यासः "रादिफ" इति साहचर्यादपदेन चतुर्दशसूत्रीघटकवर्णानां साक्षात्पठितानां स्वतन्त्रोच्चारणार्हाणामेव ग्रहणम् । अयोगवाहादिषु दोषाऽभावान्न्यासे समाधानस्फुटयम् । अस्मिन्न्यासे परिष्कारोपयोगो नेति सिद्धान्तवादिनो नव्यतमाः ।

### "लण्" सूत्रेऽकारश्चेति ।

"तुल्यास्य" सूत्रे भाष्ये ऋलृवर्णयोस्सावर्ण्यप्रसङ्गे "लपरत्वम्वक्ष्यामी"ति भाष्यकृतोक्तन्तत्र वक्ष्यामीत्यस्य व्याख्यास्यामीत्यर्थः । व्याख्या च "लण्"

---

( हलन्त्यम् , शाब्दबोधः ) उपदेशेऽन्त्यं हलित्स्यादिति वृत्तिकृत् । उपदेशपदार्थस्य अन्त्यपदार्थे स्वाधिकरणकालघटकत्वसम्बन्धेनान्वयः, अन्त्यपदार्थस्य च हल्पदार्थेऽभेदसम्बन्धेनान्वयः, हल्पदार्थस्य च इत्पदार्थे स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धेनान्वयः, इत्पदार्थस्य च अभेदसम्बन्धेन आक्षिप्तकर्तृपदार्थेऽन्वयः, कर्तृपदार्थस्य च वृत्तित्वसम्बन्धेन क्रियायामन्वयः, क्रिया च सर्वापेक्षया विशेष्याऽस्तीति "क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्कवचनात् । उपदेशपदञ्च शेखरकारादिमतानुसारेण पाणिनिकात्यायनपतञ्जल्यन्यतमप्रत्यासन्नैतच्छास्त्रप्रवर्त्तकाचार्यकर्तृक-

सूत्रीयाकारानुनासिकत्वप्रतिज्ञया रप्रत्याहारसिद्धिरूपा । न च वक्ष्यामीत्यस्य व्याख्यास्यामीत्यर्थे किम्प्रमाणम् क्वचिदयमर्थो दृष्टो न वेति वाच्यम् ? 'द्विर्वचनेऽची'ति सूत्रभाष्ये द्विर्वचननिमित्तेऽचि अजादेशस्स्थानिवदिति वक्ष्यामीत्युक्तम् तत्र वक्ष्यामीत्यस्य व्याख्यास्यामीत्येवार्थं इति प्रसिद्धेः । न च लाघवाद् वक्ष्यामीत्यस्य "उरण् रपर" इत्यादिसूत्रे "लपर" इत्येव करिष्यामीत्यर्थो न तु रप्रत्याहारसिद्धिरूप इति वाच्यम् ? एवमभिप्राये "उरण् रपर" इति सूत्र एवोक्तानुक्तदुरुक्तचिन्तकेन लक्ष्यसिद्धिसहायकेन वार्त्तिककृता "लपरश्चे"तिवक्तव्यमिति कृतं स्यात् भाष्यकृता च त्वयाऽत्र वार्त्तिके न कृतमिति वार्त्तिककारस्योपालम्भः कृतस्स्या-

---

केवलपाणिनीयसङ्केतसम्बन्धेन अपूर्वज्ञाननिरूपितविषयतानिरूपकबोधानुकूलशाब्दप्रयोगपरम्, धर्मविशिष्टव्यापारत्वकमिति यावत् । वै० स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्व स्वप्रकारकप्रत्यक्षानुकूलत्वैतदुभयसम्बन्धेन ।

तथा च स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्व स्वप्रकारकप्रत्यक्षानुकूलत्वतदुभयसम्बन्धावच्छिन्ना या धर्मविशिष्टव्यापारत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या स्वाधिकरणकालघटकत्वसम्बन्धावच्छिन्ना तादृशधर्मविशिष्टव्यापारत्वावच्छिन्ना धर्मविशिष्टव्यापारनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अन्त्यपदार्थत्वावच्छिन्ना अन्त्यपदार्थनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना तादृशविशेष्यतासमानाधिकरणा वा या अन्त्यपदार्थत्वावच्छिन्नाऽन्त्यपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या हल्पदार्थत्वावच्छिन्ना हल्पदार्थनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना तादृशविशेष्यतासमानाधिकरणा वा या स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धावच्छिन्ना हल्पदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या इत्पदार्थत्वावच्छिन्ना इत्पदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या अभेदसम्बन्धावच्छिन्ना इत्पदार्थत्वावच्छिन्ना इत्पदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता अथ च परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नवर्त्तमानकालनिष्ठप्रकारतानिरूपिता च या क्रियात्वावच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्यताकश्शाब्दबोध इति प्रकारो लघीयान् ।

तथा च रप्रत्याहारसिद्धिरूपैव व्याख्या ज्यायसी न तु "लूपर" इति पठनरूपा। किञ्च विधिप्रत्ययस्य तव्यादेरेव सर्वत्रैतदर्थकत्वेन दृष्टतया लपरत्वमवक्तव्यमव्याख्यातव्यमिति वा प्रकारेण कथन्नोक्तः। एवञ्च तव्यादेरभावाच्च ज्ञायते "उरण् रपर" इत्यत्र "लूपर" इति पठनरूपो नार्थः किन्त्वनुनासिकत्वप्रतिज्ञया रप्रत्याहारसिद्धिरूपैवेत्यभिधानाच्च। किञ्च काशिकाकारेण हकारादिष्वकार उच्चारणार्थः। लकारे त्वकारोऽनुनासिक इत्संज्ञकः तेन "उरण् रपर" इत्यत्र रप्रत्याहारग्रहणम्भवतीति स्पष्टमुक्तमिति प्रमाणाच्च। न चैवमाकारकः प्रत्याहारो न कुत्रचिद् दृष्ट इति वाच्यम्? "नश्छव्यप्रशान्" एङि पररूप" मित्यादौ तथा दर्शनात्। नच रप्रत्याहारकल्पे अनुनासिकत्वकल्पने "वनो र च" "रदभ्याम्निष्ठा" इत्यादौ रप्रत्याहारानित्यत्वकल्पनञ्च महद् गौरवमिति वाच्यम्? "यणः प्रतिषेधो वाच्य" इति वार्त्तिकप्रत्याख्यानाय "नवा झलो लोपात्" इति व्याख्यानेन वार्त्तिकप्रत्याख्यानवदपूर्ववचनकल्पनापेक्षया व्याख्यानस्य लघुत्वसूचकत्वमेवेति गौरवाऽभावात्। न चैवम्विधस्थले प्रत्याहारस्वीकारे "मादुपधायाश्च मतोर्वोऽयवादिभ्य" इतिसूत्रेऽपि वप्रत्याहारसिद्धिरापतेदिति वाच्यम्? प्रमाणाऽभावात्। हरदत्तेन तथैव रप्रत्याहारस्य व्याख्यातत्वाच्च।

फलाऽभावात् "नाऽसूया कर्त्तव्या यत्रानुगमः क्रियत" इतिपंक्तिर्विशतीतिभाष्याच्च। किञ्च "वनो रचे"त्यर्थन्नानित्यत्वपरिकल्पनगौरवन्तुल्यास्यपूर्वभाष्यप्रामाण्येनागतिकगतिमूलकेनानन्त्यवर्णेत्संज्ञया रप्रत्याहारस्वीकारेऽपि अन्यत्र तत्स्वीकारेऽन्याय्यत्वमेव नाऽसूयेति भाष्यान्मादुपधायाश्चेत्यत्र वप्रत्याहाराऽपत्तेश्च। न च हकारादिष्वकार उच्चारणार्थ इति पूर्वसामान्यप्रतिज्ञया लण्सूत्राकारस्याऽप्युच्चारणार्थकत्वेन नानुनासिकत्वप्रतिज्ञास्मरणमिति कथम्प्रत्याहारसिद्धिरिति वाच्यम्? अनुवाद्यविषये तस्याकारस्यानुनासिकत्वेनेत्संज्ञकत्वाऽभावेऽपि विधेयविषये तस्य तत्त्वमस्त्येवेति "तस्य लोप" इति सूत्रीयविवरणे स्पष्टमुपपादितत्वात्। उच्चारणार्थानाम्वर्णानामपि इत्संज्ञालोपाभ्यामेव निवृत्तिरिति "दिव औत्" दिव उदि"तिसूत्रभाष्यप्रमाणाद्विधेयविषय एवेति वर्णनाच्च। न च शेखरोक्तरीत्या अनुनासिकत्वगुणविशिष्टस्याऽकारस्य हल्प्रत्याहारे प्रवेशापत्तौ सोऽस्ति मा मांत्रायस्वेत्यादौ हलोपानुस्वारापत्तिरिति वाच्यम्? प्रत्याहारसिद्ध्यर्थमुपात्तानुबन्धस्य कार्यान्तरसाधकत्वन्नास्तीति "यत्कार्यसिद्ध्यर्थमाश्रितोऽनुबन्धस्तदतिरिक्तकार्यन्न

आप्नोति" एतच्च "तिप्तस्झी"तिसूत्रभाष्ये स्पष्टम् । "तस्थस्थमिपामि"तिसूत्रस्थाने "तस्थपामि"तिन्यासस्त्वथविति प्रत्याहारः "तिप्तस्झी"तिसूत्रे थशब्दादारभ्य मिप ऽपकारेण । एवञ्च लक्ष्यसिद्धौ सत्यामपि मिप ऽपकार "सार्वधातुकमपित्" ङतो वृद्धिर्लुङि हली"त्यादिप्रवृत्त्यर्थ ऽप्रत्याहारं थपकुथं साधयेत ? अत एव तिङ्प्रत्याहारसिद्ध्यर्थमाश्रितोऽनुबन्धस्सम्पप्रच्छिमहे इत्यादौ सम्प्रसारणञ्च साधयतीतियुक्ते "लँण्" सूत्राकारस्य न हल्प्रत्याहारे प्रवेशः । अत्र प्रमाणान्तरञ्च "हल्ङ्यादि" सूत्रे ङ्याब्ग्रहणम् , अन्यथाऽकारस्य हल्प्रत्याहारे प्रवेशसत्त्वेन हलन्तत्वादेव सुलोपसिद्धेरिति । किञ्चाकारस्य हल्प्रत्याहारे प्रवेशे एष विष्णुः स शम्भुरित्यादौ हल्ङ्यादिसूत्रेणैव सुलोपसिद्धौ "एतत्तदोस्सुलोपोऽकोरि" तिसूत्रमव्यर्थं स्यादतो यदर्थमनुबन्ध इति ज्ञापयति । अथवा "एतत्तदो"रितिसूत्रारम्भसामर्थ्यात् "लण्" सूत्रस्थाकारस्य न हल्प्रत्याहारे प्रवेश इति परिकल्पनाच्च ।

नच

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।

आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ॥

इत्यच्प्रत्याहार एव शङ्का न तु हल्प्रत्याहार इति वाच्यम् ? "हयवरट्" सूत्रव्याख्यानानन्तरम्प्रत्याहारेऽनुबन्धानामिति भाष्यकृत्कथनेन कारिकास्थाच्पदस्योपलक्षणत्वेन स्थालीपुलाकन्यायेन च अच् हल् साधारण्येन प्रत्याहारेऽनुबन्धानामिति भाष्योक्तेः । किञ्च अच्मात्रतात्पर्ये "अइउण्"इत्यादिसूत्रचतुष्टयानन्तरमेव भाष्यकृता प्रत्याहारेऽनुबन्धानामिति कथन्नोक्तं "हयवरट्" सूत्रानन्तरमुपादानेन सर्वसाधारण्यमुपपद्यते इत्यभिधानम् ।

ननु एतावता प्रबन्धेन रप्रत्याहारस्वीकारे "अतो ल्रान्तस्ये"त्यत्र रप्रत्याहारेणैव सिद्धौ लकारोपादानम्पाणिनीयमनर्थकं स्यात्तस्मान्न रप्रत्याहार इति वाच्यम्? भाष्यसिद्धान्तसिद्धरप्रत्याहारस्य तत्रत्यलकारेण सर्वथाऽत्यन्ताऽभावो न व्याख्येय ऽकिन्तु स्पष्टार्थं लकारोच्चारणम् । "रदाभ्यान्निष्ठातो न ऽपूर्वस्य च दः" रषाभ्यान्नो णस्समानपदे"प्रफुल्लः कमलानामित्यादौ नत्वणत्ववारणाय "व्याख्यानतो विशेषप्रतिपत्ति"रितिन्यायेन "उभयगतिरिह भवतीति" न्यायेन च सूत्रद्वयस्थदकारषकारोभयसाहचर्य्येण लक्ष्यानुसारिव्याख्यानेन च रेफस्यैवोभयत्र ग्रहणन्न रप्रत्याहारस्येति वर्णनेन निष्ठास्थले न रप्रत्याहाराश्रयणन्तथा च रप्रत्याहारो ज्या-

यानेव । किञ्च सहचरितपरिभाषाबलेनैव "अतो ल्रान्तस्ये" त्यत्रापि अत्पदेन वर्णोऽकारः तत्साहचर्य्यात् तत्सूत्रे रेफवर्णस्यैव ग्रहणन्न तु रप्रत्याहारस्येति तेनाऽविरोधात । न च तत्र लकारोच्चारणेन रप्रत्याहारस्य प्रमाणयुक्तिबलसिद्धस्यानित्यत्त्वमेव स्यादिति वाच्यम् ? यदि रत्वावच्छेदेन रेफलकारोभयनिरूपिता शक्तिरनित्या "सिद्धे शब्दार्थसम्बन्धे" नित्यत्त्वाऽसम्भवात् ।

टकारो मध्यपाती स्यात्तत्त्यागे न्यूनता ध्रुवम् ।
इत्त्याशंक्य समाधत्ते प्रत्त्याहारेष्वितामिति ॥ १ ॥

ानुबन्धा × प्रत्त्याहारजन्यबोधविषयत्त्वाऽभाववन्तः बलवत्तरलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्त्वात् । न चैतदनुमानन्न युक्तम् हलप्रत्त्याहारजन्यबोधविषयत्त्वस्य णकाराद्यनुबन्धेषु सत्त्वाद् बाधात् इति वाच्यम् ? अनुबन्धाः स्वविशिष्टवर्णाघटितसमुदायोपलक्षितशक्तिमत्प्रत्त्याहारत्रेोध्यत्त्वाऽभाववन्तः, बलवत्तरलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्त्वात् । वैशिष्ट्यञ्च स्वभिन्नत्त्व स्ववृत्तिवर्णत्त्वव्याप्यजातिमत्त्वोभयसम्बन्धेन । यादृशसमुदाये अनुबन्धसजातीयो द्वितीयो वर्णो नास्ति तादृशसमुदायबोधकप्रत्त्याहाराऽबोध्यत्त्वमेव अनुबन्धे साध्यत इति सिद्धान्तः । वस्तुतस्तु प्रत्त्याहारमात्राणामाद्यन्ताक्षिप्तसमुदायघटकवर्णवृत्तिजात्त्यवच्छिन्नबोधकत्त्वमेव प्रत्त्याहारजन्यबोधीयघटकत्त्वावच्छिन्नविषयत्त्वस्यैवाऽभावस्साध्यते । अनुबन्धानान्तादृशसमुदायघटकत्त्वेनाऽऽग्रहणेऽपि तादृशसमुदायघटको योऽनुबन्धेतरो योऽनुबन्धसदृशस्तद्वृत्तिधर्मो णत्त्वादिस्तेन रूपेणानुबन्धानां ग्रहणेऽपि न बाधशङ्केति तत्त्वम् । अनुमानमेतत अनुबन्धत्वरूपपक्षतावच्छेदकावच्छेदेनैव न तु अनुबन्धत्त्वसामानाधिकरण्येन । अनुबन्धत्त्वावच्छेदेनानुमितावनुबन्धत्त्वव्यापकत्वं हेतावभीष्टम् । इत्संज्ञायोग्यत्त्वरूपानुबन्धत्त्वस्वीकारात् इति कथमपि न स्वी-

---

अनुमितिर्द्विधा भवति पक्षतावच्छेदकावच्छेदेन पक्षतावच्छेदकसामानाधिकरण्येन चेति। सन्दिग्धसाध्यवान् पक्षः (यत्र खलु अनुमितेः पूर्वं साध्यत्त्वेनाभिमतस्य सन्देहो नतु निश्चयः,सिषाधयिषाविरहविशिष्टसिद्धिनिश्चयस्य अनुमितिप्रतिबन्धकत्त्वात् )तथाहि पर्वतो वह्निमान् इति ज्ञानं यद्यनुमितेः प्रागेव प्रत्यक्षादिनाऽस्ति तदा पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिरसा नैवोदेति ) पक्षतावच्छेदकावच्छेदेन इत्यस्य यावत्पक्षे इत्यर्थः । पक्षतावच्छेदकसामानाधिकरण्येन इत्यस्य यत्किञ्चित्पक्षे इत्यर्थः ।

अनुबन्धः—इत्संज्ञायोग्यत्त्वमनुबन्धत्त्वम् इति । इत्संज्ञकत्त्वमनुबन्धत्त्वमिति च पक्षद्वयमपि शास्त्रे निरूपितम् ।

कार्य्यम् , किन्तु इत्संज्ञकत्वमनुबन्धत्वम् इत्संज्ञाविधायकशास्त्रनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वम् इत्प्रत्याहारसिद्धिसमये, तच्च तत्र नास्तीति हेतोः पक्षतावच्छेदकस्य च तत्राऽभावान्नाव्यापकत्वशङ्का, रप्रत्याहारवादिभाष्यानुयायिप्राचामिति । इत्संज्ञायोग्यत्वेनानुबन्धत्वस्य शास्त्रव्यवहाराविषयत्वात् । वस्तुतस्तु अन्त्याऽनन्त्येत्संज्ञकवर्णसाधारण्येन आचारात् इत्येव हेतुर्मुख्यः । "आदिरन्त्येन सहेतेति" सूत्रारम्भसामर्थ्यात् लोपश्च बलवत्तर इति व्याख्यानम् अन्त्येत्संज्ञकवर्णातिरिक्तेत्संज्ञकवर्णपरम् आवश्यकम्। एवञ्च तस्याव्यापकत्वं स्पष्टमेव अन्त्यविषये तस्याऽसमाधायकत्वात्। अत एव अन्त्याऽनन्त्यसाधारण्येनाचारादित्येवोक्तमप्रधानत्वादिति हेत्वन्तरन्तु लक्ष्यकचक्षुष्कदृष्ट्या । अयम्वर्णः प्रत्याहारेषु ग्रहणार्थः अयन्तु नेतिविषयविभागस्य दधिणकारीयतीति दृष्टान्तदानेन लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वात् । अप्रधानत्वात् लोपश्च बलवत्तर इत्यनयोर्हेत्वोरव्यापकत्वेऽपि क्षतिर्नास्ति । आचारादिति प्रथमहेतोरेव मुख्यत्वम् । हेत्वन्तरयोस्तु अभ्युच्चयवादेनैवोपन्यासात्। किञ्च अथवा "ऊकालोऽजि"तियोगविभागः करिष्यते इत्यनन्तरोक्तहेतूपन्यासात् । अत एव सर्वान् हेतुनुपन्यस्य एवमपि कुक्कुट इत्यत्रापि प्राप्नोतीत्यन्त्यहेतुदूषकवाक्ये एवमपीत्यत्रापिशब्दः प्रयुक्तः । तेन पूर्वोक्तहेतुद्वयेऽव्यापकत्वादिरूपदोषान्तरमस्त्येवेति ध्वनितम् । अग्रे च तस्मात्पूर्वोक्त एव परिहार इत्युपसंहृतम् । तत्र च पूर्वोक्त एवेत्येकवचनस्वारस्येन पूर्वपदस्वारस्येन च आचारादित्यस्यैव सार्वत्रिकत्वम् । अन्ये च एवकारव्यवच्छेद्याः । एवञ्च अप्रधानत्वात् लोपश्च बलवत्तर इति हेत्वोरप्रधानत्वेनाऽव्यापकत्वमिष्टमेव, केवलाऽऽचारादित्यस्यैव मुख्यत्वं रप्रत्याहारस्वीकृतिश्च गरीयसी ।

ननु

ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥
विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ २ ॥

यादृ प्रातिपदिकार्थशब्दोऽपि शाब्दबोधे भासते इति वैयाकरणमते "इको यणचीत्यादौ इक्शब्दस्याऽपि शाब्दबोधे भानेन ककारस्याऽपि शाब्दबोधे भानेन प्रत्याहारजन्यशाब्दबोधविषयत्वाभाववत्त्वाऽभावात्कथङ्कारमनुमितिरेव-

मन्यत्राऽपि व्यभिचार इति चेन्न ? इक्शब्दत्वेन शाब्दबोधविषयत्वेऽपि कत्वेन ककारत्वेन शाब्दबोधविषयत्वन्नास्ति प्रत्याहारजन्यता वर्णत्वेन पर्याप्ता विवक्षिता अनुबन्धत्वस्य प्रत्येकवर्णपर्याप्तत्वात । अनुबन्धाऽप्रत्याहारजन्यवर्णत्वधर्मपर्याप्तविषयताप्रयोज्यशाब्दबोधविषयत्वाऽभाववन्तः बलवत्तरलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात इति ।

नच "नह्यवयवापर्याप्तधर्मस्य समुदाये पर्याप्तिरि"ति न्यायेन कत्वेन शाब्दबोधविषयत्वादेवेक्त्वेन शाब्दबोधविषयत्वमिति वाच्यम् ? सूत्रजन्यशाब्दबोधसहायकानुबन्धातिरिक्तानुबन्धाऽप्रत्याहारजन्यशाब्दबोधविषयत्वाऽभाववन्त इति साध्यसमर्थनेनाक्षतेः । किञ्च "तस्य लोप" इति शास्त्रेण इत्संज्ञकवर्णानां शाब्दबोधे प्रवेशाऽभावो बोध्यते । एवञ्च साक्षाल्लक्ष्यसाधकत्वन्नास्तीति फलितार्थः । साक्षाल्लक्ष्यसाधकत्वमिको यणचीतिघटकककारादीनां नास्तीति किन्तु स्वरूपसम्पादकत्वेनैव ककारादिश्रुतिरिति ।

## उपदेश आद्योच्चारणम ।

उपदेशनमुपदेशो भावे घञ् । प्रत्यक्षमाख्यानमुपदेशः, धर्मविशिष्टव्यापारत्वम् वैशिष्ट्यञ्च स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्व स्वप्रकारकप्रत्यक्षानुकूलत्वोभयसम्बन्धेन । भावघञन्तेऽनेके दोषाश्शेखरकारादिभिर्दर्शितास्ते नयुक्तास्तथाहि, "हूटस्सद्दे"त्यत्र तु न दोषः। "तौ सदि"तिसूत्रे तच्छब्दस्य बुद्धिस्थपरामर्शकत्वेनेत्संज्ञकावयवकयोरेव शतशानचोऽपरामर्शेन सत्संज्ञाविधानात । क्तक्तवत्वोरपि-

उपदेश इति—प्राचीना उपादिश्यतेऽनेनेति व्युत्पत्त्या करणे घञं स्वीकृत्य "धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् । आगमप्रत्ययादेशा उपदेशाः प्रकीर्त्तिताः" इति प्रोचुः तस्य च खण्डनं बहुधा कृतम् । समर्थनञ्च भाष्यसम्मतमेव कौमुदीशेखरादिकृद्भिः कृतम् । तथाहि "आदेच उपदेशेऽशिति, एकाच उपदेशेऽनुदात्तात्" उद्देशश्च प्रातिपदिकानान्नोपदेशः, उपदिष्टा इमे वर्णाः" इत्यादिना उपदेशपदार्थाद्योच्चारणस्यैव सर्वसम्मतत्वादिति । करणे घञि विशेषापत्तिश्च, "अइउण्" इत्यत्र विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्वानुपपत्तिः । "ध्वसोरेद्धावभ्यासलोपश्च" इत्यत्र शस्य प्रातिपदिकत्वेऽपि तद्बोधकत्वाभावाच्चेत्वानुपपत्तिर्दुर्वारैव। तस्माद् भावघञन्त एवोपदेशशब्द इति बोध्यम् ।

केचित्तु—धर्मविशिष्टोच्चारणम् आद्योच्चारणम् वै० स्वावच्छिन्नविषयताकश्रावणप्रत्यक्षानुकूलत्व स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्वमित्युभयसम्बन्धेन । एवञ्च क्तिनादिकमादाय लक्षणसमन्वयः कार्यः ।

न दोषः "क्तक्तवतू निष्ठे"तिपरिभाषासूत्रमिति कल्पना। यत्र निष्ठापदन्तत्र क्तक्तवतु उपतिष्ठेते । "निष्ठे"तिसूत्रे तयोरुपस्थितत्त्वया लक्ष्यासिद्धेः । ठक्छसोरपि न दोषः उपदिश्यमानसमुदायविशिष्टस्यान्त्यस्यैवेह विवक्षणात् । वै० स्वघटकत्त्व–स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्त्वमित्त्युभयसम्बन्धेन । "चो॒ कु"रित्त्यादावपि न दोषः ? ऐन्द्रचान्द्रादिव्याकरणान्तरीयसंज्ञामादाय लक्ष्यसिद्धेः । "ष्यसोरेद्धावभ्यासलोपश्चे"त्त्यत्र तु प्रश्लेषविधानसामर्थ्यादेवेत्संज्ञा । "अइउणि"त्त्यत्र न दोषः ? "इष्टबुद्ध्यर्थश्च वर्णोपदेश" इत्त्यादिभाष्यबलेन अत्त्वावच्छिन्नस्साधुरित्त्वावच्छिन्नस्साधुरिति साधुत्त्वविधायकत्त्वेनोपदेशत्त्वम् । "नमोवरिवश्चित्रङः" इत्त्यादौ तु न दोषः । ङपदम्पृथक् ङिति लाक्षणिकम् , चित्रेतिशब्दात् क्यच् स च ङित्, एवमेवम्प्रकारेण सर्वे दोषा निरसनीयाः भाष्यविरोधोऽपि नेति भाववजन्त एवोपदेशशब्दशब्दरत्नशेखरयोर्दुराग्रहमात्रम् ।

तुल्यास्यप्रयत्नमिति—

प्रत्यर्थं शब्दाभिनिवेश इति भाष्यात प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितव्यक्तिनिष्ठनानाविशेष्यताकशाब्दबोधेच्छायामेव नानाशब्दोच्चारणप्रसङ्गस्तत्रैवैकशेषः । यत्र च प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितव्यक्तिनिष्ठैकविशेष्यताकबोधनेच्छा तत्रैकस्यैव शब्दस्योच्चारणमिति तत्र नैकशेषः । अत्रैकशेषम्विनैव तुल्यत्त्वनिष्ठैकप्रकारताकव्यक्तिद्वयबोधजनकस्य एकतुल्यशब्दस्य द्विवचनान्तस्य प्रयोग इति

---

( तुल्यास्यप्रयत्नं सवर्णम्–शाब्दबोधः ) ताल्वादिस्थानमाभ्यतरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् इति वृत्तिकारः ।

सूत्रशाटकन्यायेन कुलालदोहनीन्यायेन च सवर्णसंज्ञकत्त्वेनाभिमतवत्तद्वर्णनिष्ठा या जन्यता तादृशजन्यतानिरूपिता या जनकत्त्वसम्बन्धावच्छिन्ना ताल्वादिस्थानाभ्यन्तरप्रयत्नोभयत्त्वावच्छिन्ना ताल्वादिस्थानाभ्यन्तरप्रयत्नोभयनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्त्वावच्छिन्ना तादृशविशेष्यत्त्वाभिन्ना वा या समानन्यायेन वर्णान्तरनिष्ठस्वजनकस्थानजन्यत्त्वे सति स्वानुपूर्वीमत्त्वसम्बन्धावच्छिन्ना ताल्वादिस्थानाभ्यन्तरप्रयत्नोभयत्त्वावच्छिन्ना ताल्वादिस्थानाभ्यन्तरप्रयत्नोभयनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या वर्णान्तरनिष्ठजन्यतानिरूपितजनकत्त्वसम्बन्धावच्छिन्ना ताल्वादिस्थानाभ्यन्तरप्रयत्नोभयत्त्वावच्छिन्ना ताल्वादिस्थानाभ्यन्तरप्रयत्नोभयनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्त्वावच्छिन्ना तादृशविशेष्यत्त्वाभिन्ना वा या प्रतियोगित्त्वसम्बन्धावच्छिन्ना ताल्वादिस्थानाभ्यन्तरप्रयत्नोभयत्त्वावच्छिन्ना ताल्वादिस्थानाभ्यन्तरप्रयत्नो-

न क्षतिः तुष्याविति च युक्तम् । ननु अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णः कुतो नेति चेन्न ? सम्बन्धिशब्दैर्वा पुनस्तुल्यमेतत् इतिभाष्यात् यो यस्य तुल्यास्यप्रयत्नस्स तस्य सवर्ण इति भावः । "यजुष्येकेषा"मितिनिर्देशेन यावत्स्थानसाम्यविवक्षणादेकारैकारयोर्न सावर्ण्यम् । स्वविशिष्टो वर्णस्त्वसवर्णः वैशिष्ट्यञ्च—स्वजनकस्थानजन्यत्व स्वाजनकस्थानाजन्यत्व स्वजनकस्थाननिष्ठजनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावाप्रतियोगित्व स्वजनकप्रयत्नजन्यत्व स्वा-

---

भयनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या सादृश्यापरपर्य्यायतुल्यत्वावच्छिन्ना तुल्यपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या स्वनिष्ठयावत्कार्य्यकारित्वसम्बन्धावच्छिन्ना तुल्यत्वावच्छिन्ना तुल्यपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या परस्परत्वावच्छिन्ना परस्परपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या सङ्केतसम्बन्धावच्छिन्ना परस्परपदार्थत्वावच्छिन्ना परस्परपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या सवर्णसंज्ञत्वावच्छिन्ना सवर्णसंज्ञपदार्थनिष्ठा विशेष्यता तादृशविशेष्यत्वाभिन्ना तादृशविशेष्यत्वावच्छिन्ना तादृश विशेष्यतासमानाधिकरणा वा या अभेदसम्बन्धावच्छिन्ना सवर्णसंज्ञत्वावच्छिन्ना सवर्णसंज्ञपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता अथ च परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नवर्तमानकालनिष्ठप्रकारतानिरूपिता या क्रियात्वावच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्यताकशाब्दबोधः ।

तुल्यास्येति—केचित्तु स्वजनकयावत्स्थानप्रयत्नजन्यत्व स्वाजनकस्थानप्रयत्नाजन्यत्वमित्येतदुभयसम्बन्धेन स्वविशिष्टो वर्णस्सवर्ण इति परिष्कुर्वन्ति । अकारस्य एकारेण सावर्ण्यञ्च भवति प्रथमसम्बन्धदानात् । द्वितीयसम्बन्धदानेनाकारस्यैकारेण सह सावर्ण्यव्यावृत्तिः । नचैवं ङकारककारयोः सावर्ण्यापत्तिः ककाराजनकनासिका स्थानजन्यत्वस्य ङकारे सत्त्वादिति वाच्यम् ? "तुल्यास्य" सूत्रे भाष्ये "सिद्धंत्वास्ये तुल्यदेशप्रयत्नम्" इतिवार्त्तिके आस्यग्रहणस्य देशप्रयत्नोभयविशेषणत्वेन नासिकायाश्च ओष्ठप्रभृतिकाकलकपर्यन्ताऽऽस्याद् बाह्यत्वेन तज्जन्यत्वस्य सावर्ण्यावारकत्वात् । नासिकाऽपि आस्यान्तर्गता इतिकेषाञ्चिन्मतेऽपि "मुखनासिका" इति सूत्रे नासिकाभिन्नावयवार्थबोधक मुखशब्दग्रहणेन तत्साहचर्य्यात् अत्र सूत्रेऽपि तदर्थकस्यैव आस्यशब्दस्य ग्रहणेन दोषविरहादिति वदन्ति ।

जनकप्रयत्नाजन्यत्वमिति पञ्चसम्बन्धैः । आद्यसम्बन्धदानात्कचयोर्न सावर्ण्यम् । द्वितीयदानादेकारो न इकारस्य सवर्णः । तृतीयदानादिकारो न एकारस्य सवर्णः । एकारजनककण्ठस्थानजनकत्वसम्बन्धेन इकारो नेत्याकारकाऽभावप्रतियोगित्वस्यैव इकारे सत्त्वात् । चतुर्थनिवेशात् चकारयकारयोर्न सावर्ण्यम् । पञ्चमनिवेशात् एकारैकारयोर्न सावर्ण्यम् । ननु संयोगसमवायादीनामेव वृत्तिनियामकसम्बन्धानामभावप्रतियोगितावच्छेदकत्वमिति, जनकत्वसम्बन्धस्य वृत्त्यनियामकत्वे तु ? स्वजनकस्थाननिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगिजनकतानिरूपितजन्यत्वाऽभाववत्त्वस्यैव पञ्चमसम्बन्धत्वात् । ननु कुत्रचिल्लक्ष्ये चरितार्थस्य सूत्रस्य कुत्रचित्प्रवृत्तिर्न स्यादतो हि उद्देश्यतावच्छेदकव्यापकत्वम्विधेये भासत इतिशास्त्रतात्पर्यमावश्यकम्, तच्चात्र न सम्भवति निषेधविषये उद्देश्यतावच्छेदकस्य सत्त्वेऽपि विधेयाऽभावात । अतो निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन विधिशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचम्विधाय सङ्कुचितोद्देश्यतावच्छेदकव्यापकत्वञ्च विधेये इति न निषेधमादाय व्याप्तिभङ्ग इति स्थितौ "नाज्झलावि"तिनिषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन "तुल्यास्यप्रयत्नमि"तिशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽपि सङ्कोच आवश्यकः । स च कीदृशः ? यदि आज्झलत्वावच्छिन्नातिरिक्तत्वेन सङ्कोचस्तर्हि आज्झल्भिन्नस्तुल्यास्यप्रयत्नो वर्णस्सवर्ण इत्यर्थापत्तौ सर्ववर्णस्याज्झल्रूपत्वेन सूत्रार्थाऽप्रसिद्धिः । नच वाक्यद्वयङ्कृत्वा अज्भिन्नेन तुल्यास्यप्रयत्नमज्भिन्नं सवर्णम्, हल्भिन्नेन तुल्यास्यप्रयत्नं हल्भिन्नं सवर्णम् । पूर्ववाक्येन हलामुत्तरवाक्येनाचामिति वाच्यम्? वाक्यद्वयस्य मर्यादाविरुद्धत्वात् । एवञ्च वर्णविशिष्टो वर्णस्स्वसवर्णः वैशिष्ट्यञ्च—स्वजनकयावत्स्थानप्रयत्नजन्यत्व स्वाजनकस्थानप्रयत्नाजन्यत्व—स्ववृत्तियदाकारान्यतरहल्वर्णोभयवृत्तिद्वित्वभिन्नं द्वित्वं तद्वत्त्वैतत्त्रितयसम्बन्धेन ।

केचित्तु—

परस्परं स्वविशिष्टो वर्णस्स्वसवर्णः वै० स्वजनकस्थानप्रयत्नजन्यत्व स्वाजनकस्थानप्रयत्नाजन्यत्व स्वविशिष्टत्वैतत्त्रितयसम्बन्धेन । अत्र वैशिष्ट्यम् स्ववृत्त्यच्त्ववत्त्व स्ववृत्तिहल्त्ववत्त्वान्यतरसम्बन्धेनेत्यलम् ।

भूवादयो धातव इति ।

---

साहश्यञ्च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्, चन्द्रवन्मुखमित्यत्र तत्पदेन

ननु चन्द्रवन्मुखमित्यत्र चन्द्रप्रतियोगिकसादृश्याश्रयम्मुखमिति शाब्दबोधस्त-था च सादृश्यप्रतियोगितावच्छेदकव्यापकधर्मेणैव सादृश्यं गृह्यत इतिनियमः। सादृश्यस्य प्रतियोगितावच्छेदको यो धर्मस्तद्व्यापको यो धर्मस्तद्धर्मेणैव सादृश्यमिति फलितार्थः। चन्द्रवन्मुखमित्यत्र वत्यर्थसादृश्यस्य प्रतियोगी चन्द्रः प्र-

---

उपमानभूतश्चन्द्रो ध्रियते तथा च चन्द्रभिन्नत्वे सति चन्द्रवृत्त्याह्लादकत्वरूपभूयोध-र्मवत्त्वमपि मुखे वर्त्तते इति भवति सादृश्यम्। सादृश्यं हि यत्किञ्चित्प्रतियोगिकं यत्किञ्चिदनुयोगिकं च भवति। यस्य सादृश्यं स एव सादृश्यप्रतियोगी (उपमान-मिति यावत्) यत्र सादृश्यं नीयते स एव सादृश्यस्यानुयोगी (उपमेय इति यावत्) उपमीयते येन तदुपमानम् उपमीयते यस्स उपमेयः। चन्द्रवन्मुखमित्यत्र चन्द्रप्रतियोगिकसादृश्यानुयोगि मुखमितिबोध उपमेयम् मुखम्, उपमानञ्चन्द्रः। भूवादिसूत्रे उपमानं वा इति उपमेयाश्च भूप्रभृतयः वाप्रतियोगिकसादृश्या(नुयोगिनः) श्रया भूप्रभृतयः। सादृश्यग्राहकसादृश्यप्रतियोगितावच्छेदकेति नियमे चन्द्रवन्मुख-मित्यादिलक्ष्यानुरोध एव मानम्। व्यापकत्वञ्च-स्वाधिकरणवृत्त्यत्यन्ताभावाप्रति-योगित्वम्, स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वम्। सहजतस्तु अधिक-देशवृत्तित्वं व्यापकत्वम्, न्यूनदेशवृत्तित्वं व्याप्यत्वम्। चन्द्रत्वं केवलचन्द्रवृत्ति आह्लादकत्वन्तु चन्द्रेऽपि कामिन्यामपि पुत्रेऽपि सुहृदादावपि वर्त्तते इति चन्द्रत्वापे-क्षया भवति व्यापकत्वमाह्लादकत्वस्य। एवमेव वात्वं केवलं वावृत्ति क्रियावाच-कत्वन्तु वाभ्वाद्यनल्पसङ्ख्याकेषु इति भवति तस्य व्यापकता।

भूश्च वाश्चेति विग्रहे समासो द्वन्द्वोऽभीष्टस्स चेतरेतरयोगः, इतरस्य इतरस्मिन् इतरेण वा योग इतरेतरयोगः। तथा च (इतरस्य-अन्यस्य भिन्नस्य, इतरेण अन्येन भिन्नेन योग इतिभिन्नो भेदाश्रयः) भेदलाभः स च प्रत्यासत्त्या पदभेदे द्वन्द्वः पदार्थ-भेदे पदार्थतावच्छेदकभेदे वा इति सम्भवन्ति पूर्वपक्षाः। यदि च पदभेदे द्वन्द्वस्तदा घटकलशा इति द्वन्द्वापत्तिः नीलोत्पलमित्यादावपि च द्वन्द्वापत्तिः, द्वितीये "अप्ये-कदन्तहेरम्बलम्बोदरगजाननाः" नीलघटयोरभेदः "प्रमाण प्रमेयसंशय प्रयोजनदृष्टा-न्तसिद्धान्तावयवतर्कनिर्णयवादजल्प वितण्डाहेत्वाभासच्छलजातिनिग्रहस्थाना-नान्तत्त्वज्ञानान्निः श्रेयसाधिगमः" इतिगौतमसूत्रे "आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति सूत्रोक्तद्वादशविधप्रमेयान्तर्गत-मनोबुद्धीन्द्रियाणाम् प्रमाणत्वेन प्रमाणप्रमेययोर्भेदाभावेन द्वन्द्वानापत्तिः।

तृतीये (पदार्थतावच्छेदकभेदे द्वन्द्वे स्वीकृते) घटश्च ३ घटा इत्यत्र द्वन्द्वः प्राप्त-स्तञ्च "उत्सर्गसमानदेशापवाद" न्यायेन एकशेषो बाधते इति प्रकृतिः। इदानीं पदार्थतावच्छेदकस्य घटत्वस्य सर्वत्रैकत्वेन द्वन्द्व एव न प्राप्नोति इति तदपवाद एकशेषो नैव स्यादित्यापत्तिः। इति चेन्न? पदार्थभेद एव द्वन्द्वः पदार्थत्वञ्च पदजन्य-

तियोगितावच्छेदकञ्चन्द्रत्वन्तद्व्यापको धर्म आह्लादकत्वन्तस्य पदार्थान्तरेऽपि सत्त्वेन व्यापकत्वम् । तथाच आह्लादकत्वधर्मेण सादृश्यम्। एवञ्च भूवादिसूत्रे वाऽव्ययस्याऽसत्त्ववाचकत्वेनान्याव्ययेष्वपि तस्य सत्त्वेन तस्य व्यापकत्वम् । सादृश्यस्य प्रतियोगी वा इति प्रतियोगितावच्छेदकं वात्त्वम् , तद्व्यापकमसत्त्ववाचित्वन्तेन सादृश्यापत्तौ असत्त्ववाचिनो भ्वादयो धातुसंज्ञास्स्युरित्यर्थः क्रियावाचित्वेन सादृश्याश्रयणङ्कथमिति चेन्न ? अत्र परस्परसाहचर्याश्रयणम् तथाहि, वाऽव्ययसाहचर्यादसत्त्ववचनस्य भूशब्दस्य ग्रहणम् असत्त्ववचनभूसाहचर्यात्क्रियावाचिनो वाशब्दस्य ग्रहणम् , क्रियावाचित्वसादृश्यस्य क्रियावाचकत्वेन ग्रहणमिति परस्परसाहचर्येण क्रियावाचिन इत्यर्थोपपत्तेः । नच भिन्नभिन्नपदान्तरार्थान्वितयोरेकपदोपस्थापिता-

---

प्रतीतिविषयत्वम् इदञ्च पदार्थपदार्थतावच्छेदकसाधारणम्, तथा च नीलघटयोरभेद इत्यत्र नीलत्वघटत्वयोः, एकदन्तत्वहेरम्बत्वादीनाञ्च पदार्थतावच्छेदकानाम् परस्परम्भेदात् पदार्थतावच्छेदकभेदमादाय द्वन्द्वः । घटा इत्यादावेकशेषविषये न दोषः तत्र घटशब्दाज्जसि तदर्थबहुत्वस्य घटपदोपस्थापितेषु अन्वयादेव बहुघटबोधसम्भवे एकशेषस्यैवानिष्टत्वात् । सरूपैकशेषविधिस्तु हरी इत्यादौ चरितार्थः ।

केचित्तु पदार्थतावच्छेदकभेदमात्रे द्वन्द्व इत्यचाक्षते ते तु एकत्रापि पुरुषे दण्डिकुंडलिनौ गच्छत इति प्रयोगापत्तिभिया परास्ताः ।

शाब्दिकम्मन्यास्तु शब्दोऽपि शाब्दबोधे भासत इति नीलघटयोरभेद इत्यादौ नीलपदोपस्थाप्यघटपदोपस्थाप्ययोरित्यर्थः । एवञ्च विशेषणीभूतशब्दस्वरूपादेर्भेदस्य सत्त्वात् पदार्थभेदमादायैव द्वन्द्वोपपत्तिः । अत एव "असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः" इत्यादौ "विरूपाणामपि समानार्थानाम्" इत्येकशेषो न भवति समानप्रवृत्तिनिमित्तकस्यैव समानार्थकत्वात् संज्ञाशब्दे द्रव्यस्यैव प्रवृत्तिनिमित्तत्वात् इत्याहुः ।

"चार्थे द्वन्द्वः" इति सूत्रे चाव्ययस्य समुच्चयान्वाचयेतरेतरयोगसमाहारा अर्थाः समुच्चयः साहित्यमिति केचित् । साहित्यञ्च नैकक्रियान्वयित्वमात्रम् ? धवखदिरौ पश्य छिन्धि भिन्धि देहि पाहीत्यादौ क्रियाभेदेऽपि द्वन्द्वदर्शनात्। एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेण एकधर्मावच्छिन्नेऽन्वयस्साहित्यम् । एवञ्च भू इत्यस्य अन्यत्रा आदौ अन्वयः वा इत्यस्य च अन्यत्रेति साहित्याभावाद् द्वन्द्वः कथमाश्रीयते इति चेदत्रोच्यते—"शत्रुं मित्रं विपत्तिञ्च" इतिन्यायेन "आद्यन्तौ टकितौ" इतिवत् "यथासङ्ख्य" सूत्रारम्भसामर्थ्यात् 'अजावीधनौ देवदत्तयज्ञदत्तौ' इत्यत्रेव साहित्यावच्छिन्नस्य भूवौ इति समुदायस्य साहित्यावच्छिन्ने आदौ इत्यत्रान्वयेन दोषाभावात्। अतएव हिमविन्ध्यौ इत्यादौ साहित्यशून्ययोरपि द्वन्द्वो दृश्यत इति किम्पल्लवितेन।

र्थयोरभेदान्वयोऽव्युत्पन्न इतिनियमः एवञ्च भूप्रभृतयो वासदृशाश्च धातुसंज्ञका इत्यर्थे विकल्पार्थकवाशब्दस्य हिरुगादेशश्च धातुत्वापत्तिरिति वाच्यम् ? भूरिव वा भूवा वाइव क्रियावाचको भूर्भूवा भूवादयश्च भूवादयश्चेत्येकशेषेण एकत्रादिशब्दस्य व्यवस्थावाचित्वेन द्वितीयादिशब्दस्य प्रकारवाचित्वेन भूप्रभृतयो वा सादृशा इत्त्यर्थसम्भवात् । ननु "भुव॒प्रभव" इतिसूत्रे भवनम्भूरिति भावे क्विप्विधानप्रमाणात् भूवादिसूत्रे भवनम्भूस्सामान्यक्रियेत्यर्थः, धातूनामनेकार्थत्वात् । भुवं क्रियाम्वदन्ति ये ते भूवादयः क्रियावाचिन इत्यर्थः । वद् धातोः "उणादयो बहुलमि"तिप्रकरणे "इञ् वपादिभ्य" इतीञ्प्रत्यये रूपसिद्धौ समासैकशेषादिप्रलापो निरर्थक इति चेन्न ? तथा विग्रहसाधनेन क्रियावाचित्वलाभेऽपि स्वादय इत्यर्थाऽलाभात् शिश्ये इत्यत्र प्रत्ययस्य धातुत्वापत्तेः । एवमेवाणयति वट्टयतीत्यादिदेशिकभाषाप्रयोगयोरपि धातुत्वेन शास्त्रविषयतया साधुत्वापत्तेश्च । वस्तुतस्तु—वक्ष्यमाणपरिष्कारेण न क्वापि दोषः, शास्त्राविषयप्रयोगभिन्नत्वे सति प्रधानक्रियासान्निध्यरहितत्वे सति क्रियानिष्ठमुख्यविशेष्यताकबोधानुकूलशक्तिविशिष्टत्वम् क्रियावाचित्वम् । वैशिष्ट्यञ्च स्वपर्याप्त्यधिकरणत्व स्वनिरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वभित्त्युभयसम्बन्धेन । शास्त्राऽविषयप्रयोगभिन्नत्वे सतीतिविशेषणदानेन आणवयति वट्टयतीत्यादेर्न साधुत्वम् । प्रधानक्रियासान्निध्यरहितत्वे सतीतिदानेन शिश्य इत्यादौ न दोषः । सम्बन्धद्वयनिवेशे मानन्तु द्वन्द्वैकशेषाद्यकर्त्तव्यतारूपं लाघवमेवेति । तस्माद् भुवम्वदन्तीतिविग्रहो युक्त एवेति शुक्लाः ।

## अणुदित्सवर्णस्येति ।

अत्र कौमुदीकारमते अण्पदेन वर्णसमाम्नायस्थानामेव ग्रहणम् । मालीभवतीत्यादा"वस्य च्वा"वितीत्त्वसिद्धये प्रत्याहारेषु नह्याच्यवाच्ये निरूढा लक्षणा

---

( अणुदित्सवर्णस्य चाप्रत्ययः—शाब्दो विचारः ) आवधीयमानाऽणुदिच्च सवर्णस्य संज्ञः स्यात् इति वृत्तिः । अत्र सूत्रे अप्रत्ययांशे प्रत्ययपदेन विधीयमानो गृह्यते विधीयमानपदेन च विधेयताप्रयोजकपदप्रतिपाद्यस्य ग्रहणम् । स च श्रावणप्रत्यक्षविषयतावच्छेदकधर्मवान् । तस्य च प्रतियोगित्वसम्बन्धेन नञर्थभेदेऽन्वयः, नञर्थभेदस्य च अभेदसम्बन्धेन अण्पदार्थेऽन्वयः, पङ्कजशब्दवत् विशिष्टशक्तिखण्डकनैयायिकमते तु विधीयमानप्रतियोगिकभेद इत्येवार्थस्तथा च नञर्थभेदस्य स्वरूपसम्बन्धेन अण्पदार्थेऽन्वयः। अयम् भावः वैयाकरणा हि "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्" इति सिद्धान्तात् समासे सर्वत्र विशिष्टां शक्तिमङ्गीकुर्वाणा अधातुर-

स्वसदृशवाच्ये लक्षणा अनादितात्पर्यविषयीभूतार्थनिष्ठा लक्षणा निरूढा लक्षणा । "ल्वादिभ्यः" यू स्त्र्याख्यौ नदी"तिनिर्देशात्। व्यक्तिपक्षे चैतत्कथाप्रबन्धो दैक्षितः नवीनमते "आकृतिग्रहणात्सिद्धमिति" भाष्यवार्त्तिकम्—अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलङ्ग्रहीष्यति तथेवर्णाकृतिरिति" भाष्यप्रामाण्याज्जातिपक्ष एव, अण्ग्रहणञ्च कार्य्यम्भाव्यमानेन सवर्णानां ग्रहणन्न भवतीति परिभाषा च न कार्य्या । कुचुटुतुपु इत्युदितां सवर्णग्राहकता विधेयैव जातिपक्षाश्रयणे "ल्वादिभ्य" इत्यादिनिर्देशा-

---

विधीयमान इत्यादौ धातुप्रतियोगिकभेदवान् विधीयमानप्रतियोगिकभेदवान् इत्येवं रूपेण व्याचक्षते तत्र धातुविधीयमानादिपदस्य नञर्थभेदे प्रतियोगित्वसम्बन्धेनान्वयः, तस्य च अभेदसम्बन्धेनाग्रिमपदार्थे अन्वयः । नैयायिकास्तु समासेऽपि विशिष्टां शक्तिमनङ्गीकुर्वाणाः पृथक्शक्तिमेव कल्पयन्ति नञर्थभेदे च पूर्वपदार्थस्य प्रतियोगित्त्वसम्बन्धेनैवान्वयं स्वीकुर्वन्तोऽपि नञर्थभेदस्य अग्रिमपदार्थे स्वरूपसम्बन्धेनैवान्वयमभिमन्यन्ते न तु वैयाकरणवदभेदसम्बन्धेनेति बोध्यम् । नामार्थयोरभेदातिरिक्तसम्बन्धोऽव्युत्पन्न इत्यत्र निपातातिरिक्तेत्यादिनिवेशेन नञो निपातत्वात् । वस्तुतस्तु नैयायिकनयेऽपि लक्षणया अभेदसम्बन्धेनैवान्वयः कार्य्य इति तत्त्वज्ञाः। एवमेव सम्बन्धेन उदित्पदार्थेऽप्यन्वयः उदित्पदं कु चु टु तु पु इति व्याकरणान्तरीयसङ्केतसम्बन्धेन कवर्गादिपञ्चसु शक्तम् । अण्पदञ्च अकारादिणान्तसमुदायान्तःपातिवर्णवृत्तिजात्यवच्छिन्ने शक्तम् । स्वसवर्णश्च स्वजनकस्थानप्रयत्नजन्यत्त्व स्वाजनकस्थानप्रयत्नाजन्यत्त्वोभयसम्बन्धेन स्वविशिष्टो बोद्धव्यः । सवर्णस्येत्यत्र च बोध्यत्वं षष्ठ्यर्थः । अणुदित्पदार्थस्य च सवर्णपदार्थे स्ववृत्तिधर्मवत्त्वसम्बन्धेनान्वयः,सवर्णपदार्थस्य च । षष्ठ्यर्थतादृशबोध्यत्त्वसम्बन्धेन संज्ञपदार्थेऽन्वयः, तस्य च अभेदसम्बन्धेन कर्तृपदार्थेऽन्वयःतस्य च वृत्तित्त्वसम्बन्धेन क्रियायामन्वयः, तत्रैव च परिच्छिन्नत्त्वसम्बन्धेन वर्त्तमानकालस्यापि अन्वयो बोध्यः । तथा च प्रतियोगित्त्वसम्बन्धावच्छिन्ना विधेयताप्रयोजकपदप्रतिपाद्यश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्त्वावच्छिन्ना नञर्थभेदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्त्वावच्छिन्ना तादृशविशेष्यत्त्वाभिन्ना वा या विशिष्टशक्तिवादिवैयाकरणाभिमताभेदसम्बन्धावच्छिन्ना अथ च तन्नभिमतविशिष्टशक्तिनैयायिकस्वीकृतस्वरूपसम्बन्धावच्छिन्ना नञर्थभेदत्त्वावच्छिन्ना नञर्थभेदनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अकारादिणान्तसमुदायान्तःपातिवर्णवृत्तिजात्यवच्छिन्ना अथ च व्याकरणान्तरीयसङ्केतसङ्केतितकवर्गादिपवर्गान्तबोधकोदित्पदार्थत्त्वावच्छिन्ना च विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्त्वाभिन्ना तादृशविशेष्यतासमानाधिकरणा वा या

प्रमाणम् । नन्वस्य सूत्रस्यारम्भकल्पे कस्सूत्रार्थं इति प्रश्नः । नच अण् सवर्णान् गृह्णातीत्यर्थोऽस्त्विति वाच्यम् ? व्यक्तिपक्षे "अस्य च्वौ"विरयत्राकारस्याण्त्वाऽभावेन सवर्णग्रहणाऽभावप्रसङ्गात । इक्पदेन दीर्घैकारादिग्रहणानुपपत्तेश्च । नच अण्बोधकम्पं सवर्णान् गृह्णातीत्यर्थो युक्तः ? ह्रस्वपदस्य दीर्घबोधकत्वापत्तेः । अत्रास्मद्गुरवः, अणवृत्तिवर्णत्वविशिष्टधर्मवद्वर्णविशिष्टं यत्पदं तत्स्वबोध्याण्सवर्णग्राहकम् । आद्यवैशिष्ट्यञ्च स्वभिन्नत्व स्वव्याप्यत्वोभयसम्बन्धेन । द्वितीयवैशिष्ट्यं स्वाद्यवयवकत्व स्वाघटितवर्णद्वयारब्धसमुदायाघटितत्वमितिसम्बन्धाभ्याम् । अण्वृत्तिवर्णत्वविशिष्टो धर्म अत्वादिस्तदाश्रयाद्यवयवकत्वम् तद्भिन्नवर्णद्वयारब्धसमुदायाघटितत्वञ्च अणादिप्रत्याहारे । अकारादौ च व्यपदेशिवद्भावेन वर्त्तत इति सूत्रसामर्थ्यात आदेशांशे "ई हल्यघो"रिति दीर्घविधानात्सवर्णग्रहणाऽभावे सिद्धे अप्रत्ययग्रहणं योगविभागेन भाव्यमानपरिभाषार्थकमित्यलम् ।

### न वेति विभाषा ।

एतत्सूत्रवृत्तौ निषेधविकल्पयोरिति विवरणमयुक्तम् किन्तु अभावविकल्पयोर्वि-

---

स्ववृत्तिधर्मवत्त्वसम्बन्धावच्छिन्ना अणुदित्पदार्थत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या निरुक्तवैशिष्ट्यद्वयावच्छिन्नसवर्णपदार्थत्वावच्छिन्ना सवर्णपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या बोध्यत्वसम्बन्धावच्छिना सवर्णपदार्थत्वावच्छिन्ना सवर्णपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या संज्ञपदार्थत्वावच्छिन्ना संज्ञपदार्थनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना तादृशविशेष्यतासमानाधिकरणा वा या अभेदसम्बन्धावच्छिन्ना संज्ञत्वावच्छिन्ना संज्ञपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता अथ च परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नवर्त्तमानकालनिष्ठप्रकारतानिरूपिता च या क्रियात्वावच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्यताशाली शाब्दबोधः सूक्ष्मतरः।

( न वेति विभाषा—शाब्दबोधः ) निषेधविकल्पयोर्विभाषा संज्ञा स्यादिति वृत्तिः । निषेधविकल्पयोरित्यत्र उद्देश्यत्वं षष्ठ्यर्थः, स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धावच्छिन्ना निषेधविकल्पान्यतरत्वावच्छिन्ना या निषेधविकल्पान्यतरनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या विभाषात्वावच्छिन्ना विभाषानिष्ठा विशेष्यता

भाषा संज्ञेत्येव । तथाहि, निषेधशब्दार्थोऽप्रवृत्तिलक्षणोऽर्थसमाजग्रस्तः लिङादिघटितवाक्यघटकनञा इष्टसाधनत्वाऽभावबोधोत्तरम्प्रत्येतव्यः । अत एव न भुङ्क्त इत्यभावबोधकन्नभुञ्जीतेति निषेधबोधकम्वाक्यं सार्वजनीनम् । नञर्थो न निषेधस्तस्य लिङादिघटितवाक्यजन्यत्वादिति फलितम् । किञ्च नवाशब्दाभ्यान्नाऽभाववविकल्पबोधस्सम्प्रदायसिद्धः । अभावविकल्पविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रतिपदार्थान्तरनिष्ठप्रकारतानिरूपित विशेष्यतासम्बन्धेन योग्यताकाङ्क्षादिसामग्र्या अपेक्षेति नियमात् । नञर्थाऽभावेन सह समभिव्याहृतप्रथमान्तार्थाऽभेदान्वयस्याऽव्युत्पन्नत्वाच्च । असमस्तनञो विकल्पार्थकवाशब्दस्य च क्रियायामेवान्वयस्सार्वत्रिक इत्यभिधानाच्च । अत एव अभावश्चतुर्विध इत्यभिप्रायेण विकल्प प्रमेय इतितात्पर्येण च न चतुर्विधः वा प्रमेय इतिव्यवहारो न शास्त्रतत्त्वानुरुद्धः । तथाच "नवेति" सूत्रघटकेतिशब्दस्याऽव्ययत्वेन नानार्थकत्वात्प्रकरणादिसाहाय्येन अभावो विकल्पश्चार्थः । नवापदन्तात्पर्य्यग्राहकम् अनुभूयत इत्यादावुपसर्गवदित्याशयेनाभावविकल्पयोर्विभाषा संज्ञेति सूत्रार्थ इत्यलम् ।

हलोऽनन्तरास्संयोगः ।

उद्देश्यतावच्छेदकप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकविधेयकत्वस्य संज्ञासु नियतत्वम् । प्रकृते उद्देश्यतावच्छेदकसाहित्यप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यद् द्वित्वन्तदेव संज्ञाप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकमिति द्वयोरेव संयोगसंज्ञेति । अधिकमेतत्सूत्रभाष्यतोऽवसेयम् ।

---

तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या अभेदसम्बन्धावच्छिन्ना विभाषात्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या संज्ञात्वावच्छिन्ना संज्ञानिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या अभेदसम्बन्धावच्छिन्ना संज्ञात्वावच्छिन्ना संज्ञानिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्त्तृत्वावच्छिन्ना कर्तृपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता अथ च परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नवर्त्तमानकालनिष्ठप्रकारतानिरूपिता च या क्रियात्वावच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

## विरामोऽवसानम् ।

विरमणम्विरामः भावघञन्तः, वर्णनिमित्तककार्यप्रकरणाच्छब्दानुशासनप्रस्तावाद्वर्णग्रहणम् । वर्णानाम्विराम ≍ कोऽर्थोऽभावः उच्चारणाऽभावोऽवसानसंज्ञः । बुद्धिकृतपौर्वापर्य्याश्रयणादभावस्य साफल्यम् उच्चारणाऽभावश्च यत्किञ्चिद्वर्णोच्चारणानन्तरकालिकः । यत्किञ्चिद्वर्णोच्चारणाभावत्त्वमवसानत्वमिति लक्षणम् । नचैवं लक्षणे अश्व इत्यादावकारोच्चारणाभावस्याप्यवसानत्वलक्षणाक्रान्तत्वेनावसानसंज्ञायां "अणोऽप्रगृह्यस्ये"त्यनुनासिकस्स्यादितिवाच्यम् ? यावद्वर्णोच्चारणाभावत्त्वमवसानत्वमितिपरिष्कारात् । नचैवमुच्चारणाऽभावस्य प्रलयकालोच्चरितरेफादावेव सत्त्वन्नान्यत्रेति कथं लक्ष्यसिद्धिरिति वाच्यम् ? विवक्षितार्थबोधकवाक्यघटकवर्णोच्चारणाभावत्त्वमवसानत्वमिति प्रपूरणात् । नच यत्र रामादित्युच्चार्य्य अर्द्धमात्राधिककालमतीत्य आगच्छ आनयेति कथ्यते तत्रेष्टमपि चर्त्वन्न स्यात् इति वाच्यम् ? वर्णोच्चारणविशिष्टाऽभावत्त्वमवसानत्वमिति लक्षणात् । वर्णोच्चारणविशिष्टोऽभावोऽवसानसंज्ञस्स्यादिति सूत्रार्थः । वैशिष्ट्यञ्च स्वविशिष्टक्षणवृत्तित्व स्वप्रतियोगिकत्त्वोभयसम्बन्धेन । संसर्गघटकवैशिष्ट्यञ्च स्वकर्तृकर्तृकोच्चारणानधिकरणत्व स्वाधिकरणकालविशिष्टत्वोभयसम्बन्धेन । अत्र वैशिष्ट्यञ्च स्वोत्तरत्व स्वोत्तरार्द्धमात्राधिककालानुत्तरत्वोभयसम्बन्धेन ।

## तपरस्तत्कालस्येति ।

ननु त ≍ परो यस्मादसौ तपर इति पञ्चम्यर्थबहुव्रीहौ "अतो भिस ऐसि"

---

( तपरस्तत्कालस्य—शाब्दबोधः ) तः परो यस्मात् स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञः स्यादिति वृत्तिः । तकारस्य स्वाव्यवहितपूर्वत्त्वसम्बन्धेन अन्यपदार्थे बहुव्रीह्यर्थेऽन्वयः, आवृत्ततपरशब्दे च तकारस्य स्वाव्यहितोत्तरत्वसम्बन्धेन उत्तरपदार्थप्रधानतत्पुरुषेऽन्वयः, तपरपदार्थस्य समस्तस्य च स्वरूपसम्बन्धेन प्रकरणप्राप्तवर्णपदार्थेऽन्वयः, वर्णपदार्थस्य च स्वनिष्ठकर्मतानिरूपकत्त्वसम्बन्धेन उच्चारणक्रियायामन्वयः, उच्चारणक्रियायाश्च स्वाधिकरणत्वसम्बन्धेन कालेऽन्वयः, कालस्य च समशब्दार्थसादृश्ये स्वनिष्ठप्रतियोगितानिरूपकत्त्वसम्बन्धेनान्वयः, सादृश्यस्य च आधारतासम्बन्धेन खण्डकालेऽन्वयः, तस्य च स्वनिष्ठबोध्यतानिरूपकत्व सम्बन्धेन संज्ञापदार्थेऽन्वयः, संज्ञापदार्थस्य च कर्तृपदार्थेऽभेदसम्बन्धेनान्वयः, कर्तृपदार्थस्य च वृत्तित्वसम्बन्धेन क्रियायामन्वयः, तत्रैव च वर्त्तमानकालस्यापि परिच्छिन्नत्वसम्बन्धेनान्वयः । तथा च तकारनिष्ठस्वाव्यवहितपूर्वत्व स्वाव्यवहितोत्तरत्वैत-

न्यादौ तकारः अकारात्पर इति तपरपदेन केवलाकारस्यैव ग्रहणम्, नतु तकारविशिष्ट ( अत् ) इतिसमुदायस्य । तथाच अकारस्यैवान्यपदार्थत्वेनार्थवत्त्वम्प्रातिपदिकसंज्ञा चाकारस्यैवेति अत इति निर्देशः कथमितिचेन्न ? "अतो भिस ऐसि" त्यादावकारस्सवर्णसमकालस्यैव बोधक इति अर्थे तात्पर्यग्राहकस्तकारोऽनुभूयत इत्यादावुपसर्गवत् । एवञ्च शाब्दबोधे तात्पर्य्यज्ञानस्य मुख्यकारणतया तकारविशिष्ट ( अत् ) इति समुदाय एवान्यपदार्थत्वमाश्रित्यार्थवत्वेन विशिष्टाद्विभक्युत्पत्तौ बाधकाऽभावात् । नच "मत्वर्थे बहुव्रीहिः कर्तृकर्मवचनेनाऽप्रथमाया" इति वार्त्तिकम् । कर्तृकर्मप्रत्ययान्तप्रकृतिकप्रथमान्तानामेवान्यपदार्थतेति "अनेकमन्यपदार्थे" इतिभाष्यम् । तथाच न पञ्चम्यर्थबहुव्रीहिरपि तु "उरण् रपर" इतिवत् मत्वर्थे विधानम् मत्वर्थौ हि षष्ठ्यर्थसप्तम्यर्थौ । एवञ्च तः परः परावयवो यस्येत्येत्र षष्ठ्यर्थबहुव्रीहिः । नच षष्ठ्यर्थबहुव्रीहौ तपरपदेन ( अत् ) इति समुदायस्यैव ग्रहणमिति नहि अत इत्यस्य समकालस्तत्सवर्णो वा क्वापि प्रसिद्ध इति परोच्चारणन्निरर्थकमिति वाच्यम् ? एतत्सूत्राणग्रहणानुवृत्तिकल्पे तपरस्त्वघटकाण्सवर्णसमकालग्राहक इत्यर्थेनाक्षतेरिति वाच्यम् ? एतत्सूत्रे भाष्यकृता तः परो यस्मादिति विग्रहो दर्शितस्तत्प्रमाणात् पञ्चम्यर्थबहुव्रीह्याश्रयणम् कौमुद्यामिति । वस्तुतस्तु तः परः परावयवो यस्येति "उरण्रपर" इतिवत् षष्ठ्यर्थबहुव्रीहिरेव । प्रकृतसूत्रभाष्यन्तु साधारणप्रसिद्धविलासाभिप्रायेणेति नान्यभाष्यविरोध इत्यलम् ।

---

दन्यतरसम्बन्धावच्छिन्नप्रकारतानिरूपिता या बहुव्रीह्यर्थान्यपदार्थ उत्तरपदार्थप्रधानतत्पुरुषैतदन्यतरनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्न स्वरूपसम्बन्धावच्छिन्नवर्णपदार्थनिष्ठविशेष्यता निरूपितस्वनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्नोच्चारणक्रियात्वावच्छिन्नविशेष्यत्व।वच्छिन्नस्वाधिकरणत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितकालविशेष्यत्वावच्छिन्न स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नप्रकारताकसादृश्यविशेष्यत्वावच्छिन्नाधारतासम्बन्धावच्छिन्नप्रकारताकखण्डकालत्वावच्छिन्नविशेष्यताकस्वनिष्ठबोध्यतानिरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितसंज्ञात्वावच्छिन्नविशेष्यताकाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितकर्तृत्वावच्छिन्नविशेष्यतानिरूपितवृत्तित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितपरिच्छिन्नत्वसम्बन्धावच्छिन्नवर्तमानकालत्वावच्छिन्नप्रकारतानिरूपितक्रियात्वावच्छिन्नविशेष्यतावती सत्तेति जटिलो वाक्यार्थः । विशिष्टयोजना तु स्वाव्यवहितपूर्वत्व स्वाव्यवहितोत्तरत्वैतदन्यतरसम्बन्धावच्छिन्ना तकारत्वावच्छिन्नाः

इको गुणवृद्धी ।

इति पाणिनीयसूत्रन्तत्र गुणो गुणः वृद्धिर्वृद्धिरिति गुणवृद्धिपदोपादानम् । एवञ्चाभेदसम्बन्धावच्छिन्नयत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्द-

---

-त्वकारनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या बहुव्रीह्यर्थान्यपदार्थत्वावच्छिन्ना अथ च उत्तरपदार्थप्रधानतत्पुरुषत्वावच्छिन्ना वा विशेष्यता तादृशविशेष्यत्वा-वच्छिन्ना तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वाभिन्ना वा या स्वरूप-सम्बन्धावच्छिन्ना समस्ततपरपदार्थत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या वर्णपदार्थत्वावच्छिन्ना वर्णपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधि-करणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या स्वनिष्ठकर्मता-निरूपकत्वसम्बन्धावच्छिन्ना वर्णत्वावच्छिन्ना वर्णपदार्थनिष्ठा प्रकारता तादृश-प्रकारतानिरूपिता या उच्चारणक्रियात्वावच्छिन्ना उच्चारणक्रियानिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वा-भिन्ना वा या स्वाधिकरणत्वसम्बन्धावच्छिन्ना उच्चारणक्रियात्वावच्छिन्ना उच्चा-रणक्रियानिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कालत्वावच्छिन्ना कालनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना तादृशविशेष्यता-समानाधिकरणा वा या स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना काल-त्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या सादृश्यपदार्थत्वावच्छिन्ना सादृश्यपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वा-वच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या आधारतासम्बन्धावच्छिन्ना सादृश्यपदा-र्थत्वावच्छिन्ना सादृश्यपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या खण्ड-कालत्वावच्छिन्ना खण्डकालनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तादृश-विशेष्यत्वाभिन्ना तादृशविशेष्यतासमानाधिकरणा वा या स्वनिष्ठव्याप्यतानिरूप-कत्वसम्बन्धावच्छिन्ना खण्डकालत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या संज्ञात्वावच्छिन्ना संज्ञापदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधि-करणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या अभेदसम्बन्धा-वच्छिन्ना संज्ञापदार्थत्वावच्छिन्ना संज्ञापदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधि-करणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या वृत्तित्वसम्बन्धा-वच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता अथ च परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नवर्त्तमानकालनिष्ठप्रका-रतानिरूपिता च या अस्त्यर्थक्रियात्वावच्छिन्ना अस्त्यर्थक्रियानिष्ठा विशे-ष्यता तादृशविशेष्यताकशाब्दबोधो लघीयान् ।

बुद्धित्वावच्छिन्नम्प्रति विरूपोपस्थिति≍कारणमिति कार्यकारणभावानुरोधेन गुणो गुणः वृद्धिर्वृद्धिरिति सरूपोपस्थितिसत्त्वात्कथं शाब्दबोध इति प्रश्नः । तद्धर्मवृत्तिपर्याप्त्यभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपितविशेष्यताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताऽवच्छेदकत्वसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेद≍कारणमिति कार्यकारणभावः । प्रकारतायां तद्धर्मवृत्तिवृत्तित्वञ्च—स्वनिरूपिताऽवच्छेकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताऽवच्छेदकत्वसम्बन्धेन । संघटनप्रकारस्त्वित्थम्—एवम् अभेदसम्बन्धावच्छिन्ना प्रकारता घटो घट इत्यत्र तद्धर्मः घटत्वगतैकत्वम् , तद्वृत्तिर्या स्वरूपसम्बन्धेन घटनिष्ठा अभेदसम्बन्धावच्छिन्ना प्रकारता ( घटे या स्वरूपसम्बन्धेनाऽभेदसम्बन्धावच्छिन्ना प्रकारता ) वर्त्तते सा उक्तसम्बन्धेन तद्धर्मे घटत्वगतैकत्वेऽपि वर्त्तते तादृशप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता, घटो घट इत्यत्र प्रकारत्वम् विशेष्यत्वञ्च घटस्यैव घटप्रकारकघटविशेष्यकबोधस्यैवापाद्यमानत्वात, तादृशविशेष्यताऽवच्छेदकता घटत्वे विवक्षितपर्याप्तिसम्बन्धस्य प्रतियोगिता तादृशविशेष्यताऽवच्छेदकतायाम्वर्त्तते तत्र विशेष्यतावच्छेदकतात्वमपि वर्त्तते इति सा प्रतियोगिता विशेष्यतावच्छेदकतात्वावच्छिन्ना जाता । तथा चोक्तविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तेरनुयोगिताऽवच्छेदकं घटत्वगतैकत्वम् विशेष्यताऽवच्छेदकताया≍पर्याप्तिर्घटत्वे विवक्षिता, घटत्वमनुयोगि अनुयोगिताऽवच्छेदकं घटत्वगतैकत्वम् ग्राह्यमिति तन्निष्ठानुयोगितावच्छेदकत्वसम्बन्धेन तद्घटत्वगतैकत्वम् । शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदस्य कारणत्वमस्ति तच्च घटो घट इत्यत्र नास्त्येव विशेष्यताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमपि घटत्वगतैकत्वमेव प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमपि घटत्वगतैकत्वमेवेति न घटो घट इत्यत्राभेदान्वयबोधापत्तिः । घटत्वगतैकत्वयो≍पर्याप्त्यनुयोगितावच्छेदकयो≍परस्परं भेदाऽभावात् एकत्वाश्रयीभूतघटत्वस्य भेदाऽभावात् । घटो नीलघट इत्यत्र तु विशेष्यताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकञ्च नीलत्वघटत्वैतदुभयगतं द्वित्वमिति । एकत्वद्वित्वयोश्च परस्परम्भेदाऽभावात्तद्धर्मभेदस्य सत्त्वादभेदान्वयबोध इति प्रकृते एकं गुणपदं संज्ञिपरमर्थादर्थपरमेकं गुणपदं संज्ञापरम् संज्ञासंज्ञिनोश्च भेदात । गुणपदवाच्य ( अ० ए० ओ० ) त्वं गुणपदशक्यताऽवच्छेदकं गुणत्वं शक्यतावच्छेदकमन्यत् । एवं वृद्धिपद-

वाच्य ( आ० ऐ० औ० ) त्वं शक्यतावच्छेदकम् वृद्धिपदत्वं शक्यतावच्छेदकमन्यत् इति अर्थे विलक्षणत्वात्प्रकारताऽवच्छेदकविशेष्यतावच्छेदकयोरपि वैलक्षण्यमिति विरूपोपस्थितिसत्त्वाद् गुणपदावच्छिन्नविधेयताप्रयोजकं गुणपदम्वृद्धिपदावच्छिन्नविधेयताप्रयोजकम्वृद्धिपदम्वा यत्रास्ति तत्रेक इति षष्ठ्यन्तम्पदमुपतिष्ठत इति सूत्रार्थेनाऽदोषात् । दण्डवान् दण्डसंयोगवान् पुरुष इत्यत्रापि न शाब्दबोधः । दण्डसंयोगवान् पुरुषः प्रकारस्तत्र दण्डत्वम् प्रकारस्तथा च दण्डत्वावच्छिन्ना या दण्डनिष्ठाऽवच्छेदकता ( प्रकारतावच्छेदकता ) तन्निरूपिता या संयोगत्वावच्छिन्ना संयोगनिष्ठाऽवच्छेद्यता तन्निरूपिता या अभेदसम्बन्धावच्छिन्ना पुरुषनिष्ठा प्रकारता तन्निरूपिता या पुरुषनिष्ठा विशेष्यता तन्निरूपिता या संयोगनिष्ठाऽवच्छेदकता (विशेष्यतावच्छेदकता) तन्निरूपिता या दण्डनिष्ठावच्छेदकता तन्निरूपिता या दण्डत्वनिष्ठाऽवच्छेदकता तादृशावच्छेदकतासम्बन्धेन दण्डत्वे शाब्दबोधे जननीये प्रकारतावच्छेदकतावच्छेदकताधर्मभेदः कारणम् । विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकमपि दण्डत्वम् प्रकारतावच्छेदकतावच्छेदकतावच्छेदकमपि दण्डत्वमेव । सरूपोपस्थितिकत्वाच्छाब्दबोधो नेति ।

## तद्वत्ताबुद्धिम्प्रतीति ।

तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वम् । तदभाववत्तानिश्चयम्प्रति तदभावव्याप्यवत्तानिश्चयम्प्रति च तद्वत्ताबुद्धेः प्रतिबन्धकत्वम् । विनिगमनाविरहात् कार्यकारणभावद्वयम् यथा पर्वतो वह्निमानिति ज्ञानस्य संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकस्य पर्वतो वह्न्यभाववानिति ज्ञानं वह्न्यभाववज्जलम् इति ज्ञानञ्च प्रतिबन्धकम् तथा पर्वतो वह्न्यभाववानितिनिश्चयस्य पर्वतो वह्निमानितिनिश्चयः प्रतिबन्धकः वह्निमज्जलमितिनिश्चयः प्रतिबन्धक इति । नचैवमुक्तनियमे पर्वतो वह्निमानितिनिश्चयम्प्रति समवायेन वह्न्यभाववद् गृहम् समवायेन वह्न्यभाववान् घट इत्यादिनिश्चयानामपि प्रतिबन्धकत्वमनिष्टं स्यादिति वाच्यम् ? तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मावच्छिन्नतद्वत्ताबुद्धिम्प्रति तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मावच्छिन्नतत्तद्विषयकाऽभाववती बुद्धिः प्रतिबन्धिका भवतीति नियमाकारवर्णनेनाऽदोषात् ।

ननु चैत्रः पचतीत्यादौ एकत्वविवक्षायामेव उपस्थितस्य विधानमिति सोरेक-

त्वमर्थस्तिङश्चैकत्वमर्थस्तथाच प्रत्ययार्थद्वयस्य कथङ्कारं श्रुतिरिति वाच्यम् ?

यद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः ।

द्योतिका वाचिका वा स्युर्द्वित्वादीनाम्विभक्तयः ॥

इत्युक्त्या "सुप्तिङन्तम्पदमि"तिसूत्रे सुप॒प्रथमोपादानेन च कर्त्तु॒प्रधानत्वाश्रयणेन च एवम्विधस्थले आख्यातैकवचनतिपो द्योतकत्वमेव नैकत्ववाचकत्वङ्किन्तु सोरेकत्ववाचकत्वेनैकत्वमर्थ इतोऽधिकम्व्युत्पत्तिवादे । शाब्दबोधाधिकरणीभूतेति । विषयतापदेन शाब्दबोधाधिकरणीभूतपदार्थे यादृशी विषयता स्यात्सैव ग्राह्या भवति यथा विशेष्यतारूपा—विशेष्यतावच्छेदकतारूपा—विशेष्यतावच्छेदकतावच्छेदकतारूपा । एवम् प्रकारतारूपा प्रकारतावच्छेदकतारूपा प्रकारतावच्छेदकतावच्छेदकतारूपा । नीलो घट इत्यादौ नीलनिष्ठा प्रकारता नीलत्वनिष्ठा प्रकारतावच्छेदकता समवायनिष्ठा प्रकारतावच्छेदकतावच्छेदकतारूपा। घटनिष्ठा विशेष्यताख्या विषयता—घटत्वनिष्ठा विशेष्यतावच्छेदकताख्या, समवायनिष्ठा विशेष्यतावच्छेदकतावच्छेदकताख्येति ।

## सुद्ध्युपास्य इति ।

सुष्ठु ध्यायन्ति ये ते सुधियः ध्यै चिन्तायाम्, "ध्यायतेस्सम्प्रसारणञ्चे" त्यनेन क्विप्सम्प्रसारणे तैरुपास्यस्सुद्ध्युपास्यः । अत्र सुप्त्वाऽभावा "न भूसुधियो"रिति निषेधो न । नचा "नन्तरस्य विधिर्वा प्रतिषेधो वेति"न्यायेन "एनेकाच" इति प्राप्तस्यैव निषेधस्तत्र सुपीत्यनुवृत्तिर्लाघवान्न कार्येति वाच्यम् ? सुधीरिवाचरतीति आचारक्विबन्तात "मूलविभुजादिभ्य॒क" इति आकृतिगणत्वात्कप्रत्यये सुपीत्यनुवृत्त्यभावे यण्निषेध इयङि सुधिय इति रूपमापद्येत । तदनुवृत्तौ तु यणि सुद्ध्य इति रूपमिष्यते तथाचानुवृत्ति॒कर्त्तव्यैवेति । नच समासानन्तरं "सम्प्रसारणाच्चे"तिपूर्वरूपे यण् न स्यादिति वाच्यम् ? सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणङ्कर्त्तव्यमिति वार्त्तिकेन भाष्योक्तेन समानाङ्गत्वाऽभावात् । नच सुधियोस्सुधियाविव्यादौ समानाङ्गत्वेन पूर्वरूपं स्यादेवेति वाच्यम् ? स्वविशिष्टत्वं स्वसमानाङ्गत्वम् । वैशिष्ट्यञ्च—स्वघटकत्व स्वाघटिताङ्गाघटितत्वमित्युभयसम्बन्धेन ।

वस्तुतस्तु—पूर्वरूपविशिष्टे सुधी इति समुदाये सम्प्रसारणत्वमेव नास्ति । सम्प्रसारणसंज्ञा तु प्रकृते केवलेकारे न तु पूर्वरूपादेशे जाते अभोयादित्यत्र सवर्णदीघ इण्त्वाभाववत् आदेशविशिष्टे तत्वमेव न । तथाच न पूर्वरूपप्रशक्तिः । नच सम्प्र-

सारणसंज्ञकाऽसम्प्रसारणसंज्ञकवर्णयोः पूर्वरूपादेशे यदि सम्प्रसारणत्वन्नास्ति तर्हि जीनातीत्यादौ "हल" इति दीर्घः । यून इत्यादौ "न सम्प्रसारण" इति निषेधश्च कथं स्यातामिति वाच्यम् ? "हल" इति "न सम्प्रसारण" इति सूत्रद्वयसामर्थ्यात्पूर्वरूपादेशविशिष्टे सम्प्रसारणत्वाऽभावेऽपि सम्प्रसारणत्वमारोप्य सूत्रयोः प्रवृत्तिसौष्ठवात् सार्थक्यात् । तथा च सुद्धयुपास्य इत्यादौ पूर्वरूपप्राप्तिरेव नास्तीति समानाङ्गग्रहणङ्कर्त्तव्यमिति वार्त्तिकङ्गिमर्थमिति न विघ्न इति शुक्लाः ।

"स्थानेऽन्तरतम उरण् रपर" इति संहितापाठस्तत्र प्रथमान्तपाठस्सप्तम्यन्तपाठो वेति सन्देहः । तत्र प्रथमान्तपाठे स्थानिधर्मवानादेशो भवतीति सूत्रार्थः । तालुस्थानजन्यत्वेन तत्त्वाद्ध्रस्वदीर्घयोर्यणसिद्धिः । स्थानिवैशिष्ट्यञ्चादेशे स्ववृत्तित्व स्वस्थानिकादेशवृत्तित्व स्वस्थानिकादेशत्वेनाभिमतेतरयावदादेशाऽवृत्तित्वैतत्त्रितयसम्बन्धेन ।

सप्तम्यन्तपाठे तु आदेशविशिष्टधर्मवति स्थानिन्यादेशो भवतीत्यर्थः । वैशि० स्ववृत्तित्व स्वघटितदलभिन्नदलीयवृत्तित्व स्वघटितदलभिन्नदलीयस्वस्थानित्वेनाभिमतस्थानीतरस्थान्यवृत्तित्वैतत्त्रितयसम्बन्धेन । मात्राद्वयन्यूनकालिकत्वसमानाधिकरणतालुस्थानजन्यत्वधर्मवति ह्रस्वेकारादावेव यण् स्यान्नतु दीर्घेष्विति सप्तम्यन्तपाठो न शास्त्रकृत्सम्मत इति प्रथमान्तपाठ एव ज्यायानित्यलम् ।

## स्थानेऽन्तरतम इति ।

दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति कर्मकाण्डीयमीमांसावाक्यम् । "स्थानेऽन्तरतमः" स्थानञ्चात्र प्रसङ्गः "इको यणचि" इकस्स्थाने यण् स्यादिति चोदाहरणम् । यो यत्स्थानापन्नस्स तद्धर्मल्लँभते "स्थानिवदादेश" इति "षष्ठीस्थाने योगा" यत्रानेकविधमान्तर्य्यन्तत्र स्थानत आन्तर्य्यम्बलीय" इति च । शरपदस्य स्थूलतृणविशेषे शक्तिः प्रस्तरो मुष्टिविशेषः ।

---

( स्थानेऽन्तरतमः—शाब्दबोधः ) स्थानञ्च प्रसङ्गः, प्रसङ्गे सति सदृशतम आदेशः स्यादिति वृत्तिः । सप्तम्यर्थो निमित्तत्वम्, प्रसङ्गस्य च स्थानिनि नित्यसाकाङ्क्षत्वात् तेन स्थान्याक्षेपः । सप्तम्यर्थोऽपि ज्ञानजन्यज्ञानविषयत्वरूपः । स्थानिपदार्थस्य च प्रसङ्गपदार्थे आश्रयाश्रयिभावसम्बन्धेनान्वयः, प्रसङ्गपदार्थस्य सप्तम्यर्थे स्वज्ञानजन्यत्वसम्बन्धेनान्वयः, सप्तम्यर्थस्य च सदृशतमपदार्थे स्वरूपसम्बन्धेनान्वयः, सदृशतमपदार्थस्य च अभेदसम्बन्धेनादेशपदार्थे अन्वयः, । आदेशस्य कर्तृपदार्थेऽभेदसम्बन्धेनान्वयः, तस्य च वृत्तित्वसम्बन्धेनान्वयः क्रियायाम्, तत्रैव

दर्भाणामित्यत्र निरूपितत्वं षष्ठ्यर्थः तस्य वृत्तित्वेऽन्वयः स्थानपदार्थस्य आश्रयत्वसम्बन्धेन विधेयांशेऽन्वयः, दर्भकरणकम्प्रस्तरणम् इष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकोच्चारणक्रियाकर्तृसमवेतज्ञानीयविषयतावत् । शरकरणकम्प्रस्तरणमिष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकोच्चारणक्रियाकर्तृसमवेतज्ञानीयविषयतावत् इति इष्टसाधनानिष्टसाधनभेदेन ज्ञानद्वयम् । अभिचारात्मकयज्ञविशेषे शरकरणकम्प्रस्तरणमेवेष्टसाधकन्न तु दर्भकरणकम्प्रस्तरणन्तस्यैव विधिविषयत्वात् । तथा चेत्थं शाब्दबोधः, दर्भनिरूपितवृत्तितावतो या विशेष्यतावच्छेदकतावच्छेदकता सा दर्भकरणकम्प्रस्तरणमिष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविषयतावदित्याकारकप्रस्तरणनिष्ठविशेष्यतानिरूपितकरणत्वनिष्ठावच्छेदकतानिरूपिता तादृशावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकनिरुक्तज्ञानीयविशेष्यतावच्छेदकप्रस्तरणत्वावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकं यज् ज्ञानं तच्छरकरणकम्प्रस्तरणमिष्टसाधनत्वप्रकारकप्रमाविषयत्वदित्याकारकं तदीयविशेष्यतावच्छेदकतावच्छेदकताश्रयाश्शरा इति । प्रस्तरणत्वावच्छि-

---

च परिच्छिन्नत्वसम्बन्धेन वर्तमानकालस्याप्यन्वयः । तथा च आश्रयाश्रयिभावसम्बन्धावच्छिन्ना स्थानिपदार्थत्वावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता, या प्रसङ्गपदार्थत्वावच्छिन्ना प्रसङ्गपदार्थनिष्ठाविशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या स्वज्ञानजन्यत्वसम्बन्धावच्छिन्ना प्रसङ्गपदार्थत्वावच्छिन्ना प्रसङ्गपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या सप्तम्यर्थत्वावच्छिन्ना सप्तम्यर्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या सप्तम्यर्थत्वावच्छिन्ना सप्तम्यर्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या सदृशतमपदार्थत्वावच्छिन्ना सदृशतमपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या अभेदसम्बन्धावच्छिन्ना सदृशतमपदार्थत्वावच्छिन्ना सदृशतमपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या आदेशपदार्थत्वावच्छिन्ना आदेशपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या अभेदसम्बन्धावच्छिन्ना आदेशपदार्थत्वावच्छिन्ना आदेशपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या

न्नविशेष्यतावच्छेदकता करणत्वनिष्ठा तदवच्छेदकता शरनिष्ठा—शरकरणकप्रस्तरणमिति इष्टज्ञानाऽकारः। दर्भकरणकप्रस्तरणमित्यनिष्टज्ञानाऽकारः। अत्र प्रस्तरणत्वावच्छिन्नविशेष्यतावच्छेदकता करणत्वनिष्ठा तदवच्छेदकता दर्भनिष्ठा। यथा "इको यणची"त्यादौ अजव्यवहितपूर्वत्वविशिष्टेक्कर्मकोच्चारणं साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतावत्। अजव्यवहितपूर्वत्वविशिष्टयण्कर्मकोच्चारणं साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावत् इति रीत्या ज्ञानद्वयाऽकारः। एवञ्च भ्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपिताच्चारणत्वावच्छिन्नविशेष्यतावच्छेदकता कर्मत्वनिष्ठा तदवच्छेदकता इक्निष्ठा तदाश्रयत्वमिक इतीक् स्थानी लक्ष्यसाधनार्थं सूत्रप्रणयनमित्यभियुक्तोक्तेस्साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपितोच्चारणत्वावच्छिन्नविशेष्यतानिरूपितावच्छेदकता कर्मत्वनिष्ठा तन्निरूपितावच्छेदकता यण्निष्ठा तदाश्रयत्वं यण इति यणेवादेशः। दर्भाणां स्थान इतिवत् "इको यणची"त्यत्र इकस्स्थान इति निर्देशे वृत्तित्वं षष्ठ्यर्थः। तत्र इक्पदार्थस्य षष्ठ्यर्थवृत्तित्वसम्बन्धेन स्थानपदार्थैकदेशावच्छेदकतायामन्वयः। स्थानपदार्थीयान्तावच्छेदकत्वस्य च स्वनिष्ठवृत्तित्वसम्बन्धावच्छिन्नाधारतानिरूपिताधेयतासम्बन्धेन यण्पदार्थेऽन्वयः। तथा चायम्बोधः इक्निरूपितवृत्तितावती या विशेष्यतावच्छेदकतावच्छेदकतेति रीतिः परिष्कृतस्था-

---

वृत्तित्वसम्बन्धावच्छिन्ना कर्तृपदार्थत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता अथ च परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नवर्त्तमानकालनिष्ठप्रकारतानिरूपिता च या सत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताकश्शाब्दबोधः।

स्थानेऽन्तरतमः—अतिशयेन अन्तर इति विग्रहे "अतिशायने तमबिष्ठनौ" इति सूत्रेण अन्तरशब्दात् तमप्प्रत्ययः। अन्तरशब्दश्च "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनावहिरवसरमध्येऽन्तरात्मनि च" इति कोशीयस्सादृश्यार्थकः भाष्यादिव्याख्यानात्। तथाह मूले प्रसङ्गे सति सदृशतमः आदेशः स्यादिति। अत्र सूत्रे तमब्ग्रहणसामर्थ्येन अत्यन्तसदृशस्यैव आदेश इति तात्पर्यम्। अत्यन्तसदृशत्वञ्च स्वस्थानिविशिष्टधर्मवत्त्वम् वै० स्ववृत्तित्वं स्वस्थानिकादेशवृत्तित्वं स्वस्थानिकादेशेतरयावदादेशावृत्तित्वमिति सम्बन्धत्रयेण। एवम् लकारस्थाने स्ववृत्तिदन्तमात्रस्थानजन्यत्वरूपधर्मवत्त्वेन लकार एव आदेशो नतु दन्तौष्ठस्थानजन्यत्वधर्मवान् वकार इति लाकृतिरित्यादा वोध्यम्।

नपदार्थश्चायं सिद्धः । अवच्छेदकतानिरुपितावच्छेदकतानिरुपितोच्चारणत्वावच्छिन्ना या साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नविशेष्यतात्वनिष्ठावच्छेदकतानिरुपितावच्छेद्यतावती स्वरुपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरुपिता या विशेष्यता तदवच्छेदकधर्मावच्छिन्ना या साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नविशेष्यतात्वनिष्ठावच्छेदकतानिरुपितावच्छेद्यतावती या स्वरुपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरुपिता या विशेष्यता तादृशविशेष्यतावच्छेदकतावच्छेदकताख्यः । नच विकल्पविधिस्थले "जराया जरसन्यतरस्यामि"त्यादौ अजादिविभक्त्यव्यवहितपुर्वत्वविशिष्टजरस्कर्मकोच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविषयतावत् अजादिविभक्त्यव्यवहितपुर्वत्वविशिष्टजराकर्मकोच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविषयतावत् इति व्यापारद्वयेन साधुत्वाऽसाधुत्वनिर्णयः । एवञ्च जरेत्यादेरसाधुत्वापत्तिरिति वाच्यम् ? अन्यतरस्याम् विभाषा वा इत्यादिसूत्रोपात्ततत्तद्ग्रहणसामर्थ्यैन विकल्पविधिस्थले स्थान्यादेशयोरुभयोस्साधुत्वबोधनेन क्षत्यभावात् । किञ्च स्थानशब्दार्थ एवम्विधस्थलेऽभाव एव "इको यणची"त्यत्र स्वप्रयोज्यत्वप्रतियोगिकत्वं षष्ठ्यर्थः अभावपदार्थस्य स्वाश्रयफलजनकत्वसम्बन्धेन विधेयांशेऽन्वयः । एवञ्च "इको यणची"त्यादेरिक्प्रयोज्यत्वप्रतियोगिकाऽभाववदिष्टफलजनको यण् भवतीत्यर्थः । विकल्पस्थले तु अभावस्याऽपि पूर्वोक्तप्रकारवत् विधेयत्वेन जरस् तदभावश्च जराप्रयोज्यत्वाभाववत्फलजनको भवतीत्यर्थेन जरसादेशाऽभावस्याऽपि पुण्यजनकत्वेन विभाषादिपदप्रमाणाददोषात् । स्थानशब्दे भावे ल्युडेव नत्वधिकरणे स्थीयतेऽस्मिन्निति अधिकरणे ल्युटम्विधाय"जन्यानां जनकः कालो जगतामाश्रयो मत"इत्युक्त्या सर्वाधारत्वेन काल एव स्थानशब्दार्थस्तथा च इक्कर्मकोच्चारणाधिकरणकालवृत्युच्चारणकर्म यण् भवतीत्यर्थात्ती छद्ध्युपास्य इत्यादौ यण् न स्यात् द्विमात्रेकारोच्चारणकालस्थलेऽर्द्धमात्रिकयकारादीनामुच्चारणाऽसम्भवात । तस्माद्भाव एव ल्युट् । यदि तु "इको यणचा"त्यादिशास्त्रप्रामाण्यात अत्र स्थले एककालावच्छेदेनाऽपि इक्यणोरुच्चारणव्यवहार इत्युच्यते तदा लाघवादधिकरणल्युडन्त एव स्थानशब्द इति शुक्लाः ।

अत्र विलक्षणङ्किञ्चित् । तत्तच्छास्त्रप्रवृत्त्यैव साधुत्वेन पुण्यजनकत्वन्निर्विवादमेवञ्च छद्ध्युपास्य इत्यादाविको यणचीतिशास्त्रप्रवृत्त्या यण्घटितस्य छद्ध्युपा-

स्य इत्यस्य साधुत्वात् पुण्यजनकत्त्वेनैव सुधीभिरुपास्य इत्यादौ समासे कृते "सुपो धातुप्रातिपदिकयो"रित्यनेन विभक्तिलुकि "सुपो धात्वि"तिशास्त्रेण सुधी उपास्य इति यण्रहितस्याऽपि साधुत्वम्बोधितमिति सुधी उपास्य इत्यस्यापि पुण्यजनकत्त्वेन यणादिप्रयोगार्हत्वं स्यादेवेति चेन्न ? साधुत्वञ्च न पुण्यजनकत्वमपि तु शास्त्रप्रवृत्त्यर्हत्वं साधुत्वम् । स्वस्वविधेयघटिते शास्त्रप्रवृत्त्यर्हत्वरूपम् साधुत्वमात्रम्बोध्यते नत्वन्यस्याऽसाधुत्वमपि । सुधी उपास्य इति "सुपो धात्वि"ति बोधितस्य यज्ञादौ न प्रयोगः अपदन्न प्रयुञ्जीतेतिभाष्यात् । अपदमित्यस्य अपरिनिष्ठितन्न प्रयुञ्जीतेतिचार्थः । परिनिष्ठितत्वञ्च अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् इति तत्रत्यव्याख्यानात् । किञ्च शास्त्राणां स्वविधेयघटित पुण्यजनकः स्वविधेयाघटितः स्वीयोद्देश्यतावच्छेदकावच्छिन्नश्च पापजनक इतिव्यापारद्वयम्भवति । न च "सुपोधात्वि"तिवलेन सुधी उपास्य इत्यादीनां यागादौ प्रयोग आपद्येतेति वाच्यम् ? सुपोधात्त्वि"ति शास्त्रेण पुण्यजनकत्त्वे बोधितेऽपि अपदन्न प्रयुञ्जीतेति महाभाष्यमहाशास्त्रेण पापजनकत्वबोधनेन यज्ञादौ तदप्रयोज्यत्वनिर्विवादात् ।

## त्रिसूत्रीखण्डनप्रकारः ।

"युष्मदस्मदो"रिति सूत्रीयानादेशग्रहणेनादेशस्स्थानिवदित्यर्थः । "अदो जग्धिर्ल्यप्ति किती"तिल्यब्ग्रहणेन अल्विधौ न स्थानिवदितिकल्पनयाऽभीष्टसिद्धौ स्था

---

( स्थानिवदादेशोऽनल्विधौ ) आदेशः स्थानिवत् स्यात् नतु स्थान्यलाश्रयविधौ इति वृत्तिः । स्थानिना तुल्यं स्थानिवत् "तेन तुल्यं क्रिया चेद् वतिः" इति पाणिनीयेन सादृश्येऽर्थे वतिप्रत्ययः वत्यर्थे सादृश्ये च स्थानिपदार्थस्य प्रतियोगित्वसम्बन्धेनान्वयः, सादृश्यस्य च आदेशे स्वरूपसम्बन्धेनान्वयः, स्थानिनिष्ठविषयतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नसादृश्यनिष्ठविषयतानिरूपितस्वरूपसम्बन्धावच्छिन्नादेशविषयतानिरूपित सत्तेति भावः । अनल्विधौ इत्यंशस्य च अलांविधिरल्विधिरित्यादिसमासचतुष्टयद्वाराऽल्पदार्थस्य स्ववृत्तिधर्मावच्छिन्नोद्देश्यताकत्वसम्बन्धेन विधिपदार्थेऽन्वयः । यद्यपि सूत्रपाठक्रमानुरोधेन आदेशेनैव प्रत्यासत्तिस्तथापि अग्निहोत्रं जुहोति, यवागूम्पचति इति क्रमानुसरणस्य शास्त्रीयत्वात् सुद्ध्युपास्य इत्यादौ "अनचि च" इति द्वित्त्वे विधेये स्थानिवत्त्वनिषेधसिद्धये स्थान्यवयव एवाल् गृह्यते । तथा च स्थान्यवयवाल्वृत्तिधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवत्वमित्यर्थः । ननु एवमर्थे राम ङे इत्यवस्थायां "ङेर्यः" इति यादेशे "सुपि च" इतिदीर्घे विधेये स्थानी ङे इति तदवयवोऽलेकारस्तद्वृत्तिधर्मस्सु-

निवत्सूत्रं सर्वङ्क्लिमर्थम् । "अचः परस्मिन्नि"त्यत्रानुवृत्त्यर्थ "स्थानिवदादेश" इत्यस्यावश्यकत्वात् । एवम्विधिग्रहणमपि तत्रैवानुवृत्त्यर्थन्तथाहि—उत्तरसूत्रे विधि-ग्रहणेऽनुवर्त्तमाने पुनर्विधिग्रहणात् द्वितीयो नियमः क्रियते "पूर्वस्यैव विधौ स्था-निवन्न तु पूर्वपरोभयविधौ" तेन ईयतुरिति सिद्ध्यति । अन्यथा "द्विर्वचनेऽची"ति यणादेशस्य स्थानिरूपातिदेशाद् द्वित्वे कृते द्वित्वकाले यणोऽपहारात् पुनः प्रवृत्ति वेलायाम्व्याश्रयत्वेन "वार्णादाङ्गम्बलीय" इत्यस्मिन्नप्रवृत्ते वर्णमात्राश्रयत्वेना-न्तरङ्गत्वाद्दीर्घस्स्यात् । नचा "कृतव्यूहपरिभाषया"निर्वाहः ? निमित्तविघाताऽभा-वात्कृतेऽपि यणि स्थानिवत्त्वेन सवर्णदीर्घप्राप्तेः । तथा च सवर्णदीर्घे कृते "अन्तादि वच्चे"त्यनेन अन्तवद्भावेनाभ्यासग्रहणेन ग्रहणात् अभ्यासह्रस्वत्वे "दीर्घ इणः किती"ति दीर्घत्वे कृते दीर्घविधानसामर्थ्यादिणो यणभावे इ अतुरिति रूपं स्यात् । सिद्धान्ते तु पूर्वपरयोर्विधौ स्थानिवत्त्वाभावान्निमित्तविघातेनाकृतव्यूहपरिभाषयेणो यणि सिद्धं रूपमिति शब्दकौस्तुभः । एवञ्च "ज्ञापकसिद्धन्न सर्वत्रेति" कुसृष्टिक-ल्पनावारणायाल्ग्रहणमपि कार्यम् । वस्तुतस्तु—लक्ष्यानुरोधेन क्वचित्स्थानिवद्भावः क्वचिन्निषेधः, ज्ञापकसिद्धन्न सर्वत्रेतिभाष्यवचनस्य क्वाचित्कत्वेन "स्थानिवदादेशो-

---

त्त्वन्तद्धर्मावच्छिन्नोद्देश्यताको विधिः "सुपि च" इति दीर्घविधिस्तत्र कर्त्तव्ये पूर्वोक्तार्थेन स्थानिवत्त्वनिषेधे दोषाभावेन रामायेति न स्यादिति चेन्न ? स्थान्य-वयवाल्मात्रवृत्तिधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवदित्यर्थेन स्थानी डे इति तदवयवोऽलेकारस्तन्मात्रवृत्तिधर्मः एत्त्वन्नतु सुप्त्वम्, सुप्त्वस्य स्वादिसुबन्तैकविं-शतिवृत्तित्वात् एकारमात्रवृत्तित्वाभावात् सुप्त्वधर्मावच्छिन्नोद्देश्यताके दीर्घविधौ कर्त्तव्ये स्थानिवद्भावप्रवृत्तेर्युक्तत्वात् । अल्मात्रवृत्तित्वञ्च अल्वृत्तित्वे सति अलित-रावृत्तित्वम् । ननु यथा "अयं द्वित्ववान्" इति प्रतीतिर्भवति तथा "अयं द्वौ" इति प्रतीतिरपि स्यादित्यतः "पर्याप्तिश्चायमेको घट इमौ द्वौ इतिप्रतीतिसाक्षिकस्स्वरूप-सम्बन्धविशेषः" इत्येवम् प्रकारेण व्यासज्ज्यवृत्तिधर्मावच्छिन्नानुयोगिताक एकदे-शवृत्तिप्रतियोगिताको भेदो नाङ्गीक्रियते, अथ च एकदेशवृत्तिप्रतियोगिताकव्या-सज्ज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदोऽपि नाङ्गीक्रियते । व्यासज्ज्यवृत्तित्वञ्च एक-त्वेतरसंख्यानिष्ठानुयोगितानिरूपकप्रतियोगितावच्छेदकत्वम् । किन्तु व्यासज्ज्य-वृत्तिधर्मावच्छिन्नानुयोगिताकव्यासज्ज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य अथ च अव्यासज्ज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाव्यासज्ज्यवृत्तिधर्मावच्छिन्नप्रतियोगिता-कस्यैव च भेदस्याङ्गीकारः । तथा च "अयं द्वित्ववान्" इत्यत्र अव्यासज्ज्यवृत्ति-धर्म इदन्त्वम् व्यासज्ज्यवृत्तिश्चात्र धर्मो द्वित्वम् एवञ्च इदन्त्वावच्छिन्नप्रतियो-

ऽनल्विधौ, अच ≍ परस्मिन्पूर्वविधौ, न पदान्तद्विर्वचने'' इति त्रिसूत्री न कर्त्तव्येत्यस्मत्कृतकौमुदीकल्पलतिकायान्द्रष्टव्यः। ननु सूत्रे तु पूर्वं स्थानिवत्पदमस्ति ''यच्छब्दयोग ≍ प्राथम्यमित्याद्युद्देश्यलक्षणमि''त्यभियुक्तोक्त्या ''आदेशस्स्थानिवदि''ति सूत्रयितव्यमिति चेन्न ? अग्निहोत्रं जुहोति यवागूम्पचतीत्यादौ पाकमन्तरा हवनासिद्धेश्शाब्दक्रमादार्थक्रमो बलीयानिति मीमांसकवाक्यवदिहाऽपि सूत्रार्थाक्षतेः। ननु छपदेत्यादौ आदेशः पदादेशः स जरावत्स्यात् जरात्वबुद्धया जरसादेशस्स्यादिति चेन्न ? सम्बन्धिशब्दत्वात्तदादेशस्तत्स्थानिवदिति मातरि वर्त्तितव्यन्नचोच्यते स्वस्यां मातरीति ''तुल्यास्य'' सूत्रभाष्यात्।

ननु ''तत्स्थानापन्नस्तद्धर्म लभत'' इतिन्यायेन सिद्धे किमर्थमेतदिति चेन्न ? गुरुस्थानापन्नो यद्यपि शिष्योऽग्रासनादि लभते तथापिचोच्छिष्टचरणोदकदानादियोग्यतारहित एव। गुरोश्शास्त्रपाठने शक्तिर्न तादृशो शिष्यस्य, गुरोस्सेटकपरिमितान्नभोजने शक्तिर्न शिष्यस्येति, स्थानिवत्सूत्रेण तु स्थानिनिष्ठं यावत्कार्यम्भवतीति लोकन्यायवैषम्यम्। ''स्वंरूप'' सूत्रबलेना''ङो यमहन'' इति आत्मनेपदम्वधादेशे न स्यादतोऽपि स्थानिवत्सूत्रम्। ''अर्द्धविकारेऽर्द्धाधिक्यविकारे परिच्छिन्नपरिमाणे संज्ञायाश्चैकदेशविकृतन्यायाऽप्रवृत्त्या निर्जरशब्दस्य जरसादेशो न स्यात् एतदर्थञ्च पितृवत्पण्डित इतिवत्सम्बन्धिशब्दत्वात्स्थानिवदित्युक्त्यैवादेश इत्यर्थलाभे आदेशग्रहणं श्रौतानुमानिकोभयसंग्रहार्थम्पचत्विरत्यत्र ''तिङ्ङतिङ'' इति निघातः ''गोतो णित्'' असंयोगाल्लिट् किदि''तिवत् वत्यर्थलाभे वतिग्रहणं ''गाङ्कुटादि'' सूत्रे गाङ्पदेन इङ्गाङोर्ग्रहणाभावार्थम्। ''गमेरिडि''त्यत्र इण्इङ्इकाम्व्यावृत्त्यर्थञ्च।

---

गिताकद्वित्वावच्छिन्नानुयोगिताकः ''अयं न द्वौ'' इत्याकारको भेदो नाङ्गीक्रियते। ''इमौ न द्वौ'' इत्यत्र च द्वित्वावच्छिन्नानुयोगिताकद्वित्वावच्छिन्नप्रतियोगिताक एव भेदः। एवञ्च ''अल् न भ्याम्'' इत्याकारक भेदस्य अव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकत्वेन चास्वीकारगत्या अलितरत्वेन भ्यामादेरग्रहणात् सुप्त्वस्य अल्मात्रवृत्तित्वात् तद्धर्मावच्छिन्नादूदेश्यताके दीर्घविधौ स्थानिवद्भावनिषेधात् रामायेति न स्यादिति चेन्न ? अल्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वमेवाल्मात्रवृत्तित्वमित्यर्थन सुप्त्वस्य भ्याम्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वेनादोषाभावाभावात् इत्यादि प्रपञ्चनीयम्।

सति कुड्ये चित्रमिति न्यायेन सूत्रार्थविवेकः। स्थानिना तुल्यं स्थानिवत् तेन तुल्यमिति वतिः वत्यर्थसादृश्ये स्थानिपदार्थस्य प्रतियोगितासम्बन्धेनान्वयः, सादृश्यपदार्थस्य स्वरूपसम्बन्धेनादेशपदार्थेऽन्वयः, स्थानिप्रतियोगिकसादृश्यवानादेशो भवति। अनल्विधाविति—अलाश्रिविधिरिति षष्ठ्यर्थस्स्ववृत्तिधर्मावच्छिन्नोद्देश्यताकत्वम्। सूत्रतात्पर्यात् प्रत्यासत्तिन्यायेनाल्पदेन स्थान्यवयव एव। तथा च स्थान्यवयवाल्वृत्तिधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवत् इति। नन्वेवमर्थे रामायेत्यत्र दीर्घो न स्यात्। स्थान्यवयवाल्वृत्तिसुप्त्वधर्मावच्छिन्नोद्देश्यता "सुपि चे"तिसूत्रीयोद्देश्यता स्थानी ङे, तदवयवोऽल् एकारस्तद्वृत्तिधर्मस्सुप्त्वन्तदवच्छिन्नोद्देश्यताकत्वं "सुपि चे"तिदीर्घविधेरितिनिषेधेनदीर्घो न स्यादिति चेन्न? "कष्टाय क्रमण" इति निर्देशप्रमाणेन मात्रपदं निवेश्य स्थान्यवयवाल्मात्रवृत्तिधर्मावच्छिन्नोद्देश्यताके विधौ कर्त्तव्ये न स्थानिवदिति। स्थानी ङे इति तदवयवालेकारस्तन्मात्रवृत्तिधर्मो न सुप्त्वन्तस्य भ्यामादावपि वृत्तित्वेन तन्मात्रवृत्तित्वाभावेन निषेधाप्रवृत्तेर्दीर्घस्य निर्विवादत्वात्। नच सुद्ध्युपास्य इत्यादावच्त्वस्य तन्मात्रवृत्तित्वाऽभावेन निषेधाऽप्रवृत्त्या द्वित्वन्न स्यादिति वाच्यम्? स्थान्यवयवाल्वृत्तिरहमात्र त्तियों धर्मस्तदवच्छिन्नोद्देश्यताकेत्यर्थेन दोषाभावात्।

नच प्रपठ्येत्यादौ स्थानी क्त्वा तदवयवोऽल् तकारस्तन्मात्रवृत्तित्वन्न वलादित्वस्येति निषेधाऽप्रवृत्त्या स्थानिवद्भावेन वलादित्वातिदेशेनेडागमस्स्यादिति वा-

---

( स्थानिवत्सूत्रेऽनल्विधाविति ) इह सूत्रे विधिग्रहणेन समासचतुष्टयलाभः १ अला विधिरल्विधिः, २ अलः परस्य विधिरल्विधिः, ३ अलाम् विधिरल्विधिः, ४ अलि परे विधिः इति प्रकारः। उदाहरणन्तु क्रमशः १ व्यूढोरस्केन, इह स्थानिवद्भावनिषेधात् "अट्कुप्वाङिति" नस्य णत्वन्न भवति अला विधित्वात्। २ द्यौः, इह स्थानिवद्भावाभावेन हलन्तात् परत्वाभावात् "हल्ङ्याब्भ्यो दीर्घात्" इति सुलोपो न भवति अलः परस्य विधित्वात्। ३ प्रपठ्य, इह स्थानिवद्भावाभावेन वलादिप्रत्ययाभावात् "आर्द्धधातुकस्येड् वलादेः" इति सूत्रेण इडागमो न भवति अलाम् विधित्वात्। ४ क इष्टः, इह स्थानिवद्भावस्याभावेन हश्परत्वाभावेन "हशि च" इत्युत्वन्न भवति अलि परे विधित्वादिति भावः।

भाष्यमते तु विधिग्रहणन्न समासचतुष्टयलाभार्थमपि तु स्पष्टार्थमिति। तथाहि "प्रातिपदिकनिर्देशात् सिद्धम्, प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति" एवं हि यदृच्छया सर्वेषामपि समासानां यथाप्रयोजनमभीष्टसिद्ध्यर्थमाश्रयणे बाधकाभावेन समासलाभार्थव्याख्यानस्यानर्हत्वात् इति।

च्यम् ? स्थान्यवयवाल्वृत्तिरल्मात्रवृत्तिर्यो धर्मस्तद्धर्मघटितो यो धर्मस्तद्धर्मावच्छिन्नोद्देश्यताके विधौ स्थानिवद्भावो न, स्थानी क्त्वा तदवयवाल् तकारस्तद्वृत्तिस्तन्मात्रवृत्तिर्धर्मो वल्त्वन्तद्घटितो धर्मो वलादिरवन्तदवच्छिन्नोद्देश्यताकेटि कर्त्तव्ये निषेधेनादोषात् । अल्मात्रवृत्तित्वञ्च अल्वृत्तित्वे सत्यलितरावृत्तित्वम् ।

साक्षादुद्देश्यतेतिनिवेशादग्रहीदित्यत्र न दोषः ।

स्थान्यवयवाल्वृत्तिरल्त्वव्याप्यधर्मघटितधर्मावच्छिन्नोद्देश्यताके विधौ कर्त्तव्ये इत्यर्थे बभूविथ बभूवतुः बभूविव किमः कादेशे अस्तेर्भूरादेशे इत्यादिषु दोषप्रशम इति प्राचीनपथपरिष्कारः ।

आदेशस्स्वस्थानिवत्–स्वविशिष्टविधौ न स्थानिवत् वैशिष्ट्यञ्च स्वावृत्तिर्योऽल्त्वव्याप्यधर्मघटितैकपदप्रतिपाद्यो धर्मस्तद्धर्मावच्छिन्नोद्देश्यताकत्व स्वनिरूपिताल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मावच्छिन्नोद्देश्यताकत्वान्यतरसंसर्गेण । प्रथमसम्बन्धफलम्पूर्वोक्तन्द्वितीयसम्बन्धफलं धिन्वन्तीति ।

## अचःपरस्मिन्निति ।

अत्रादेशग्रहणानुवृत्तिसामर्थ्यादच इति षष्ठ्यन्तमेव नत्व"न्याराद्"ति दिग्योगलक्षणा पञ्चमी । नच "श्रुतानुमितयोः श्रुतसम्बन्धो ज्याया"नितिन्यायेनाच्पदार्थस्य परपदार्थ एवान्वयो नत्वादेशपदार्थेऽनुमित इति सामर्थ्यकल्पनम्पूर्वोक्तञ्च युक्तमिति वाच्यम् ? आदेशग्रहणानुवृत्तिसामर्थ्यादेव "यावता विनाऽनुपपत्तिस्तावत्सर्वं ज्ञाप्यत"इतिभाष्येण श्रुतानुमितयोरितिपरिभाषाबाधेन ज्ञाप्यांशद्वयम् । परिभाषाबाध आदेशपदार्थेऽन्वयश्च इतितात्पर्यात् । नन्वेतावता प्रबन्धेनाच इति षष्ठ्यन्तमेव तथापि परस्मिन्निरयस्य श्रुतानुमितयोरितिन्यायेनाच्पदार्थं एवान्वये परनिमित्तो योऽच् तत्स्थानिकादेशस्स्थानिवदित्यर्थापत्तौ गणयतीत्यादौ "अत उपधाया"इतिवृद्ध्यापत्तिस्सूत्रन्तु वव्रश्चेत्यादौ सार्थकम् । नच कनयतीतिभाष्योदाहरणाद् वृद्ध्यभावाऽभावाऽभाव इति चेन्न ? "नपदान्त"सूत्रस्थयत्नोपादिग्रहणवैयर्थ्यापत्त्या परस्मिन्निरयस्यादेशविशेषणत्वेन श्रुतानुमितयोरितिपरिभाषाबाधनात् लक्ष्यानुरोधात् व्याख्यानाच्च "यस्य च भावेन भावलक्षण"मितिसूत्रेण परस्मिन्निति निमित्तसप्तम्येव नत्वौपश्लेषिकाधिकरणबोधिका । तथाहि, पराव्यवहितपूर्वत्वविशिष्टोऽजादेशस्स्थानिवदित्यर्थापत्तौ वाक्यसंस्कारपक्षे हरिणा कृतमित्यादौ नादेशस्य स्थानिवत्त्वेनाच्त्वादिको यणचीति यणापत्तिः । पदसंस्कारपक्षे जुहुत इत्यादौ या-

स्थानिवत्त्वेन यणापत्तेश्च । निमित्तसप्तम्यान्तु तत्र नादेशः परनिमित्तः किन्तु हरिणा कृतमित्यादौ कृतरूपपराव्यवहितपूर्वत्वविशिष्टस्य"आङो नाऽस्त्रिया"मितिनादेशस्य स्थानिवत्त्वेनाद्परत्वम् । निमित्तसप्तम्यान्तु तत्र नादेशःपरनिमित्तक इति नापत्तिः । ननु निमित्तसप्तम्यन्तत्वे किम्प्रमाणमिति चेन्न ? "पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्चे"तिसूत्रीयलोपग्रहणस्यैव प्रमाणत्वात । नच पादमततीति पादात् तमाचष्टे द्विपाकेत्यादिसिद्धये तस्यावश्यकत्वमिति वाच्यम् ? लक्ष्यानुरोधात व्याख्यानात भाष्यबलाच्च । नच राजानमाख्यत् अरराजत् इत्यादावज्झलादेशेऽपि अग्लोपित्वव्यवहारमनुसृत्य "नाग्लोपिशास्वृदितामि"तिह्रस्वनिषेधो भाष्यकृता कृत इति तद्वत मरुतमाचष्टे मारयतीत्यादावपि अज्झलादेशेऽच्त्वमाश्रित्याचः परस्मिन्निति स्थानिवद्भावेन वृद्धिर्न स्यादिति वाच्यम् ? अत्र सूत्रे अच एवादेशोऽजादेश इत्यर्थस्यैवाऽभ्युपगमात । तथा च कीदृशस्सूत्रार्थ इति प्रश्नः ? स्थानिवत्सूत्रादादेशपदानुवृत्तिः, आदेशत्वञ्च विधेयताविशेषाश्रयत्वम् । तद्विधेयतया आकाङ्क्षितं स्थानित्वमच्पदोत्तरषष्ठ्या अर्थः । स्वसमभिव्याहृतपदार्थे यदर्थं साकाङ्क्षस्तद्वाचकत्वं षष्ठ्या इति नियमात् । अच्पदार्थस्य वृत्तित्वसम्बन्धेन स्थानितायामन्वयः । अच्त्वपदार्थस्य धर्मिपारतन्त्र्येण स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगित्वसम्बन्धेन स्थानितायामेवान्वयः । स्थानितापदार्थस्य च निरूपकत्वसम्बन्धेनादेशपदार्थेऽन्वयः, सप्तम्या ज्ञाप्यत्वमर्थः, । ज्ञाप्यत्वञ्च ज्ञानजन्यज्ञानविषयत्वम् । ज्ञाप्यत्वस्य स्वरूपसम्बन्धेनादेशपदार्थेऽन्वयः, तावतैव परनिमित्तकत्वमादेशे लब्धम् । वत्यर्थस्सादृश्यम् , स्थानिवदित्यस्य स्थानिप्रतियोगिकसादृश्यवानित्यर्थस्सोऽप्यभेदसम्बन्धेनादेशपदार्थान्वयी । एवञ्च अच्निष्ठा या अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूता स्थानिता तन्निरूपको यः परसत्ताविषयज्ञानजन्यज्ञानविषय आदेशस्स स्वस्थानिसदृशो भवतीति शाब्दबोधः । सादृश्यञ्चात्र कार्यवत्त्वकार्याऽभाववत्त्वान्यतरधर्मेण बोध्यम् । मारयतीत्यादौ णिज्निमित्तको यष्टिलोपस्तदीयस्थानिताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकमुच्छब्दगतं द्वित्वम् । अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकमकारनिष्ठमेकत्वमेव । अतो न तत्स्थानितामादाय स्थानिवद्भावेन वृद्धिवारणम् । गौरित्युक्ते सर्वे सन्देहा निवर्तन्ते नाश्वो न गर्दभ इति "वृद्धिरादैजि"तिसूत्रभाष्य-

न्मात्रपदप्रवेशे प्रमाणम्। अपो भक्षयति वायुम्भक्षयतीति कथने अप एव भक्षयति वायुमेव भक्षयतीति लोकन्यायोऽपि प्रमाणम्। नच अय पय् धातुभ्यां क्विपि लुकि अत् पत् इत्यादौ अकारस्य लोपवारणाय "अतो लोप" इति उपदेशग्रहणमेव प्रमाणमिति वाच्यम्? शोधातोःक्तप्रत्यये शातशब्दस्योच्छब्देन समासे शातोत् तमाचष्टे लुङि अशीशतत् ह्रस्वनिष्पन्नाकारस्य लोपवारणायोपदेशग्रहणस्य चारितार्थ्यात्। हन्धातोः क्विपि नलोपे हभ्यामित्यादौ क्विब्निमित्तकाल्लोपवारणायोपदेशग्रहणस्यावश्यकत्वाच्च। नच "दीधीवेवीटामि"तीड्ग्रहणं ज्ञापकमिति वाच्यम्? आतिपमित्यादाविटो गुणाऽभावार्थत्वेन ज्ञापकत्वाऽसम्भवात्। नच अज्झलादेशो न स्थानिवदित्यत्र "यजयाचयतविच्छप्रच्छरक्षो नङि"तिङित्वं ज्ञापकं सतुक्छत्थानिकशादेशस्य स्थानिवत्त्वेन लघूपधगुणाऽप्रवृत्तेरिति वाच्यम्? यजतेः क्विपि सम्प्रसारणे आचारक्विबन्तान्नङि गुणाभावाय ङित्वस्यावश्यकत्वात्। वस्तुतस्तु यून इत्यादौ परयणः पूर्वं सम्प्रसारणेऽपि तस्य स्थानिवद्भावेन सम्प्रसारणपरत्वाऽभावेन "न सम्प्रसारण"इत्यस्याऽप्रवृत्त्या व्यर्थं सत् हलादेशो न स्थानिवदित्यत्र विलक्षणं ज्ञापकम्, यदि इदुदुपधेभ्योऽस्याचारक्विपोऽनभिधानं तदा मरातमाचष्टे भवन्तमाचष्टे सर आचष्टे इत्यादिफलम्।नच वृत्रहणमाचष्टे वृत्रहयतीति भाष्यप्रामाण्यात् णिच्प्रयोज्योपधात्ववतो वृद्धिर्नेति कथमेतानि फलानीति वाच्यम्? युवन्शब्दात् णिचि कनयतीतिभाष्यप्रयोगात् भावकार्यप्रयोज्योपधात्ववतो वृद्धिर्नेति कनादेशकार्यन्तु भावरूपम् मारयतीत्यादिषु तु अभावकार्यप्रयोज्योपधेति व्याख्यानात्। नचैवं स्वीकारे स्रग्विणमाचष्टे स्रजयतीत्यत्र विन्भागस्य लुकि तत्राऽप्यभावकार्यप्रयोज्योपधात्ववत्त्वाद् वृद्धिस्स्यादिति वाच्यम्? तद्भाष्यप्रामाण्यात् टिलोपोत्तरकार्यप्रयोज्योपधात्ववतो वृद्धिर्नेति कल्पनात्। वृत्रहयतीत्यत्र वृद्धिं कृत्वा पश्चात् टिलोपः लक्ष्येलक्षणन्यायेन पुनर्न वृद्धिः। किञ्च ऋच्छतीतिऋट् बहुचि बहुऋट् "ऋत्यक"इतिप्रकृतिभावे णिचि टिलोपेऽवशिष्टस्य बहोर्णिचि वृद्धौ वाहयतीति भवति। अज्झलादेशस्य स्थानिवत्त्वे तु वृद्धिर्न स्यादत एव मात्रपर्यन्तत्यादिनिवेश इति।

भावाऽभावयोरुभयोरप्यतिदेश इति—स्थानी न निवृत्तः आदेशो न जात इतिबुद्धौ यत्प्राप्तन्तद्भवति यन्न प्राप्तन्तन्न भवतीति पठ्यति निगाल्यत इत्यादिषु काऽपि न दोष इति।

यथासंख्यमिति ।

तुल्यार्थकसमशब्दस्सर्वादिगणबहिष्कृतोऽतो नैतन्निर्देशात्स्यट् किन्तु नुडेव । अत्र न कर्मणि षष्ठी किन्तु प्रतियोगित्वनिरूपकत्वरूपे सम्बन्धे षष्ठी । तस्य च अनुदेशपदार्थे अनु कोऽर्थः प्रतियोग्यनुयोगिभ्यां पश्चात् दिश्यते ज्ञायत इति व्युत्पत्तिलभ्ये सम्बन्धेऽन्वयः, संख्याशब्दार्थः क्रमः, प्रथमत्वद्वितीयत्वादिरूपो भवतीति शेषः । संख्यामनतिक्रम्य यथासंख्यम् । अयम्फलितार्थः समुदायविशिष्टोऽनुदेशस्सम्बन्धो यथासंख्यम्भवतीति । सम्बन्धे समुदायवैशिष्ट्यञ्च० स्वघटकपदार्थप्रतियोगिकत्व स्वविशिष्टसमुदायघटकपदार्थानुयोगिकत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वघटकयावत्पदार्थपर्य्याप्तसंख्यासमानसंख्यावद्यावत्पदार्थघटितत्वसम्बन्धेन स्वप्रतियोगिनिष्ठक्रमसजातीयक्रमवदनुयोगिकत्वमिति फलति । किञ्च अनु प्रतियोग्यनुयोगिभ्यां पश्चाद्दिश्यते ज्ञायत इत्यनुदेशस्सम्बन्धः "अकर्त्तरि च कारके संज्ञायामि"तिघञ् अनुयोगिप्रतियोगिज्ञानादनन्तरं हि सम्बन्धो ज्ञायते संख्याकर्मकातिक्रमणाऽभावो यथासंख्यपदार्थः । तस्य नामार्थतया स्वरूपसम्बन्धेन अस्त्यर्थक्रियायामन्वयो न सम्भवति ? नामार्थधात्वर्थयोरभेदेन साक्षादन्वयस्याऽव्युत्पन्नत्वात् । अत एव तण्डुलः पचतीत्यादौ पाकक्रियायां स्वकर्मकत्वसम्बन्धेन तण्डुलपदार्थस्य नान्वयः । तस्माद् यथासंख्यपदस्य संख्याकर्मकातिक्रमणाऽभावविशिष्टे लक्षणा तस्याऽभेदेनास्त्यर्थक्रियायामन्वयः । तथाचाऽभेदेन क्रियाविशेषणत्वात्क्रियाविशेषणानां कर्मत्वमित्यनुशासनेन यथासंख्यपदार्थस्य कर्मत्वमिति तद्बोधकं यथासंख्यपदन्द्वितीयान्तमेव न प्रथमान्तमिति पदार्थज्ञाः । इदानीन्तने पदार्थानभिज्ञत्वेनैव प्रथमान्तमिति केचिद् भ्राम्यन्तीति शुक्लाः । क्रमश्च यत्किञ्चित्समुदायपर्याप्तसंख्याप्रयोजकापेक्षाबुद्धीयसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतारूपः ।

आदाविन्द्रियसन्निकर्षघटनादेकत्वसामान्यधी, रेकत्वोभयगोचरा मतिरतो द्वित्वन्ततो जायते ।

तस्माद् द्वित्वमतिस्ततोऽनुपरतो द्वित्वप्रमानन्तरं द्वे द्रव्ये इति धीरियन्निगदिता द्वित्वाश्रया प्रक्रिया ।

इति लक्षणावल्यामुदयनाचार्याः ।

यथा प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तमीत्येतत्समुदायपर्याप्ता सप्तत्वसंख्या तत्प्रयोजिका अपेक्षाबुद्धयः प्रथमा एका प्रथमाविशिष्टा द्वितीया एकेति

इमे प्रथमाद्वितीये द्वे इतिद्वित्वोत्पादिकापेक्षाबुद्धिः । इमे द्वे एतद्बुद्धिविशिष्टा तृतीया चैकेति । यद्यपि "शत्रुं मित्रम्विपत्तिञ्च जय रञ्जय भञ्जये"तिलोकन्यायबलेन क्रमेणैवान्वयसिद्धौ यत्र समुदायबोधकर्मकमेव पदन्तत्र सूत्रान्तरस्थसमुदायमादायापि यथासंख्यान्वयलाभार्थमिदं सूत्रम् । यथा "एचोऽयवायाव" इति ।

## उपसर्गादृति धातौ–

धाराप्रवाहन्यायेन "आद्गुण"इत्यत आदित्यनुवर्त्तते तच्चोपसर्गविशेषणम्विशेष्यविशेषणभावेन "येन विधि"रितितदन्तविधिः । ऋतीतिधातुविशेषणन्तदन्तविधिम्प्रबाध्य "यस्मिन्निविधि"रिति तदादिविधिः । तथा च अभेदसम्बन्धावच्छिन्ना ऋकारादित्वावच्छिन्ना ऋकारादिनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या धातुत्त्वावच्छिन्ना धातुत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना धातुनिष्ठा विशेष्यता तादृश विशेष्यतासमानाधिकरणा अव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना धातुत्वावच्छिन्ना धातुनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या अवर्णान्तत्वावच्छिन्ना अवर्णान्तनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या अभेदसम्बन्धावच्छिन्ना अवर्णान्तत्वावच्छिन्ना अवर्णान्तनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या उपसर्गत्वावच्छिन्ना उपसर्गनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अव्यवहितोत्तरत्वसम्बन्धावच्छिन्ना उपसर्गत्वावच्छिन्ना उपसर्गनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अधिकृतपूर्वत्वपरत्वावच्छिन्नान्यतरनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना पूर्वत्वपरत्वावच्छिन्नान्यतरनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या वृद्धित्वावच्छिन्ना वृद्धिनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना वृद्धित्वावच्छिन्ना वृद्धिनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या एकत्वावच्छिन्ना एकनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना एकत्वावच्छिन्ना अधिकृतैकनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या आदेशत्वावच्छिन्ना आदेशनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना आदेशत्वावच्छिन्ना आदेशनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा

विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृ-त्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या परिच्छिन्नत्वस-म्बन्धावच्छिन्ना वर्तमानकालत्वावच्छिन्ना वर्तमानकालनिष्ठा प्रकारता तादृ-शप्रकारतानिरूपिता या अस्त्यर्थक्रियात्वावच्छिन्ना अस्त्यर्थसत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

## अकस्सवर्णेदीर्घः-

पाणिनीयसङ्केतसम्बन्धावच्छिन्नाऽभेदसम्बन्धावच्छिन्ना सवर्णत्वावच्छिन्ना सवर्णनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या ( अच् अकारादिचान्तसमुदा-यघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमदच्पदम् ) अच्त्वावच्छिन्ना अज्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृश-विशेष्यत्वाऽभिन्ना वा या अव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना अच्त्वावच्छिन्ना अज्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या (अक् अकारादिकान्तसमुदायघटक-वर्णनिरूपितजात्यवच्छिन्ने शक्तमक् पदम्) अक्त्वावच्छिन्ना अक्निष्ठा विशेष्यता-तादृशविशेष्यतासमानाधिकरणा या अव्यवहितोत्तरत्वसम्बंधावच्छिन्ना अक्त्वावच्छि-न्ना अक्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अधिकृतपूर्वत्वपरत्वावच्छिन्न-पूर्वपरान्यतरनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठस्थानिता-निरूपकत्वसम्बन्धावच्छिन्ना पूर्वपरान्यतरनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या एकत्वावच्छिन्नाधिकृतैकनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिक-रणा या अभेदसम्बन्धावच्छिन्ना एकत्वावच्छिन्ना एकनिष्ठा प्रकारता तादृशप्रका-रतानिरूपिता या विधेयताविशेषाऽश्रयत्वरूपादेशत्वावच्छिन्नाऽऽदेशनिष्ठा विशे-ष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना आदेशत्वाव-च्छिन्ना आदेशनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बंधावच्छिन्नैकत्व-त्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता च या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वा-वच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता तथा परिच्छिन्न-त्वसम्बन्धावच्छिन्ना वर्तमानकालत्वावच्छिन्ना वर्तमानकालनिष्ठा या प्रका-रता तादृशप्रकारतानिरूपिता या अस्त्यर्थसत्तात्वावच्छिन्ना अस्त्यर्थसत्तानिष्ठा वि-शेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

खरवसानयोर्विसर्जनीयः ।

"सुप्तिङन्तमि"तिसूत्रबलेन पाणिनीयसङ्केतसम्बन्धेन पदशब्दः पदसंज्ञकपरः, खरवसानयोरित्यौपश्लेषिकाधिकरणबोधिका सप्तमी, अव्यवहितपूर्वत्वन्तदर्थः । "तस्मिन्निति निर्दिष्टे" इतिपरिभाषाबलात् अर्थानुरोधाच्छाब्दबोधे एव विशेषसम्बन्धप्रदर्शनम् । तथा च अव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना खत्वावच्छिन्ना खर्निष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या पाणिनीयसङ्केतसंबन्धावच्छिन्ना पदत्वावच्छिन्ना पदनिष्ठा विशेष्यताता दृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वाऽभिन्ना तादृशविशेष्यत्वावच्छिन्ना वा या समवायसम्बन्धावच्छिन्ना पदत्वावच्छिन्ना पदनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अन्तत्वावच्छिन्ना अन्तावयवत्वावच्छिन्ना अन्तनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना अन्तत्वावच्छिन्ना अन्तनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या रेफत्वावच्छिन्ना रेफनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धावच्छिना स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिना वा रेफत्वावच्छिन्ना रेफनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या विसर्जनीयत्वावच्छिन्ना विसर्जनीयनिष्ठा विशेष्यता प्राचीनशाब्दिकसङ्केतितावच्छेदकावच्छिन्ना तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना विसर्जनीयत्वावच्छिन्ना विसर्जनीयनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता तथा परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्तमानकालत्वावच्छिन्ना वर्तमानकालनिष्ठप्रकारतानिरूपिता च या अस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च—

स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना पाणिनीयसङ्केतसम्बन्धावच्छिन्ना सवर्णत्वावच्छिन्ना सवर्णनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना नञर्थभेदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या अभेदसम्बन्धावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना वा अच्त्वावच्छिन्ना अज्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना अच्त्वावच्छिन्ना अच्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या पाणिनीयसङ्के-

तत्सम्बन्धेन पदत्वावच्छिन्ना पदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या समवायसम्बन्धावच्छिन्ना पदत्वावच्छिन्ना पदनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अन्तावयवत्वावच्छिन्ना अन्तावयवनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना अन्तावयवत्वावच्छिन्ना अन्तावयवनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या इक्त्वावच्छिन्ना इक्निष्ठा विशेष्यता सा च समवायसम्बन्धावच्छिन्ना बहुत्वत्वावच्छिन्नबहुत्वनिष्ठप्रकारतानिरूपिता स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बंधावच्छिन्ना अभेदसम्बन्धावच्छिन्नप्रकृतित्वावच्छिन्नप्रकृतिनिष्ठप्रकारतानिरूपिता वा या इक्त्वावच्छिन्ना इक्निष्ठा विशेष्यता तादृशविशेष्यतासामानाधिकरणा या अभेदसम्बन्धावच्छिन्ना इक्त्वावच्छिन्ना इक्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नबहुत्वावच्छिन्नप्रकारतानिरूपिता कर्त्तृत्वावच्छिन्ना कर्त्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्त्तृत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता तथा परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या अस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताकशाब्दबोधः। असवर्णेऽचि पदान्तस्येको ह्रस्वस्स्यादिति फलितार्थो द्वितीयार्थस्तत्रापि यथापदार्थं सम्बन्धयोजना।

## मय उञो वो वा—

अच् पदमकारादिचान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमत्। मयूपदम्मकारादियान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमत्। औपश्लेषिकाधिकरणे सप्तमीत्वात् "तस्मिन्निति निर्दिष्टे" त्यव्यवहितपूर्वत्वोपस्थितिः। तथा च अव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना अच्त्वावच्छिन्ना अच्निष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या मय्त्वावच्छिन्ना मयूनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या अव्यवहितोत्तरत्वसम्बन्धावच्छिन्ना मय्त्वावच्छिन्ना मयूनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या उञ्त्वावच्छिन्ना उञ्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धावच्छिन्ना वा या उञ्त्वावच्छिन्ना उञ्निष्ठा प्रकारता तादृशप्रका-

रतानिरूपिता या वापदवाच्यवैकल्पिकत्वावच्छिन्नप्रकारतानिरूपिता वत्वावच्छिन्ना वनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना वत्वावच्छिन्ना वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता तथा परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठप्रकारतानिरूपिता या अस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

न पदान्ताट्टोरनाम्—

"सुप्तिङन्तम्पदमि"ति पाणिनीयसङ्केतसम्बन्धावच्छिन्ना पदत्वावच्छिन्ना पदनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्ना अन्तत्वावच्छिन्ना अन्तावयवत्वावच्छिन्ना अन्तावयवनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अभेदसम्बन्धावच्छिन्ना अन्तनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अणुदित्सूत्रसहकारेण पञ्चवर्णबोधनशक्तटवर्गत्वावच्छिन्ना टवर्गनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अव्यवहितोत्तरत्वसम्बन्धावच्छिन्ना टवर्गत्वावच्छिन्ना टवर्गनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या प्रतियोगितासम्बन्धावच्छिन्ननाम्त्वावच्छिन्नप्रकारतानिरूपितनञर्थभेदत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितसमस्तष्टुत्वावच्छिन्ना ष्टुनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धावच्छिन्ना वा ष्टुत्वावच्छिन्ना ष्टुनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या ष्टुत्वावच्छिन्ना ष्टुनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या प्रतियोगित्वसम्बन्धावच्छिन्ना ष्टुत्वावच्छिन्ना ष्टुनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या नञर्थाऽभावत्वावच्छिन्ना नञर्थाऽभावनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वरूपसम्बन्धावच्छिन्ना अभेदसम्बन्धावच्छिन्ना वा नञर्थभेदत्वावच्छिन्ना नञर्थभेदनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यता-

समानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता तथा परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नवर्त्तमानकालनिष्ठप्रकारतानिरूपिता च या अस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः। ष्टुवृत्तिसत्ताप्रतियोगिकाऽभाव इति मतान्तरे शाब्दबोध इति।

## खरि च।

अव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना खर्त्वावच्छिन्ना खर्निष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या झलपदवाच्यझल्त्वावच्छिन्ना झलिनष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना स्वनिष्ठादेशितानिरूपकत्वसम्बन्धावच्छिन्ना स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धावच्छिन्ना स्वनिष्ठनिवर्त्यतानिरूपितनिवर्त्तकतात्वसम्बन्धावच्छिन्ना वा या झल्त्वावच्छिन्ना झल्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या चर्त्वावच्छिन्ना चर्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना चर्त्वावच्छिन्ना चर्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नबहुत्वत्वावच्छिन्नबहुत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता च या अस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः।

## ङमो ह्रस्वादचि ङमुण्नित्यम्।

परमदण्डिनावित्यादौ प्रत्ययलक्षणन्यायेन पदत्वमादाय औ इत्यस्य ङमुट् न भवति उत्तरपदत्व इति प्रत्ययलक्षणप्रतिषेधात्। इति प्राचाम्मतम्। "उनि च पदे" इत्यत ऽपदे इत्यनुवर्त्याजादेऽपदस्य ङमुडित्यर्थस्तेन परमदण्डिनावित्यादौ औ इत्यस्याजादिपदत्वाऽभावान्न ङमुट्। प्राचीनमतन्तु न युक्तम्, उत्तरपदत्व इत्यस्याऽप्राप्तेस्तथाहि–उत्तरेति लुप्तषष्ठीकम्पृथक् पदम्। पदत्व इत्यस्य पदत्वप्रयुक्तकार्य इत्यर्थः। एवञ्च उत्तरपदस्य पदत्वे पदत्वप्रयुक्ते कार्ये कर्त्तव्ये प्रत्ययलक्षण-

न्नेति फलति । उत्तरपदस्य दण्डिन्नित्यस्य पदत्वप्रयुक्तकार्याऽभावात् । नलोपे त्वनेन निषेधात्प्रत्ययलक्षणन्न भवति । पदत्वप्रयुक्तनलोपकार्यस्य उत्तरपदे दण्डिन्नित्यत्र कर्त्तव्यत्वात् इति नवीनानाम्मतम् । कार्यित्वनिवेशफलन्तु माषकुम्भवापेनेति । अत्र "पदव्यवायेऽपी"तिणत्वनिषेधसिद्धिः उत्तरपदस्य कार्यित्वाऽभावेनोत्तरपदेत्यस्याऽप्रवृत्त्या प्रत्ययलक्षणन्यायेन पदत्वाण्णत्वनिषेधः। नच पूर्वो दण्डी प्रियो यस्येति विग्रहे दण्डिन्नित्यस्योत्तरपदत्वेन निषेधात्पदत्वाऽभावेन नलोपो न स्यादिति वाच्यम् ? मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणाद् दण्डिन्नित्यस्य मध्यमपदत्वेन वार्त्तिकाऽप्रवृत्त्या रूपसिद्धिः । मध्यमत्वञ्च वृत्तिविशिष्टत्वम् , वैशिष्ट्यञ्च० स्वघटकार्थवदव्यवहितपूर्वत्व–स्वघटकार्थवदव्यवहितोत्तरत्वोभयसम्बन्धेन । नच माषकुम्भवापेनेत्यादौ कुम्भेत्यस्य मध्यमपदत्वेन निषेधाऽप्रवृत्त्या कार्यित्वनिवेशो विफल इति वाच्यम् ? परमलोम्निचरः परमलोम्निशय इत्यादौ लोम्नो मध्यमत्वापत्त्या निषेधाऽभावेन नलोपापत्तिरतः यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वम्मध्यमत्वम्। वै० स्वघटकार्थवदव्यवहितपूर्वत्व स्वघटकार्थवदव्यवहितोत्तरत्वैतदुभयसम्बन्धेन । तथा च माषकुम्भवापनेत्यत्र कुम्भेत्यस्य मध्यमत्वाऽभावेन वार्त्तिकाऽप्रवृत्तये कार्यित्वनिवेशस्यावश्यकत्वात् । किञ्च वृत्तिविशिष्टत्वमुत्तरपदत्वमिति परिष्कारः । वै० स्वघटकत्व स्वघटकाव्यवहितपूर्वत्वाऽभाववत्वोभयसम्बन्धेनेति व्याख्यानाच्च । एतेन कार्यित्वनिवेशो निष्फलः । ननु परमलोम्निचर इत्यादौ वृत्तिघटकेकाराव्यवहितपूर्वत्वस्यैव लोमशब्दे सत्त्वेनोत्तरपदत्वाऽभावाद्वार्त्तिकाऽप्रवृत्त्या पदत्वेन नलोपाऽपत्तिरिति वाच्यम् ? प्रत्ययेतरस्य स्वघटकस्य विवक्षणेनादोषात् । नच अस्याऽपत्यमिः पूर्वो दण्डी इ ⌣ प्रियो यस्य स पूर्वदण्डीप्रिय इत्यत्र इकारस्य प्रत्ययत्वेन तदितरोदासीनाव्यवहितपूर्वत्वाऽभावस्य दण्डिन्शब्दे सत्त्वेनोत्तरपदत्वापत्त्या नलोपानापत्तिः । नच सुबितरेतिनिवेशेन न दोष इति वाच्यम् ? पञ्चगवधन इत्यत्र गो इत्यस्य पदत्वापत्तेः । तन्न ? वृत्तिविशिष्टत्वमुत्तरपदत्वम्—वशि० स्वघटकत्व स्वघटकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयप्रत्ययेतराव्यवहितपूर्वत्वाऽभाववत्वोभयसम्बन्धेन । राजीयतीत्यत्र पदत्वेन "न ⌣ क्य" इति भाष्योक्तनियमसंसिद्धये सुबन्तत्वानवच्छिन्नेतिनिवेशेन । एवञ्चानेन विशेषणेन पूर्वदण्डिबहुपाचक इत्यत्र बहुचोऽपि सुबन्तत्वावच्छिन्नोद्देश्यत्वेन न दोष इति ।

अथोत्तरपदत्व इतिवार्त्तिकार्थः ।

ननूत्तरपदस्य पदत्व इत्यर्थे असमस्तपदे आर्द्रचर्मेत्यादौ प्रत्ययलक्षणाऽभावेन पदत्वाऽभावान्नलोपो न स्यादिति चेन्न ? उत्तरपदशब्दस्य समासचरमावयवे रूढि-स्वीकारात् । अत्र भाष्यमेव गमकम् । नन्वेवमत्रेरपत्यानि अत्रयः मघोरपत्यानि मघवः "यञञोश्चे"ति लुकि प्रातिपदिकत्वे प्रत्ययलक्षणेन पदत्वात् "एङ पदा-न्तादती"तिपूर्वरूपापत्तिः समासचरमावयवत्वाऽभावेनोत्तरपदेति निषेधाऽप्रवृत्तेरिति वाच्यम् ? उत्तरपदशब्दस्य वृत्तिचरमावयवे शक्तिवर्णनेनाऽविरोधात् । मध्यमपद-त्वानाक्रान्तवृत्तिचरमावयवग्रहणात्पूर्वदण्डिप्रिय इत्यादौ न दोषः ।

केचित्तु अटतीत्यटः परमश्चासावटः परमाटः स इवाचरतीत्याचारक्विबन्तात्सं-ज्ञायां क्विच्यतो लोपे"ति तु अते"तोऽभावे परमाट्तिरित्यत्र प्रत्ययलक्षणेनाट प-दत्वा"न्नपदान्ता"दितिष्टुत्वनिषेध कार्यित्वनिवेशाऽभावे प्रत्ययलक्षणनिषेधाऽ-पत्त्या ष्टुत्वापत्तिरिति कार्यित्वनिवेश आवश्यक इति तन्न ? ष्टुत्वमेवेष्यते तन्न स्यादिति कार्यित्वनिवेशो न कार्य इत्येव वक्तुं शक्यत्वात् ।

## ङमो ह्रस्वादचि ङमुण्नित्यम् ।

मात्राद्वयन्यूनकालिकत्वं ह्रस्वत्वम् । मात्रिकत्वं ह्रस्वत्वम् वा । पाणिनीय-सङ्केतसम्बन्धेन "ऊ३काल" इतिशास्त्रबलेन ह्रस्वपदं ह्रस्वसंज्ञकपरम् । "अन्यारादि-तरर्ते" इतिदिग्योगे पञ्चम्या विधानाद्व्यवहितोत्तरत्वं पञ्चम्यर्थः । अव्यवहितोत्त-रत्वसम्बन्धावच्छिन्ना मात्राद्वयन्यूनकालिकत्वरूपह्रस्वत्वावच्छिन्ना ह्रस्वनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या ङम्त्वावच्छिन्ना ङम्निष्ठा विशेष्यता तादृश-विशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या अभेदसम्बन्धावच्छिन्नत्वविशिष्टसमवायसम्बन्धावच्छिन्ना ङम्त्वावच्छिन्ना ङम्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अन्तत्वावच्छिन्ना अन्तावयवत्वा-वच्छिन्नाऽन्तावयवनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या ङम् अन्तोऽन्तावयवो यस्येति बहुव्रीह्यर्थाऽन्यपदार्थत्वावच्छिन्न सामवायसम्बन्धावच्छि-न्नाऽन्तत्वावच्छिन्नाऽन्तावयवनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता याऽ-न्यपदार्थबहुव्रीह्यर्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्ब-न्धावच्छिन्नाऽन्यपदार्थत्वावच्छिन्नाऽन्यपदार्थनिष्ठा प्रकारता तादृशप्रकारतानि-रूपिता या पाणिनीयसङ्केतसम्बन्धेन पदत्वावच्छिन्ना पदनिष्ठा विशेष्यता तादृश-विशेष्यतासमानाधिकरणा याऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्ना पदत्वावच्छिन्ना

पदनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽच्त्वावच्छिन्नाऽच्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धावच्छिन्ना अच्त्वावच्छिन्ना अज्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या "आद्यन्तौ टकितौ" विति शास्त्रबलेन समवायसम्बन्धावच्छिन्नावयवतानिरूपकत्वसम्बन्धावच्छिन्ना निरूपकत्वाऽभिन्नङ्मुडागमत्वावच्छिन्ना ङमुडागमनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना ङमुडागमत्वावच्छिन्ना ङमुडागमनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्ना एकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता अथ च परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्तमानकालत्वावच्छिन्नवर्तमानकालनिष्ठप्रकारतानिरूपिता याऽस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

## अतो रोरप्लुतादप्लुते ।

स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्लुतत्वावच्छिन्ना प्लुतनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना नञर्थभेदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वरूपसम्बन्धावच्छिन्ना प्लुतत्वावच्छिन्ना प्लुतनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽत्त्वावच्छिन्ना मात्रिकत्वावच्छिन्ना मात्राद्वयन्यूनकालिकत्वावच्छिन्नाऽन्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽव्यवहितपूर्वत्वसम्बन्धावच्छिन्नाऽत्त्वावच्छिन्नाऽन्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या स्वावच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना स्ववृत्तिप्लुतत्वावच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्लुतत्वावच्छिन्ना प्लुतनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वरूपसम्बन्धावच्छिन्ना प्लुतत्वावच्छिन्ना प्लुतनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना नञर्थभेदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा याऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्ना भेदत्वावच्छिन्ना भेदनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽत्त्वावच्छिन्नाऽन्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नात्त्वावच्छिन्ना अन्निष्ठा प्रकारता तादृशप्रकारतानिरू-

पिता या स्त्वावच्छिन्ना स्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना स्त्वावच्छिन्ना स्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या उत्त्वावच्छिन्ना उनिष्ठा विशेष्यता तादृशविशेष्यता-समानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना उत्त्वावच्छिन्ना उनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वत्त्वावच्छिन्नैकत्वनिष्ठप्र-कारतानिरूपिता च या कर्त्तृत्वावच्छिन्ना कर्त्तृनिष्ठा विशेष्यता तादृशविशेष्यता-समानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्त्तृत्वावच्छिन्ना कर्त्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या परिच्छिन्नत्वसम्बंधावच्छिन्ना वर्त्तमानकालत्वावच्छिन्न-वर्त्तमानकालनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता अस्त्यर्थसत्तात्वावच्छिन्ना-सत्तानिष्ठा या विशेष्यता तादृशविशेष्यताशालिशाब्दबोधो लक्ष्यविषयकसाधुत्वस-म्पादक इति ।

वैयाकरणमते विशिष्टशक्तिवादस्समासस्थले नञो भेदवति लक्षणा चेति मतद्वये अभेदसम्बन्धोऽन्वयप्रयोजकः । नैयायिकमते तु स्वरूपसम्बन्धोऽन्वयप्रयोजक इति दिक् ।

अन्तादिवच्च—

अत्रैक॒पूर्वपरयोरिति "यथासंख्यमिति" चानुवर्त्तते । अतिदेशधर्मिता-वच्छेदकावच्छिन्नवाचकपदसमभिव्याहारस्यावश्यकतया प्रकरणस्थमादेशपदमुप-

---

नत्वाऽताद्रूप्येति—निरुक्ततात्पर्य्यानुवादकमेव वचनमेतदन्यथास्वतन्त्रत्वे "वर्णा-श्रये विधावन्तादिवद्भावप्रतिषेधः" इति भाष्यवचनस्य तेन प्रत्याख्यानाभावप्रसङ्गा-त् । वचनस्य वचनान्तरेण प्रत्याख्यानरीतेर्भाष्यविरुद्धत्वादिति भावः ।

वस्तुतस्तु—नैतत्सूत्रमारम्भणीयं सर्वत्रैतल्लक्ष्येषु "स्थानिवत्" सूत्रेणैव निर्वाह-सम्भवात् । नच अल्विध्यर्थमेवैतदिति वाच्यम् ? समुक्तभाष्यादिभिरस्याप्यनल्विधा-वेवेष्टत्वात् । नचैवं सूत्राभावे क्षीरपेण इत्यत्र पे इति समुदायस्य अल्मात्रवृत्तिधर्म-घटितधर्मत्वेन स्थानिवत्त्वाप्राप्त्या पं इत्यत्र एकाजुत्तरपदत्वानतिदेशात् णत्वाभावा-पत्तिरिति वाच्यम् ? तत्र एकाच्त्वस्य स्वतः सिद्धत्वेन तदतिदेशाभावेऽपि उत्तर-पदत्वमात्रस्यैव स्थानिवत्त्वेनातिदेशेन णत्वसिद्धेः । एवमेव अमी इत्यादावपि मीत्वात् पूर्वम् अद इ इत्यस्य स्थाने अदे इत्यादेशः, ई इत्यस्य स्थाने च ए इत्यादे-शः, अदई इत्यस्यस्थाने च अदे इत्यादेश इत्येवं ईकारवृत्तिबहुवचनत्वस्य एकारे ला-भेन "एत ईत्" इत्यस्य प्रवृत्तेर्निर्बाधत्वात् इति । एवञ्च नादरणीयमेतत् सूत्रम् ।

तिष्ठते इत्याशयेनान्तादिशब्दावुपस्थितैकदेशस्थानिनौ पूर्वपरशब्दौ च पूर्वपरघटितसमुदायस्यान्तादिभ्यामवर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्वछवन्तत्वादयस्ते कृतैकादेशस्याऽपीति फलितम् । न च "तद्वच्चेति" तिन्यासस्तत्पदेनाद्यन्तयोः परामर्शादिति वाच्यम् ? अन्तादिवर्णमात्रवृत्तिअत्वह्रस्वत्वादीनामतिदेशापत्तौ खट्वाभिरित्यादावदन्तत्वातिदेशेन भिस ऐसापत्तेर्दुर्वारत्वात् । समुदायसाकांक्षान्तादिशब्दोच्चारणे । तु समुदायपर्याप्तधर्माणामेवातिदेशो न तु वर्णमात्रवृत्तीनामत्वादन्तत्वादीनामिति अत एव "षत्वतुकोरसिद्ध" इति तुक्येकादेशस्यासिद्धत्वविधानं चरितार्थम् । वस्तुतस्तु दैवादिकादोङ्गतावित्यस्मात् क्त्वा ल्यपि अधीत्येत्यत्र तुग्वारणार्थन्तुग्ग्रहणस्यावश्यकत्वात् । नवाऽताद्रूप्यानतिदेशादिति भाष्यवार्त्तिकस्य वर्णमात्रवृत्तिधर्मानतिदेशादित्येवार्थः ।

## एतत्तदोस्सुलोप इति

---

एतत्तदोः सुलोप इति—एतत्तदोरिति षष्ठीप्रकृत्यर्थस्य सुपदार्थेन सम्बन्धो वक्तव्यः । नानन्तर्यं सः ? आनन्तर्यसामीप्यादिषष्ठ्यर्थस्य "अस्तेर्भूः" इत्यादिदृष्टान्तपुरस्सरम्भाष्यप्रामाण्येन "हलन्त्यम्" इति सूत्रे एव मनोरमाशब्दरत्नयोः खण्डनप्रकारस्य दर्शितत्वात् । न चानन्तरपदाध्याहारेण तदर्थः कर्त्तव्यः ? तथात्वे घटः स इत्यादौ तच्छब्दानन्तरितस्य घटपदोत्तरसोर्लोपापत्तेः । न च परशब्दाध्याहारेण न निरुक्तो दोष इति वाच्यम् ? एवमपि परशब्दयोगे "अन्यारादिति" पञ्चम्या एवापत्तेः षष्ठ्या वक्तुमप्यशक्यत्वापत्तेः ( विनायकम्प्रकुर्वाणो रचयामास वानरमिति उपहासापत्तेः ) इति । नच परशब्दयोगे पञ्चम्येवास्तु तदर्थं षष्ठी लाक्षणिकीति न दोष-इति वाच्यम् ? "विभक्तौ न लक्षणा" इति सिद्धान्तभङ्गापत्तेः । न च छान्दसत्वात् ( छन्दोवत सूत्राणि भवन्ति ) पञ्चम्यर्थं षष्ठी इति वाच्यम् ? तथार्थेऽपि स घट इत्यत्र घटपदोत्तरसोर्लोपापत्तेरवारणात । नच परशब्देन अव्यवहितपरस्यैव ग्रहणे नोक्तदोष इति वाच्यम् ?

एवमपि वासुदेवार्थके अशब्दे सः अः इत्यत्र रुत्वे उत्वे पूर्वरूपे च सोऽः इति भवति तत्रापि पूर्वान्तवद्भावेन तच्छब्दाव्यवहितोत्तरत्वस्य सुप्रत्यये सत्वेन उक्तापत्तितादवस्थ्यात् । इत्यतो मूल आहुः तातचरणाः एतत्तदादिप्रकृतिकेति । नच एवमपि सः अः इत्यत्र अपदार्थस्य तत्पदार्थऽभेदेनैवान्वयेन अपदोत्तरसुप्रत्ययस्यापि तत्पदार्थगतसंख्याभिधायित्वेन लोपापत्तिरिति वाच्यम् ? एतत्तदर्थगतसंख्याभिधायी यस्सुरित्यस्य एतत्तदर्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजको यस्सुरित्यर्थात् । प्रकृते च अपदार्थतावच्छेदकं वासुदेवत्वं तदवच्छिन्नधर्मिता-

अत्र स्वरूपभङ्गभिया नैकशेषः । काशवत् एतत्तदोरनन्तर इति । अत ≍पर-अस ददातीत्यादौ न दोप≍परन्तु आनन्तर्य्यस्य पूर्वपरोभयसाधारण्येन ब्राह्मणस्स गच्छतीत्यादौ ब्राह्मणपदोत्तरसोरपि लोपापत्तिरतस्तच्छब्दसाचर्यात्तदादिप्रकृतिको यस्सुरित्यर्थो लक्षणया कार्य्यं इतिदोषाऽभावः ।

असः शिव इति ।

अस इति स्वरूपात् तद्भिन्नशिव इतिशाब्दबोधो दार्शनिकाऽभिमतो नञो भेदवाचकत्वात् । अत एव प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति न्यायाकारः । नञ्पदम्बिना यत्र धर्म्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद् भवति तादृशसमभिव्याहारस्थले नञ्सत्त्वे तत्र धर्मिणि तदभाव≍प्रतीयत इति । तथाहि, नीलो घट इत्यादौ तादात्म्यसम्बन्धेन नीलप्रकारकघटविशेष्यकबोधस्सार्वजनीनः, नीलो न घट इत्यादौ तादात्म्यसम्बन्धावच्छिन्ननीलाऽभावप्रतीतिरिति दृष्टान्तः । भूतले घटः भूतलनिरूपितवृत्तितावान्घट इति बोधः । भूतले न घट इत्यत्र भूतलनिरूपितवृत्तित्वाऽभाववान् घट इति प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति न्यायबलेन बोधः । न चैवमभाववद्विशेष्यकबोधस्वीकारे नब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवतीति भाष्याल्लोष्टाद्यानयनपनिष्टं स्यादिति वाच्यम् ? घटादिपदानां यावद्घटत्वावच्छिन्ने शक्तिसत्त्वेऽप्यत्र घटोऽस्तीत्यादौ कस्य चिद्घटस्यैव बोधदर्शनादत्र तात्पर्यप्रकरणादिना ब्राह्मणभिन्नक्षत्रियाद्यानयनस्य निर्विवादत्वात् । न च असमस्तनञो भेदार्थकत्वे नञर्थभेदस्याश्रये पदप्रतिपाद्ये प्रकारतया भानात् पटो न घट इत्यादौ दोषाऽभावेऽपि अघटमानयेत्यादावनुयोगिवाचकपदाऽभावाद् भेदस्यैव प्राधान्येन बोधाऽपत्तिरिति वाच्यम् ? तादृशस्थले नञो भेदवति लक्षणयाऽनुपपत्त्यभावात । न च भेदवति लक्षणायान्तदेकदेशे भेदे प्रतियोगितया घटादेरन्वयो न स्यादिति वाच्यम् ? चैत्रस्य गुरुकुलम् चैत्रस्य नप्तेत्यादाविव कचिन्नित्यपदार्थसाकांक्षे पदार्थैकदेशेऽपि अन्वयस्वीकारात् । न च नञो भेदवाचकत्वे न ब्राह्मणैरेतैरुपद्रुतमित्यादौ प्रतियोग्यनुयोगिवाचकपदयोस्सामानाधिकरण्यात्स-

---

निरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमेव अपदोत्तरवर्त्तिसोः, ननु तत्पदार्थतावच्छेदकबुद्धिविशेषविषयत्वावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमिति दोषानवकाशात् । वस्तुतस्तु एतत्कल्पाद्यर्थं एतत्तच्छब्दविशिष्टसोर्लोप इत्यर्थः । वै०स्वार्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्व स्वाव्यवहितोत्तरत्वमित्येतदुभयसम्बन्धेनेति सर्वदोषोद्धारिणः ।

मानविभक्तिकत्वानुपपत्तिरिति वाच्यम् ? प्रतियोग्यनुयोगिनोरभेदान्वयबोधोपयोगिकाऽकांक्षायामेव नञा भेदबोधनात् । अन्यथा भूतले न घट इत्यादावपि भेदबोधापत्तिः । न च भेदवति लक्षणायान्तदेकदेशे प्रतियोग्यन्वयकल्पने महागौरवमिति वाच्यम् ? यजतिषु ये यजामहङ्करोति नानुयाजेष्वित्यादौ भेदवति लक्षणाया आवश्यकत्वेन अन्यत्रापि लक्षणायां गौरवाऽभावात । तथा हि, यजतिशब्दो यागवचनः येयजामहमिति हकारान्तानुकरणाद् उच्चारणार्थकाकारान्ताद् द्वितीया तस्य करणञ्च तच्छब्दवन्मन्त्रोच्चारणम् । एवञ्च अनुयाजभिन्नेषु यागेषु येयजामहशब्दवन्मन्त्रप्रयोगरूपैकार्थविधाने सति एकोद्देश्यकैकविधेयार्थबोधजनकतया एकवाक्यता गरीयसी । अत्र नञोऽत्यन्ताऽभावार्थकत्वेवाक्यभेदस्स्यात सचानिष्टः । न च नञो भेदे शक्तिर्भिन्नैवेत्यत्र विनिगमनाविरहमिति वाच्यम् ? भेदत्वस्याऽखण्डोपाधितया तस्य स्वरूपतश्शक्यतावच्छेदकत्वात ।

## ( स्वादिविधौ प्रातिपदिकाधिकारादिति )

अयमभिसन्धिः, क्रमद्वयं वर्तते । एकश्चारोहणक्रमः, अपरश्चावरोहणक्रमः । आद्यो यथा छद्ध्युपास्य इति श्रवणानन्तरं प्रथमतो धात्वादिप्रकृतिकन्धातुज्ञानं ततश्च प्रत्ययधर्मिकं साधुत्वज्ञानं ततश्च पदधर्मिकं ततश्च वाक्यधर्मिकं साधुत्वज्ञानं जायते। द्वितीयस्तु प्रथमतः छद्ध्युपास्य इत्यादिवाक्यं श्रुतम् । तत्र प्रथमोपस्थितत्वाद्वाक्यधर्मिकं साधुत्वज्ञानम् प्रथमं, ततश्च प्रत्यासन्नत्वात्पदधर्मिकं ततश्च प्रकृतिधर्मिकं ततः प्रत्ययधर्मिकं साधुत्वज्ञानम् । तत्र हि द्वितीयमवरोहणक्रममवलम्ब्य दीक्षितैः कौमुदीरचना कृता । वाक्यसम्पादकानि सन्धिकार्यविधायकानि सूत्राणि प्रथममुपात्तानि वाक्यधर्मिकसाधुत्वज्ञानानन्तरं पदधर्मिकं साधुत्वज्ञानमिति । तत्र पदं द्विविधं सुबन्तं तिङन्तञ्च । तत्रापि पदसंज्ञाविधायके सूत्रे सुपः प्रथमोपादानात् तद्धर्मिकसाधुत्वज्ञानमपेक्षितं तच्च "स्वौजसमौडि"तिसूत्रज्ञानादेव स्यात। "स्वौजसमौ"डित्यत्र प्रातिपदिकाधिकारात्प्रातिपदिकज्ञानमन्तरा तस्य वाक्यार्थबोध एव न सम्भवति इत्युपजीव्यत्वात्सन्धिकार्य्यनिरूपणानन्तरं प्रातिपदिकसंज्ञानिरूपणमिति तदाह स्वादिविधौ इति ।

## ( आवर्तिते प्रत्ययपदे इति )

केचित्तु अप्रत्यय इति पदस्यैवावृत्तिरिति न तु तद्घटकप्रत्ययस्य, तथा सति एकस्य प्रत्ययपदार्थस्योपस्थिततदादिपदार्थेऽन्वयः, अपरस्य नञर्थभेदेऽन्वयः, इत्य-

सामर्थ्यात्समासो न स्यात । प्रत्यय इत्यस्यावृत्तौ तु एकत्र प्रत्ययपदस्य प्रत्ययान्ततदाद्यर्थः, तस्य भेदेऽन्वयः, अपरत्र प्रत्ययपदस्य प्रत्यय इत्यर्थः, तस्यापि भेदेऽन्वयः, इति सामर्थ्यात्समाससिद्धिरिति वदन्ति । वस्तुतस्तु–प्रत्यय इत्यस्यैवावृत्तिः प्रत्ययग्रहणपरिभाषा च लक्षणग्राहिकैवेति । एकस्य प्रत्ययपदस्य प्रत्ययान्ततदादौ लक्षणेत्युभयोरपि प्रत्ययपदार्थयोरेकत्र द्वयमिति रीत्या भेदे एवान्वयः इति नासामर्थ्यम् । नन्वत्रावृत्तिर्न मन्तव्या "शोणो"त्यस्य शोणीशब्दात्तदन्ताच्चेत्यर्थे "व्यपदेशिवद्भावोऽप्रातिपदिकेने"तिनिषेधात् केवलशोणीशब्दादण्प्रत्ययो न स्यादित्येतदर्थं "येन विधि"रितिसूत्रे "स्वस्य चे"तिपाठ्यम् भाष्ये । एवञ्चात्रापि प्रत्ययग्रहणपरिभाषोपस्थित्या तदादिपदं विशेष्यीकृत्य प्रत्ययपद तदन्तस्य स्वस्य च संज्ञं स्यादिति प्रत्ययान्ततदादिभिन्नं प्रत्ययभिन्नं चेत्याद्यर्थसिद्धेः । न च "स्वस्य चे"त्यनेनापि विशेष्यतदादेस्त्यागः कर्तुं न शक्यते इति प्रत्ययतदादिभिन्नं प्रत्ययान्ततदादिभिन्नञ्चेत्याद्यर्थ एव स्यात ततश्च हरिष्वित्यादौ प्रत्ययतदादिभिन्नत्वेन प्रातिपदिकसंज्ञा स्यात् । न हि व्यपदेशिवद्भावेन केवलप्रत्यये प्रत्ययतदादित्वमानेतुं शक्यते इति वाच्यम् ? स्वस्य चेत्यनेन तदन्तविध्यभावपक्षे विशेष्यतदादीत्यस्य त्यागोपि स्वीक्रियते इत्यदोषात् । सूत्रोपात्तान्तादिशब्दे प्रवर्त्तते पूर्वान्तादिनिरिति साजात्यात ।

नागेशमते व्यपदेशिवद्भावेन तदादित्वमध्यायास्यत्ययेवेति चेन्न ? स्वस्य चेतिवार्तिकस्य व्यपदेशिवद्भावनिषेधक "व्यपदेशिवद्भावोऽप्रातिपदिकेने"तिपरिभाषाबाधकत्वेन यत्र तया व्यपदेशिवद्भावनिषेधः प्राप्नोति तत्रैव तद्वार्त्तिकं प्रवर्तते इत्यावृत्तिमन्तरा प्रत्ययभिन्नमित्यर्थस्यालाभात् । उत्तरसूत्रे तद्धितग्रहणेन हि प्रत्ययान्ततदादिभिन्नमित्येक एवार्थो लभ्यते । ननु प्रत्ययान्ततदादिरित्येक एवार्थोऽस्तु "स्वस्य चे"तिवार्तिकन्तु यथा "व्यपदेशिवद्भावोऽप्रातिपदिकेने"त्यस्य बाधकन्तथा विनिगमनाविरहात्ससहाये व्यपदेशिवद्भावनिषेधकस्यापि एकस्मिन्नित्यस्यापि बाधकमिति हरिष्वित्यादौ सोरपि व्यपदेशिवद्भावेन प्रत्ययान्ततदादित्वेन तस्य प्रातिपदिकसंज्ञा वक्तुमशक्येति चेन्न ? स्वस्य चेतिवार्तिकस्यैकस्मिन्नित्यस्यापि बाधकत्वे तु "छसिङन्तमि"तिसूत्रस्थभाष्यासङ्गतिः । तत्र हि भाष्ये उपस्थिततदादिपदं विशेष्यीकृत्य तदन्तविधिसिद्धौ अन्तग्रहणं संज्ञाविधावेति ज्ञापयतीति । तत्र चान्तग्रहणसत्वे "येन विधि"रित्यस्यैवाप्रवृत्या एकस्मिन्नित्येतन्निषेधक "स्वस्य चे"ति

वार्तिकन्न प्रवर्तते इति हरिण्वित्यादौ केवलसोः पदसंज्ञा न ससहाये व्यपदेशिवद्भावाप्रवृत्त्या तस्य सुबन्तत्वाभावात् । अन्तग्रहणाभावे तु येन विधिरितितदन्तविधौ एकस्मिन्निरयेतन्निषेधक "स्वस्य चे"तिवार्तिकमपि प्रवर्तते । तथा च हरिण्वित्यादौ व्यपदेशिवद्भावेन सोरपि सुबन्तत्वेन पदसंज्ञा स्यादिति फलभेदात् भाष्यासङ्गतिः स्पष्टैव । न चान्तग्रहणज्ञापकतापरभाष्यप्रामाण्येन सुप्तिङन्तमितिसूत्रे एकस्मिन्नित्येतन्निषेधक "स्वस्य चे"तिवार्तिकन्न प्रवर्तते इति कल्प्यते । आवृत्तिस्वीकारापेक्षयैतत्कल्पने लाघवादित्येवं रीत्या तद्भाष्यासङ्गतिवारणेपि "टिड्ढाणञि"तिभाष्यासङ्गतिर्दुर्वारैव । तत्रहि अनुपसर्जनाधिकारेण तदन्तविधिद्वयज्ञापनस्य फलं कौम्भकारेयसिद्धिः । अन्यथा कुम्भकारेयोत्पाद्येतेत्युक्तम् । तत्र तदन्तविधिद्वयेन अणन्ततदाद्यन्तात्प्रातिपदिकादित्यर्थेऽपि कुम्भकारेय इत्यस्य दुर्वारत्वमेव स्यात् । स्वस्यचेत्यनेन ससहाये व्यपदेशिवद्भावनिषेधकैकस्मिन्नित्यस्याप्रवृत्तौ व्यपदेशिवद्भावेनैवकारेस्यस्यापि अणन्ततदाद्यन्तत्वेन तस्मादेव ङीपि कारेत्यस्यैव स्त्रीप्रत्ययान्ततदादित्वेन तस्मादेव "स्त्रीभ्यो ढगि"तिढक्प्रवर्तते इति भाष्यासङ्गतिः स्पष्टैव । एतद्भाष्यप्रामाण्येन "टिड्ढाणञि"तिसूत्रेऽपि "स्वस्य चे"तिवार्तिकाप्रवृत्तिकल्पनेन तद्भाष्यासङ्गतिर्निवार्या वृत्तिखण्डनं न युक्तम् । स्वस्य चेतिवार्तिकस्य प्रवृत्तिः "टिड्ढाणञि"ति "सुप्तिङन्तमि"तिसूत्रद्वये एतद्वार्तिकाप्रवृत्तिरित्येतत्कल्पनापेक्षया आवृत्तिस्वीकारे एव लाघवादिति दिक् ।

केचित्तु "अर्थवत्प्रातिपदिकमि"त्येव सुवचम् । प्रत्ययस्य यत्र संज्ञा तद्विषय इति । ज्ञापकसाजात्यात्संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यतासमर्पकं यत्प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तत्रैव संज्ञाविधाविति परिभाषास्वीकारात् । प्रकृते च प्रत्ययभिन्नस्य प्रातिपदिकसंज्ञाविधानेन प्रत्ययपदस्य साक्षादुद्देश्यताप्रयोजकत्वाभावात् न दोष इति भावः । "कृत्तद्धि"त्यादि तु तिङ्भिन्नस्य तादृशोद्देश्यताप्रयोजकत्वाभावेनैतन्निषेधप्रवृत्त्यभावेऽपि न क्षतिः । अवयवोद्देश्यके कार्य्ये समुदायो यत्र पर्य्युदस्यते तत्र समुदायस्यावयवे लक्षणैव । यथा "नश्छव्यप्रशानि"त्यादौ नकारोद्देश्यककार्य्ये पर्य्युदस्यमानस्य प्रशानितिपदस्य स्वावयवे लक्षणा इति प्रशान् शब्दावयवभिन्नस्येत्यर्थः । तथा प्रकृतेऽपि प्रत्यय इति अनुवृत्त्या प्रत्ययोद्देश्यके कृत्संज्ञारूपे कार्य्ये पर्य्युदस्यमानतिङन्ततदादिबोधकतिङ्पदस्य तिङन्ततदादित्वमेव लक्षणया तत्रैव च नञर्थान्वयात्तिङन्ततदाद्यवयवभिन्नस्य धात्वधिकारविहितस्येत्यर्थं

तिङः कृत्संज्ञावारणसम्भवात् ।

अत्र सूत्रे वृत्तिमत्त्वमर्थवत्त्वमिति स्वीकुर्वतां प्राचीनानां मते केवलप्रत्ययस्यापि वृत्तिमत्त्वरूपार्थवत्त्वसत्त्वेन प्रातिपदिकत्वं स्यादिति तद्वारणाय प्रत्ययपर्युदासकरणमावश्यकम् । उत्तरसूत्रे एकार्थीभावेन लौकिके प्रसिद्धत्वरूपार्थवत्त्वसिद्धयेऽर्थवदितिशब्दाधिकाराश्रयणञ्च गौरवग्रस्तत्वेन प्राचीनमतं खण्डयत्स्वमते चोभयत्र सूक्ष्मसाधारणमेकमर्थवत्त्वम् परिष्करोति एतत्संज्ञाफलभूतेत्यादि । एतत्पदेन यस्यार्थवत्त्वं चिकीर्षितं तद् ग्राह्यम् तत्र बोधजनकता सुप्रकृतिमात्रे वैयाकरणनिकाये आरोपितैव न वास्तविकी तावन्मात्रे बोधजनकतायाः स्वीकारात् । वास्तविकी बोधजनकता राम इत्यादिसुबन्तपदे एवास्ति सुप्रकृतिमात्रे आरोपितबोधजनकता यद्यपि प्रातिपदिकसंज्ञासमकाले नास्ति तथापि सांभावनिकीमपि बोधजनकतामादाय लक्षणसमन्वयो बोध्यः । यथा राम इत्यादौ रामेत्यस्य या संज्ञा प्रातिपदिकसंज्ञा तत्फलभूता आगामिनी स्वादिविभक्तिस्तदितरो घटपटादिः तत्समभिव्याहारानपेक्षयैव राम इत्यस्य परिनिष्ठितस्य लोकेऽर्थबोधजनकत्वमस्ति नहि रामेत्यस्यार्थबोधे जननीये घटपटादेः कारणत्वं केन चिदभ्युपगतम् । इति राम इत्यस्यार्थवत्त्वेन संज्ञा सिद्धा राम इत्यादौ स्वादीनान्नार्थवत्त्वम् । स्वादिप्रत्ययानां या प्रातिपदिकसंज्ञा तत्फलभूतविभक्तीतरराम इत्यादिप्रकृतिसमभिव्याहारापेक्षयैव तेषामर्थबोधजनकत्वमस्ति । प्रत्ययेनार्थबोधे जननीये समभिव्याहारस्य कारणस्य क्लृप्ततया नार्थवत्त्वलक्षणसमन्वय इति विभक्तावेतदिति अवश्यन्ध्येयम् । अत एव राज्ञः पुरुष इत्यादौ सुप्राग्वर्तिनो राज्ञः पुरुषेति समुदायस्य नार्थवत्त्वम् । राज्ञः पुरुषेत्यस्य या संज्ञा प्रातिपदिकसंज्ञा तत्फलभूता विभक्तीतरा या पुरुषमात्रप्रकृतिका सुविभक्तिः तत्समभिव्याहारापेक्षयार्थबोधजनकत्वेऽपि तादृशसुविभक्तीतरघटादिसमभिव्याहारानपेक्षयैवार्थबोधजनकत्वात्तत्वं दुर्वारमेव स्यात् ।

अर्थवत्त्वे च तस्य प्रातिपदिकसंज्ञायां "सुपो धातु"तिलुक् स्यात् । एतत्संज्ञाफलभूतविभक्तिसमभिव्याहारापेक्षया लोकेऽर्थबोधजनकत्वेत्येतन्मात्रोक्तौ दधि मधित्यादौ विभक्त्यनपेक्ष्यैवार्थबोधजनकत्वादव्याप्तिः स्यादिति नोक्तम् । लक्षणे समभिव्याहारस्यानुपादाने तु रामइत्यादावप्यर्थवत्त्वं न स्यात् "सर्वं वाक्यं क्रियायां परिसमाप्यते" इतिनियमादस्ति भवतीत्यादीनां विनार्थबोधासम्भवेन एतत्संज्ञाफलभूतविभक्तीतरोऽस्तीत्यादिः तदपेक्षयैवार्थबोधजनकत्वात् । समभि-

-व्याहारोपादाने तु समभिव्याहारशब्दस्य नियमयोर्वाऽर्थबोधजनकतया अस्तीत्यादि-पदस्य नैयत्यं नास्ति कदाचिदस्ति रामः कदाचिद्रामोऽस्तीति वाक्यस्य सत्त्वा-दिति न दोषः। अत्र परिष्कारे एतत्संज्ञेत्यत्र एषा चासौ संज्ञा एतत्संज्ञा इति क-र्मधारयस्तर्हि तत्संज्ञाफलभूतेत्याद्यर्थः स्यात्। ततश्च अधातुः किं अपि काकः श्येनायते इतिभाष्यं विरुद्धयेत। धातोः श्येनाय इत्यस्य प्रातिपदिकसंज्ञा तत्फल-भूतविभक्तीतरः त इति तत्समभिव्याहारापेक्षयैव बोधजनकत्वादर्थवत्त्वाभावादेव प्रातिपदिकसंज्ञा न स्यादिति भाष्यस्य दुर्वारत्वात्।

इदञ्च भाष्यं प्रत्ययान्तपर्य्युदासमबुध्वा प्रवृत्तम्। यदि चैतस्य संज्ञेति षष्ठीस-मासस्तदा एतद्वृत्तित्वविशिष्टा या संज्ञा तत्प्रयोज्यविभक्तीत्याद्यर्थः स्यात्। य-स्यार्थवत्त्वं चिकीर्षितं तदेतत्, ततश्च श्येनायते इत्यत्र इत्येतद्वृत्तित्वविशिष्टा या धातुसंज्ञा तत्प्रयोज्यविभक्तिस्ते इति तदितरो घटपटादिस्तत्समभिव्याहारानपेक्षयै-वार्थबोधजनकत्वसत्त्वादर्थवत्त्वं दुर्वारम्। अधातुः किं अपि काकः श्येनायते इति भाष्यस्य सूपपन्नत्वेऽपि प्रत्ययग्रहणपरिभाषायाः प्रत्ययविशेषे प्रवृत्तौ फलम् देवदत्तो गार्ग्येति समुदायस्य तद्धितान्तत्वात्प्रातिपदिकत्वन्नेति।

## अर्थवदिति।

अत्र सूत्रे प्राचीनलक्षणे गृहीते वृत्तिविशिष्टत्वरूपे प्रत्ययानामप्यधिकरणरूपा-र्थवत्त्वस्य कृदन्ते कर्तृनिरूपितशक्तेस्तद्धिते चाणोऽपत्यरूपार्थशक्तेस्सत्त्वात्प्रातिपदि-कत्वं स्यात्तर्हि फिषोऽन्तोदात्तत्वापत्तिः, "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति क्विबापत्तिश्च "प्रातिपदिकाद् धात्वर्थे" इतिणिजापत्तिश्च। सुब्लुक् तु न धातुसाहचर्य्याद् वृत्तिघटकसुपो ग्रहणात्।

---

(अर्थवदधातुरिति) अर्थोऽस्यास्तीत्यर्थेवत् "तदस्यास्त्यस्मिन्" इति मतुप्। "अर्थाच्चासन्निहिते" इतीनिस्तु न? सन्निहितत्त्वात्। तत्त्वञ्च स्वविषयकेच्छा-समवायित्वम्। एवञ्च 'अर्थवानित्यत्र अर्थविषयकेच्छासमवायित्वाभावात् नासन्नि-हितत्त्वप्रयुक्त इनिः किन्तु मतुबेव, सिद्धश्चार्थीत्यादौ अर्थी समर्थी विद्वान् यश्शास्त्रा-नुपहतश्च यः इत्यादौ तु स्वविषयकेच्छासमवायित्वादिनिः। अर्थमात्रवतोऽप्यर्थवि-षयकेच्छासत्त्वे तु तत्रापीष्ट एवेनिः। तत्र इनेरनिष्टत्वे तु स्वाभाववत्त्वे सतीति निवे-शनीयम्। एवञ्च विद्यार्थीत्यादावपि इनिप्रत्ययसिद्धः। "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्"इत्यस्य लाघवमूलकतया कर्मधारयपदस्य बहुव्रीहीतरसमासमात्रोपलक्ष-कत्वं दीधितिग्रन्थे रघुनाथशिरोमणिभिःस्वग्रन्थे मथुरानाथभट्टाचार्य्यैश्चोक्तत्वेन सिद्धा-

किञ्च तादृशेऽभिप्रेतेऽधातुरितिपर्य्युदासेनैव तल्लाभसम्भवादुत्तरसूत्रे कृदादीनाम् अनर्थकानामप्रसिद्धेरर्थवद्ग्रहणमिह व्यर्थं स्यात् ।

किञ्च तादृशेऽभिप्रेते नैतत्सूत्रभाष्यविरोधस्तथाहि अप्रत्ययान्तग्रहणाभावे हरिष्वित्यस्य प्रातिपदिकत्वं स्यादिति तन्न यदयमुत्तरसूत्रेण तद्धितान्तस्य प्रातिपदिकत्वं शास्ति तन्नियमार्थं, प्रत्ययान्तस्य चेत्तर्हि कृत्तद्धितान्तस्यैवेति प्रत्ययान्तपर्य्युदासो नोक्तो यद्येतदर्थवत्त्वञ्चेत्तर्हि अधिकरणादिरूपस्यार्थवत्त्वस्य सत्त्वेनेष्टापत्तेर्नियमेन वारणपरकं भाष्यमसङ्गतं स्यात । मम नवीनस्य तु एतल्लक्षणासंघटनेनादोषात ।

किञ्च एवं स्वीकारे "कृत्तद्धितान्तञ्चैवार्थवन्न केवलाऽकृतस्तद्धिता वा" इति भाष्यविरोधः प्रकृतसूत्रस्थः केवलकृतद्धितयोरपि शक्तिमत्त्वात्प्रातिपदिकत्वं स्यात तत्कथमुक्तन्तेन ।

किञ्च सूत्रद्वये प्राचीनमते चैकस्यार्थवत्पदस्य पूर्वत्र वृत्तिविशिष्टे शक्तिरुत्तरसूत्रे चैकार्थीभावेन प्रशंसारूपेऽर्थे शक्तिरित्येकस्य शब्दस्यार्थशक्तिद्वयकल्पनं गौरवम् । नवीनस्य तु अर्थवत्पदस्य लौकिकार्थविषयकबोधजनकत्वावच्छिन्ने शक्तिरेवमेव उत्तरसूत्रेऽपीति ।

---

न्ततया विद्यामर्थयते याचते इति विग्रहे णिनिरेव नतु इनिः । "उगिदचाम्" इति नुमापत्तिस्तु नैव शंक्या तस्य शब्दस्वरूपविशेषणत्त्वेन सोर्लुका लुप्तत्वेन प्रत्ययलक्षणाप्रवृत्तेः । भाव्यमानेन सवर्णानां ग्रहणन्नेति परिभाषया अर्थवदित्यत्र अनुनासिकमकारस्थाने जायमानोऽपि वकारो निरनुनासिक एवेति बोध्यम् । भाव्यमानत्त्वञ्च विधेयताप्रयोजकपदत्त्वमेव । ननु घटो न द्रव्यमिति वाक्यस्यैव प्रामाण्यवरणाय नञर्थस्योद्देश्यतावच्छेदकावच्छेदेनैवान्वयात् प्रकृतेऽर्थवत्त्वस्य धातावपि सत्त्वेनार्थवत्त्वावच्छेदेन नञर्थान्वयबाधादिति चेन्न ? इतरविशेषणतानापन्नस्य यत्र नञर्थोद्देश्यता तत्रैवोद्देश्यतावच्छेदकावच्छेदेनान्वयः,यत्र च इतरविशेषणापन्नस्य नञर्थोद्देश्यता तत्रोद्देश्यतावच्छेदकसामानाधिकरण्येनैवान्वयोपगमात् अन्यथा घटान्यद् द्रव्यमानय मैथिलो न ब्राह्मण इत्यादिप्रयोगाणाम् प्रामाण्यमापद्येत । अत्रायमभिसन्धिः—प्रतियोगित्त्वेनाश्रीयमाणो यः पदार्थस्तद्वृत्तिर्यो धर्मस्तात्पर्य्यानुरुद्धः प्राकृतस्तस्यैवानुयोगितावच्छेदकत्त्वम् भवति तथा चनार्थवत्सूत्रे दोषः प्रतिपादितश्चैवमेव व्याप्तिपञ्चकविवृतौ जागदीश्यां जगदीशभट्टाचार्य्यैः तत्र नीलो घटो घटान्य इत्यादिप्रतीतिवारणकाले यद्विशिष्टप्रतियोगिताकत्त्वेनान्यादिपदेन भेदावगमस्तद्वृत्तिधर्मस्यैवानुयोगितावच्छेदकत्त्वात् इत्याद्युक्तम् । तत्रत्यग्रन्थानुसारिणस्तु केचित्—भेदविधेयस्थल एव तस्य नियमस्य

किञ्च द्विविधबोधं प्रति विभिन्नोपस्थितिः कारणम् गौवम् नव्यमते तु एकाकारकोपस्थितिः कारणमर्थवत्पदस्येति लाघवम् ।

नच नवीनमते कस्य चिदेतत्संज्ञेत्यनेन वोधः कस्य चिदेकार्थीभावेत्यनेनेतिशक्तिद्वयमस्त्येवेति वाच्यम् ? पुरुषभेदेन तु तात्पर्य्यीयविशेष्यतया मतद्वयेऽपि शक्तिर्भिन्नेति समत्वात् ।

किञ्च एकस्यार्थवत्पदस्य पूर्वसूत्रेऽन्यल्लक्षणमुतरसूत्रेऽन्यत् लक्षणद्वयकरणे गौरवम् ।

किञ्च प्रत्ययपर्य्युदासोऽपि गौरवम् ।

---

स्वीकारात् प्रकृते प्रातिपदिकविधेयस्थलत्वान्न दोष इति वदन्ति ।

ननु यद्धर्मवाचकपदोत्तरं नञ्पदश्रुतिर्नञा तद्धर्मावच्छिन्नप्रतियोगिताभेद एव प्रत्याय्यत इति नियमादत्रापि अर्थवत्त्वावच्छिन्नवाचकार्थवत्पदोत्तरं नञः श्रुतेर्नञाऽर्थवत्त्वावच्छिन्नप्रतियोगिताकभेद एव बोधनीयो न तु धातुत्वावच्छिन्नप्रतियोगिताक इति चेन्न ? घटानधिकरणम् भूतलमितिप्रयोगस्य प्रामाण्यवारणाय समासघटकयद्धर्मवाचकपदोत्तरं नञ्पदस्य श्रुतिर्नञा तद्धर्मावच्छिन्नप्रतियोगिताकभेदः प्रत्याय्यत इति नियमाददोषात् । वस्तुतस्तु नायं सुधांशुरित्यादिकाव्यप्रकाशादिप्रयोगानुसारेण यद्धर्मावच्छिन्नवाचकपदसाकाङ्क्षं नञ्पदं श्रूयते तत्रैव तद्धर्मावच्छिन्नप्रतियोगिताकभेदो नञा बोध्यतेऽन्यथा यो न वह्निमान् इति वाक्याद् वह्निमद्भेदधूमवद्भेदयोर्बोधासम्भवात् ।

ननु नित्यो घट इत्यादिप्रयोगवारणाय पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तिरभिमता तथा चात्र नञर्थैकदेशे भेदे कथन्धात्वर्थान्वयो युज्यत इति चेन्न ? देवदत्तस्य गुरुकुलम्, देवदत्तस्य दासभार्य्या इत्यादिदर्शनेन नित्यसाकांक्षपदार्थातिरिक्तस्थल एव तस्याः स्वीकृतेः ।

ननु धातुप्रतियोगिकभेदस्य भ[illegible]तिन्नैधंतिरित्यादिप्रतीत्या धाताववाधितत्वात् प्रातिपदिकत्वापत्तिरिति चेन्न ? धातुत्वपर्य्याप्तावच्छेदकताकप्रतियोगिताकभेदस्य निवेशेनादोषात् । तावतैव धातुघटोभयन्नेति भेदस्यापि वारणसम्भवेनादोषादिति सङ्क्षिप्तः प्रकारः ।

अर्थवत्त्वञ्चिम् ? प्राचीनमते वृत्तिमत्त्वरूपम्, नवीमते चैतात्संज्ञाफलभूतविभक्तीतर समभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमित्यादि शास्त्रार्थोऽत्र महान् गौरवभिया न प्रतन्यते ।

ननु प्रतियोग्यवृत्तिधर्मस्यैव भेदीयानुयोगितावच्छेदकत्वस्वीकारे घटपटोभयन्न घट इत्यादौ घटत्वपटत्वोभयत्वादिकमेव प्रतियोगितावच्छेदकम् तत्राभिमतानुयो-

किञ्च अर्थवद्ग्रहणसामर्थ्यात्तदन्तविधिरिति भाष्यविरोधोऽपि गौरवम्, तथाहि संज्ञाविधाविति निषेधेन कृदन्तेत्यर्थाभावेनार्थवद्ग्रहणानुवृत्तिसामर्थ्यात्तदन्तविधिरित्युक्तम् एतादृशे वृत्तिविशिष्टे गृह्यमाणे केवलस्य तद्धितीयाणोऽपत्यार्थे शक्तत्वात्प्रातिपदिकत्वमितोष्टापत्तिसामर्थ्येन तदन्तविधानं व्यर्थं, नवीने तु लक्षणावटनेन भाष्याविरोधस्सुलभ इति गौरवम्। किञ्च पञ्चनावप्रिय इत्यत्र पञ्चनावेत्यस्य तद्धितवृत्तित्वात्प्रातिपदिकत्वं स्यात् सत्वे तु टाबापत्तिरिति गौरवम्। किञ्च शाब्दबोधे उत्पादकता कारणता च। उत्पादकता तु कार्य्यनिष्ठकारणताकलाप एव। कारणता तु कार्य्यभेदाद्भिन्नैव भिन्नैवेति। तथा चार्थवत्सूत्रजन्यशाब्दबोधं प्रति किं कारणमिति प्रश्ने अर्थवत्, अधातुः अप्रत्यय इति। तथा च अधातुपद-

---

गितावच्छेदकीभूतवटत्त्वस्य सत्वेन तस्यानुयोगितावच्छेदकत्वं व्याहन्येतेति चेन्न? प्रतियोग्यवृत्तिपदेन सामान्यप्रतियोग्यवृत्तेरविवक्षणेन यत्किञ्चित्प्रतियोग्यवृत्तिविवक्षणेन च उद्धारस्य कर्त्तुं शक्यत्वात् इत्यलम् प्रस्तरेण।

वैयाकरणानान्निकाये "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवद्"इत्युक्त्या विशिष्टा शक्तिर्वृत्तिमात्रे, अतिरिक्ता शक्तिरिति यावत्। अधातुरित्यस्य धातुप्रतियोगिकभेदवान् इत्यर्थः। भेदवत्पदार्थस्य अभेदसम्बन्धेन अर्थवत्पदार्थेऽन्वयः, नैयायिकानाम्मते तु धातुपदार्थस्य नञर्थे भेदे स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेनान्वयः। भेदपदार्थस्य च स्वरूपसम्बन्धेनार्थवत्पदार्थेऽन्वयः। ननो निपातत्वेन निपातातिरिक्तप्रतिपदिकार्थयोः क्रियानिपातातिरिक्तप्रातिपदिकार्थयोश्च साक्षाद्भेदसम्बन्धेनान्वयो न भवतीति नियमस्याविषयत्वात। वस्तुतस्तु—सामानाधिकरण्यानुरोधेन समासघटकनञो भेदवति लक्षणया नैयायिकमतेऽप्यभेदेनैवार्थवत्पदार्थेऽन्वयात। तथा च धातुपदार्थस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन भेदेऽन्वयः' भेदवत्पदार्थस्य चाभेदसम्बन्धेनार्थवत्यन्वयः, अर्थवत्पदार्थस्य च शब्दस्वरूपे स्वरूपसम्बन्धेनान्वयः,शब्दरूपस्य च प्रातिपदिकपदार्थ पाणिनीयसङ्केतवत्त्वसम्बन्धेनान्वयः, प्रातिपदिकपदार्थस्य चाभेदसम्बन्धेन समवायसम्बन्धावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नैकत्ववत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयीभूतो यो हि कर्तृपदार्थस्तत्रान्वयः, कर्तृपदार्थस्य च वृत्तित्वसम्बन्धावच्छिन्नार्थवत्कालिकसम्बन्धावच्छिन्ना या वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽऽस्त्यर्थक्रियात्वावच्छिन्नास्त्यर्थक्रियानिष्ठा विशेष्यता तत्रान्वयः, क्रियामुख्यविशेष्यकश्च शाब्दबोधोऽभीष्ट एषां शाब्दिकानाम् "क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्कवचनात्।

जन्यधातुभिन्नोपस्थितिविशिष्टा प्रत्ययपदजन्यप्रत्ययभिन्नोपस्थितिविशिष्टार्थवत्पद-जन्यार्थवद्विषयकबोधजनकोपस्थितिविशिष्टोपस्थितिकदम्बस्य कारणत्वन्तत्र वि-निगमनाविरहेणाधातुपदं धृत्वा अप्रत्ययपदजन्यप्रत्ययभिन्नोपस्थितिविशिष्टार्थव-द्विषयकबोधजनकोपस्थितिः कारणम् । तथा अप्रत्ययपदं धृत्वार्थवद्विषयकबोधजन-कोपस्थितिविशिष्टा धातुपदजन्यधातुभिन्नोपस्थितिविशिष्टाद्युपस्थितिः कारणम् । एवं विनिगमनाविरहेण व्यत्यासकल्पनेन षट् गौरवाणि । नवीने तु प्रत्ययपर्युदा-साभावेन चत्वारि । एवं अधातुः अप्रत्ययः अप्रत्ययान्तः अर्थवदिति चतुर्णामुप-स्थितौ तु विनिगमनावैकल्येनैकस्य वारद्वयमुपस्थितिकारणत्वात् द्वादश १२ । न-वीनस्य तु षट् ६ । किञ्च द्वादशोपस्थितीयकारणस्य समुचितैकत्र लक्ष्ये चोपस्थितौ तेषामपि विनिगमनाविरहेण द्वादशानां कारणानां षट्कारणमुख्यत्वेन षड्रूपेणैव द्वादशानां कारणानामुपस्थितौ ७२ द्विसप्ततिगौरवाणि इति । किञ्च विभिन्नविषयक-शाब्दबोधं प्रति विभिन्नविषयकोपस्थितिः प्रतिबन्धिका भवति इति । विभिन्न-विषयकप्रत्यक्षं प्रति शाब्दसामग्री प्रतिबन्धिका भवति यथा घटविषयकप्रत्यक्षं पटविषयकः शाब्दबोधः । तथा च घटविषयकप्रत्यक्षं शाब्दसामग्री प्रतिबध्नातीति । समानविषयकशाब्दबोधं प्रति प्रत्यक्षसामग्री प्रतिबन्धिका भवति । यथा घटविषयकं शाब्दबोधं घटविषयकप्रत्यक्षसामग्री प्रतिबध्नातीति सर्वसिद्धान्तः । तथा च प्रकृते घटविषयकं प्रत्यक्षं चिकीर्षितम् अर्थवत्सूत्रजन्यशाब्दबोधश्चिकीर्षितः तदर्थ-वत्सूत्रजन्यशाब्दबोधः चक्षुरिन्द्रियजन्यं प्रत्यक्षं प्रतिबध्नातीति । समानविषय-कानुमितित्वावच्छिन्नम्प्रति शाब्दसामग्री प्रतिबन्धिका भवति । तथा चैतादृक् प्र-तिबन्धकाभावविशिष्टकारणतावच्छेदकोपस्थितेः कारणत्वात्प्रत्येकस्मिन्प्रत्येकस्मि-न्पदे प्रतिबन्धकाभावविशिष्टप्रतिबन्धकतावच्छेदककल्पने क्रमेण प्राचीननये गौर-वम् । किञ्च प्रतिबन्धकाभावविशिष्टकारणकदम्बोपस्थितेः कारणत्वादुपस्थितित्व-स्येह नानात्वेन क्रमेण प्राचीनमतेऽगण्यं गौरवमित्यलम् ।

अत आहैतत्संज्ञेत्यादि ।

एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनक-त्वमिति । यथा रामशब्दस्य संज्ञा प्रातिपदिकसंज्ञा तत्फलभूता विभक्तिरागामिनी विभक्तिस्तदितरद् घटादिकं तत्समभिव्याहारानपेक्षयैव लोकेऽर्थविषयकबोधजनक-त्वादर्थवत्त्वेन प्रातिपदिकत्वमस्तीतिसिद्धिः । नन्वत्र समभिव्याहारपदस्य कोऽर्थः

नियतपूर्वापरीभाव एव नैयत्येन पूर्व एव पर एव वा । सच न दृश्यते कदाचित् रामो भवति—कदाचित् भवति राम इति कुत आहर पात्रं पात्रमाहरेति "वृद्धि-रादैजि"ति भाष्यप्रयोगात् । रामादौ लक्षणासंघटनेन कथमेतदिति । तथा च एतत्संज्ञाफलभूतविभक्तीतरनिरूपितपूर्वत्वपरत्वान्यतरप्रकारकज्ञानाप्रयोज्यलोकेऽर्थवि-षयकबोधजनकत्वमर्थवत्त्वम् । यथा रामोऽस्ति रामपदोत्तरअस्तिपदजन्यशाब्द-बोधे रामोत्तरत्वप्रकारकं ज्ञानं कारणम् । तथा अस्ति रामः अस्तिपदजन्यबोधे रामाव्यवहितपूर्वत्वप्रकारकं ज्ञानं कारणं । परन्तु अत्र कारणतावच्छेदको द्विविधो भवेदतो गौरवात्समीपोच्चरितत्वप्रकारकज्ञानाप्रयोज्येतिनिवेशेन समीपोच्चरितत्वप्र-कारकज्ञानस्यैव कारणत्वात्पूर्वत्वपरत्वप्रकारकज्ञानस्यान्यथासिद्धत्वात् ।

नन्वत्रैतस्य रामेत्यस्य संज्ञा प्रातिपदिकसंज्ञेति तर्हि घटपटादीनां संज्ञा न स्यात्कुत एतत्तच्छब्दार्थयोरननुगतत्वेनैकस्यैव भवेत् यस्य कस्य चित्क्रियेत तर्ह्य-स्मिंलक्षणे महान्क्लेशस्तदुपायान्तरेण वार्यते । तथाहि वस्तुविशिष्टत्वमर्थवत्त्वम् वैशि० स्वतादात्म्य स्वोद्देश्यकसंज्ञाफलभूतेतरनिरूपितपूर्वत्वपरत्वान्यतरपदप्रयो-ज्यज्ञानाघटितलोकेऽर्थविषयकबोधजनकत्वोभयसम्बन्धेन । यथा च रामतादात्म्यं रामे एव नान्यत्रैवं सर्वत्रेति प्रत्येकं धृत्वा न दोषः । नचैवन्निवेशे एधाञ्चक्रे इत्या-दौ लक्षणघटनं कथमतः स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वैतत् त्रितयस-म्बन्धेनेति । नचैवं निवेशेऽपि एधनिष्ठोद्देश्यतानिरूपितविधेयताश्रयः लिट् परकः कृ इति न तु चक्रे इति तदितरत् चक्रे इति तदपेक्ष्यैव बोधजनकत्वमिति प्रातिप-दिकत्वं न स्यात् इति वाच्यम् ? स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयविशिष्टसम-भिव्याहारेति । अत्र वै० स्वस्थानिकेतरत्व· स्वेतरत्वैतदन्यतरसम्बन्धेन । रमेत्या-द्यर्थं द्वितीयसम्बन्धः । एवञ्च लिट्कृइत्यस्यानुप्रयोगेऽपि चक्रे इत्याद्यादाय न दोषः । नच तस्य सदृशं भिन्नं तन्निभमित्यादौ दोषस्तत्पदसमभिहारापेक्ष्यैव बोध-जनकताऽस्तीति चेत् ? स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरपूर्वपदेतरसमभि-व्याहारानपेक्ष्यैवेतिनिवेशेनादोषात् ।

नच राजपुरुषौ अत्रेरपत्यानि अत्रय अत्र पूर्वपदं राज इति अत्र इति च तदि-तरदुघटाद्यनपेक्ष्यैवेति प्रातिपदिकत्वं राजपुरुष् इति षान्तस्यात्रेत्यस्य च स्यादिति वाच्यम् ? स्वविशिष्टसमभिव्याहारानपेक्ष्येतिदानेन । वैशि० स्वघटितसमासघटक-त्व स्वावधिकपूर्वत्वतदुभयसम्बन्धेनेत्यदोषात् । नचैवमपि हरिषु चरः इत्यादौ सम्ब-

न्धद्वयघटनेन सोःप्रातिपदिकत्वापत्तिरिति वाच्यम् ? स्वोत्तरपदकसमासघटकत्वेऽपि तृतीयसम्बन्धदानेनात्र पूतरपदकसमासो नास्ति किन्तु चरोत्तरपदकसमासोऽतोऽ दोषाभावाभावात् । अत्र पूज्यपादाः अत्र शास्त्रे प्राचीनमतमेव ज्यायः प्रत्ययपर्य्युदासोऽपि प्राचीनमतेऽपि न कर्तव्यः कुतः केवलप्रत्ययसंज्ञायां फलाभावात्। नच स्वाद्युत्पत्तिः फलमिति वाच्यम् ? संख्याद्यभावात्स्वाद्यनुत्पत्तेः । नचैकवचनमुत्सर्गतः करिष्यते इति सिद्धान्तात् भावकर्मणोः प्रत्ययाद्विबोत्पत्तिरिति वाच्यम् ? एतस्य गमकस्विनाऽप्रवृत्तेः । अव्यये तु "अव्ययादाबि"ति सूत्रस्थाव्ययपदं मानम् ।

किञ्च "सात्पदाद्योः"रितिसूत्रस्थसात्ग्रहणसामर्थ्यात्प्रत्ययस्य प्रातिपदिकत्वं न भवेत । नच पदादादिः पदादिरितिपञ्चमीसमासेन भाष्यकृता प्रत्याख्यानं कृतमिति भ्रमितव्यम् प्रत्याख्यानमस्तु इत्यन्यत् । आरम्भकल्पे चास्माकं विचार इत्यविरोधात् । नच प्रत्ययस्य प्रातिपदिकसंज्ञायां "फिषोऽन्त" इत्यनेनान्तोदात्तत्वापत्तिरप्रातिपदिकत्वे तु "प्रत्ययस्ये"त्याद्युदात्तो भवतीति वाच्यम् ? अनुदात्त इति प्रत्ययस्य इति बाधकात् । अर्थवद्ग्रहणवैयर्थ्यमापादितमधातुरिति पर्य्युदासेनैव लभ्येतेत्यपि न वाच्यम् ? किं राजाज्ञास्ति अधातुरिरितिपर्य्युदासेनार्थबोधजनकत्वेनैव साहश्यं गृह्यते नत्वेतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षयेत्यनेनापीत्येतेन धर्मेणापि साहश्यमवश्यं भवेत इति । नचैतत्पदकदम्बः साहश्यशक्त्या कथं लभ्येतेति वाच्यम् ? कात्स्न्यर्यं नियमोऽल्पशब्देनैव साहश्यं न बहुशब्दकूटेनेति क्व शास्त्रे धर्मशास्त्रादौ लिखितोऽस्ति किमिति नायम्विरोधः । "न केवलाः कृतस्तद्धिता वा" इति भाष्यविरोधस्तु न, तस्यायमाशयः केवलाः कृतस्तद्धिता वा अर्थवन्तोऽपि न प्रातिपदिकसंज्ञकाः ( एषामस्तुः कल्पम् ) सन्तीत्यविरोध इति । पञ्चनावप्रियः पञ्चगवधनः इत्यादौ तु न संज्ञा, सन्निपातपरिभाषयैव वारणसम्भवात् । हरिष्वित्यादौ संख्याया उक्तत्वात्फलाभावात् भाष्येऽर्थवत्प्रातिपदिकमित्येव सूत्र इति स्वीकारेणादोषाच्च । उपस्थितित्वप्रतिबन्धकतावच्छेदकत्वेत्याद्यगण्यं गौरवन्तु प्रत्यय इत्यादिकरणे नैयाकरणेत्विदानीं तेषां छतरामदर्शनात् । शब्दस्वरूपं विशेष्यमादायापि कृदन्ततदादिशब्दस्वरूपसित्यर्थेनापि प्रत्यये न दोषः । कृत्तद्धितान्तमर्थवत्सत्प्रातिपदिकसंज्ञकम् ।

ननु यथा रामशब्दस्य संज्ञा तथा तद्घटकरेफस्य कुतो नेति चेन्न ? अर्थविप-

-यकबोधजनकत्वप्रकारकतात्पर्य्यीयविशेष्यतावत्त्वमित्येवार्थविषयकबोधजनकत्वमित्य-स्यार्थः । एवञ्च रेफे तात्पर्य्यीयविशेष्यताया अभावान्न संज्ञा । यथा रामपदं दाश-रथिरूपार्थबोधजनकमित्येव तात्पर्य्यात् । यदि रपदं किञ्चिदर्थबोधजनकमिति तात्प-र्य्यं चिकीर्ष्येत तदेष्टापत्तेरेतद्घटकस्य रेफस्य तु समुदाय एव शक्तिरिति । नन्वेत-ल्लक्षणे अर्थबोधजनकता किंरूपा फलोपधायकतारूपा स्वरूपयोग्यतारूपा वा । फलो-पधायकत्वञ्च, कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरणवृत्तित्वम् । स्वरू-पयोग्यत्वञ्च कारणतावच्छेदकधर्मवत्त्वम् । तत्र फलोपधायकता तु वक्तुमप्यशक्या, शुकोच्चारिते बालोच्चारिते वा संज्ञा न स्यात । स्वरूपयोग्यतापि न रमाया नयन-मित्यत्र–यनशब्दानुपूर्वीबोधसत्त्वात्प्रातिपदिकत्वं स्यात् । सत्यां छपो लुक् स्यात मूलकेनोपदंशंभुङ्क्ते केनेत्यानुपूर्वीमादाय तु न दोषः छपो लुकि विकल्पफलं व्यर्थं स्यात।साहचर्य्येण वारणेऽपि फिषोऽन्तोदात्तः स्यात् । तर्हि अत्र फलोपधायकतारू-पैव बोधजनकता । शुकोच्चारिते तु उच्चारयितुस्तात्पर्य्येण संज्ञा भवेत । ननु नह्य-वयवापर्य्याप्तस्य समुदाये पर्य्याप्तिरस्तीतिनियमेन यथा रामशब्दे बोधजनकता तथा रेफादावपि संज्ञा स्यात् फलाभावात समुदायनैव संख्याया उक्तत्वात फिषोऽन्तो-दात्तत्वापत्तिरति चेन्न ? संज्ञाविधेयस्थले संज्ञीयोद्देश्यतावच्छेदकप्रतियोगिकपर्य्या-प्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपावच्छिन्नानुयोगितानिरूपकपर्य्याप्तिप्रतियोगित्वं संज्ञायां नियमेन भासते इति नियमेन समनियतधर्मस्यैवावच्छेदकत्वमिति स्वीका-रेण तादृशधर्मस्तु रामगततत्तद्व्यक्तित्वमेव न रेफवृत्तित्वमित्यदोषात । नन्वेवं नि-यमेऽपि समुदाये पर्य्याप्तधर्मस्य प्रत्येकं पर्य्याप्तत्वनियमात्पुनरपि समुदायविशिष्टां संज्ञामवयवे चारोप्य स्वाद्युत्पत्तिः स्यादिति चेन्न ? पूर्वोक्तनियमेन "स्वौजसि" त्यस्यायमर्थः । प्रातिपदिकनिष्ठा यावधिता तादृशावधितानिरूपकपरत्वविशिष्टाः स्वाद्यः साधवः, अवधितायां प्रातिपदिकसंज्ञाप्रतियोगिकपर्य्याप्त्यनुयोगिताव-च्छेदकं यद्रूपं तद्रूपावच्छिन्नप्रतियोगितानिरूपकपर्य्याप्तिप्रतियोगित्वविशिष्टपरत्व-वन्तः स्वादयः साधव इति न दोषः ।

नच रामपदवाच्यस्यार्थस्य दाशरथिरूपस्य रेफे ग्रहणं कृत्वा प्रातिपदिकत्वं स्यादिति वाच्यम् ? स्वविशिष्टत्वमर्थवत्वम् वैशि० स्वविषयकबोधजनकत्वप्रकार-कतात्पर्य्यीयविशेष्यतावत्व स्वनिरूपितशक्तिमत्त्वैतदुभयसम्बन्धेन । प्रथमसम्ब-न्धघटनेऽपि द्वितीयसम्बन्धाभावान्न संज्ञेति बोध्यम् ।

नतु स्वविषयकबोधजनकेत्युक्तौ रामपदं दाशरथिविषयकबोधजनकं भवतु अत्र बोधजनकत्वप्रकारकपदनिष्ठताऽपर्य्यायविशेष्यतास्ति । दाशरथिविषयको बोधो रामपदजन्यो भवतु अत्र जन्यत्वप्रकारकबोधविशेष्यको बोधः । दाशरथिः रामपदजन्यबोधविषको भवतु रामपदजन्यदाशरथिविषयकबोधानुकूल्यापारवानहं भवेयं स्याम्वा अत्रार्थप्रकारकास्मद्विशेष्यको बोधः । तथाचेत्यादिबोधसम्भावनया कथं रामेत्यस्य संज्ञेति चेन्न ? रामपदं दाशरथिविषयकबोधजनकं भवतु इति बोधस्य सर्वत्र प्रसरत्वात् । तदपि न, नियामकाभावेनैतत्समाधेरयुक्तत्वात् । क धर्मशास्त्रादौ दृष्टःइत्यत आह—स्वविषयकबोधीयविषयतानिरूपिता या तात्पर्य्यीयविषयता तादृशविषयतावत्त्व-स्वनिरूपितशक्तिपर्य्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन वस्तुविशिष्टत्वमर्थवत्त्वम् । कुत्रचित्पदनिष्ठा कुत्रचित्पदार्थनिष्ठा कुत्रचिदर्थनिष्ठा इति प्रकारेण प्राचीनमतमेव ज्याय इति प्राहुः ।

## अर्थवत्सूत्रीयोभयाऽभावप्रकारः-

वैयाकरणमतेऽतिरिक्तविशिष्टशक्तिस्वीकारादधातुरित्यस्य धातुप्रतियोगिकभेदवानित्यर्थः । धातुप्रतियोगिकभेदवदभिन्नं यदर्थवच्छब्दस्वरूपन्तत्प्रातिपदिकसंज्ञं स्यादिति सूत्रार्थे भूभिन्नः पच् पच्भिन्नो भू इति चालनीन्यायेन यत्किञ्चिद्धातुभेदस्य

---

केचित्तु—

धातुत्वावच्छिन्नप्रतियोगिताकभेदत्वव्यापककूटत्वावच्छिन्नाधिकरणत्ववदभिन्नं यदर्थवत्तदभिन्नं शब्दस्वरूपम्प्रातिपदिकसंज्ञं स्यात् । कूटत्वञ्च एकविशिष्टाऽपरत्वरूपम् । एवञ्च कूटत्वाश्रयैकभेदस्य धातौ सत्त्वेऽपि [कूटत्वावच्छिन्नाधिकरणत्वाऽभावाद् दोषाऽभावात् ।

सूक्ष्मेक्षितारस्तु—

धातुर्न तद्धातुर्न धातुत्वेन घटोनेत्यादिविलक्षणप्रतियोगिताद्दर्शनेन—धातुविशिष्टभेदवत्त्वन्धातुभिन्नत्वम् । वैशिष्ट्यञ्च० विलक्षणप्रतियोगितासम्बन्धेन । तथाच धातुर्नेतिप्रतीतिसिद्धविलक्षणप्रतियोगितासम्बन्धेन धातुविशिष्टत्वस्य तद्धातुभेदादावभावेन क्षतिविरहादिति तत्त्वम् ।

वस्तुतस्तु—

अभेदसम्बन्धावच्छिन्नधातुत्वावच्छिन्नप्रकारताकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारताश्रयभेदवदभिन्नं यदर्थवच्छब्दस्वरूपन्तत्प्रातिपदिकसंज्ञं स्यादिति सूत्रार्थः । उभयभेदादिप्रकारताया प्रतिबन्धकतावच्छेदकत्वेन तमादाय दोषाऽभावात् ।

यत्किञ्चिद्धातौ सुतरामविद्यमानत्वाद् यत्किञ्चिद्धातुप्रतियोगिकभेदसत्त्वे कस्यचिद्धातोः प्रातिपदिकत्वं स्यादेवेति चेन्न ? अर्थवत्सूत्रस्य-१।२।४५ प्रथमाध्यायद्वितीयपादपञ्चचत्वारिंशत्सूत्रात्मकत्वेन "भूवादयो धातव" इत्यस्य १।३।१ प्रथमाध्यायतृतीयपादप्रथमसूत्रात्मकत्वेन तृतीयाध्यायस्थत्वेन परत्वात्प्रातिपदिकसंज्ञाम्बाधित्वा "सकृद्गतौ विप्रतिषेधे यद्बाधितन्तद्बाधितमेवे"तिपरिभाषाबलेन यत्किञ्चिद्धातावपि प्रातिपदिकसंज्ञाया अप्रवृत्तेः। किञ्च यत्किञ्चिद्धातौ प्रातिपदिकसंज्ञायाः सम्भावनेऽधातुग्रहणवैयर्थ्यापातः। यत्किञ्चिद्धातौ निषेधः यत्किञ्चिद्धातौ प्रातिपदिकसंज्ञेति विचित्रभावनायामर्थवत्सूत्रेऽधातुपदम्विहाय यावद्धातौ निषेध इष्टस्तावद्धातूनां सर्वादिगणवद्पचादिरिति पाठः कार्यः। पचादिभिन्नं शब्दस्वरूपं प्रातिपदिकं स्यादित्यर्थेन निर्वाहे सामान्यरूपेणाऽधातुपदोपादानवैयर्थ्यमिति व्याख्यानाच्च। नच नञर्थभेदे यत्किञ्चित्प्रतियोगिन एवान्वये घटसत्त्वेऽपि प्रयागीयघटाऽभावतात्पर्येण घटो नास्तीति प्रतीत्यापत्तिरिति वाच्यम् ? एवं लौकिकप्रतीतिबलेनैव नञर्थभेदे धातोस्स्ववृत्तिधातुत्वावच्छिन्नप्रतियोगिता-कत्वसम्बन्धेनैवान्वय इति भेदस्य प्रतियोगितावच्छेदकेन सह विरोधाद् यत्किञ्चिद्धातौ प्रातिपदिकसंज्ञाया अप्रवृत्तेः। नच भूधातुर्धातुघटोभयन्नेतिप्रतीतौ विषयीभूतो यो धातुत्वघटत्वोभयत्वावच्छिन्नप्रतियोगिताको भेदस्तस्य धातुत्वावच्छिन्नप्रतियोगिताकत्वमस्त्येव तस्य च धातौ सत्त्वात्प्रातिपदिकत्वं यत्किञ्चिद्धातौ स्यादेवेति वाच्यम् ? धातुत्वमात्रावच्छिन्न-

---

भेदत्त्वञ्च—

अनुयोगिताविशेषधर्म एव नतु तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावत्वम्। संयोगस्य संयोगितादात्म्याऽभिन्नतया संयोगसम्बन्धावच्छिन्नप्रतियोगिताकसंयोगत्यन्ताऽभावेऽतिव्याप्त्यापत्तेः।

अत्र स्थले भेदवत्ता च स्वरूपसम्बन्धेन। अतः कालिकसम्बन्धेन धातुभेदस्य धातौ विद्यमानत्वेऽपि दोषाऽभाव इति। ननु

नञ्समासे चापरस्य प्राधान्यात्सर्वनामता।
आरोपितत्वन्नञ्द्योत्यन्नह्यसोऽप्यतिसर्ववत॥

असर्वस्मै असः इतिरूपसिद्धये वैयाकरणमते आरोपितत्वन्नञर्थो यद्यपि तथापि आरोपितत्वन्नाम आरोपजन्यप्रतीतिविषयत्वम्।एतल्लक्षणकुक्षौ निक्षिप्तं यदारोपत्वम् तल्लक्षणसन्निविष्टाभावाऽभिप्रायेण पूर्वोक्तोभयाभावादिशाब्दार्थानां जागरूकत्वात्।आरोपत्वञ्च बाधकालिकेच्छाजन्यज्ञानविषयत्वम्। बाधश्च तत्तदभावरूप इत्याकूतम्।

प्रतियोगिताकभेदवदभिन्नमर्थवच्छब्दस्वरूपम्प्रातिपदिकं स्यात्, अन्ययोगव्यवच्छेदो हि मात्रशब्दार्थः धातुत्वावच्छिन्नधातुत्वेतरधर्मानवच्छिन्नप्रतियोगिताकभेदवदभिन्नं यदर्थवच्छब्दस्वरूपन्तत्प्रातिपदिकसंज्ञं स्यादिति सूत्रार्थेन प्रकृते धातुत्वेतरघटत्वध-र्मावच्छिन्नत्वस्याऽपि प्रतियोगितायां सत्वात धातुत्वमात्रावच्छिन्नप्रतियोगिताया असत्वाद्धातौ प्रातिपदिकत्वाऽप्रवृत्तेः। व्यासज्यवृत्तिधर्मानवच्छिन्ना शुद्धधातुत्वा-वच्छिन्ना धातुनिष्ठा या प्रतियोगिता तन्निरूपकभेदग्रहणमिति फलितार्थो मात्रपद-निवेशस्येति। नच धातुत्वेतरधर्मावच्छिन्नत्वघटोभयन्नास्ति व्यासज्यवृत्तिधर्माव-च्छिन्नत्वघटोभयन्नास्तीतिप्रतीतिसाक्षिकाऽभावमादायोभयभेदग्रहणसम्भवेन पूर्वोक्ता-पत्तिर्दुरुद्धरेति वाच्यम्? केवलधातुत्वपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्प्रति-योगितानिरूपको यो भेदस्तस्य प्रकृते ग्रहणादुभयभेदीयप्रतियोगितावच्छेदकताया धातुत्वघटत्वउभयत्वरूपधर्मत्रयपर्याप्तत्वेन केवलशुद्धधातुत्वाऽपर्याप्तत्वात। नच यथा त्रितयपर्याप्ता प्रतियोगितावच्छेदकता तथा प्रत्येकपर्याप्ताऽपि, समुदायस्य प्र-त्येकानतिरिक्तत्वात् मानाऽभावाच्चेति वाच्यम्? घटःघटो न पटो नेतिप्रतीतिर्न भवति किन्तु घटःघटपटौ नेत्येव लौकिकी प्रतीतिर्भवति, त्रितयपर्य्याप्तावच्छेदकता-म्विना पूर्वोक्तवाक्ये वैलक्षण्याऽसिद्धेः। नच नह्युभयत्वाऽपर्याप्तधर्मस्य समुदाये पर्या-प्तिरितिन्यायेन त्रितयपर्याप्ता प्रतियोगितावच्छेदकता प्रत्येकपर्य्याप्ताऽपीतिवाच्यम्? धातुत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यता-वत्प्रतियोगितानिरूपकभेदस्य ग्रहणात्। अत्र त्रितयपर्याप्ता अवच्छेदकता या सा एव धातुत्वपर्याप्ता, पर्याप्तिरपि तस्या एकैव, त्रितये वर्त्तमाना धातुत्वेऽपि वर्त्तते। अनुयोगिताऽपि तथैव धातुत्वे विद्यते तस्या एकत्वात्। परन्तु तदन्यूनानतिरि-क्तवृत्तित्वमेवावच्छेदकत्वन्तच्च त्रितयसमुदायगतं त्रित्वमेव न तु धातुत्वादिगत-मेकत्वन्तस्य न्यूनवृत्तित्वात् इतिधातुत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रति-योगिनी न साऽवच्छेदकता, अत एवोभयमादाय न क्षतिरित्याशयात। नच अनु-योगिताया पर्य्याप्तिर्यद्यप्यवच्छेदकतात्वेन रूपेण त्रिष्वेव न प्रत्येकन्तथापि वस्तु-त्वादिसामान्यधर्मेण अनुयोगिताया धातुत्वादिषु प्रत्येकमिति तदनुयोगिताव-च्छेदकञ्च धातुत्वादिगतमेवेति पूर्वोक्तदोषो दुरुद्धर एवेति वाच्यम्। स्वनिरूपिता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन धातुत्व-गतैकत्ववृत्तिप्रतियोगितानिरूपकभेदवदभिन्नं यदर्थवच्छब्दस्वरूपन्तत्प्रातिपदिकसंज्ञं

स्यादिति सूत्रार्थकरणेन वस्तुत्वावच्छिन्नप्रतियोगिताकपर्य्याप्तेस्सामान्यरूपाया ग्रहणाऽभावेनाक्षतेः । ननु सकलब्राह्मणव्यक्तिषु वर्त्तमानं यद् ब्राह्मणत्वन्तच्च एतद्ब्राह्मणवृत्तित्वविशिष्टब्राह्मणत्वत्वेन धर्मेण एतद्ब्राह्मण एव यथा वर्त्तते तथैव रीत्या पूर्वोक्तप्रकारेऽवच्छेदकता त्रितयपर्य्याप्ताऽपि, परन्तु धातुत्ववृत्तित्वविशिष्टावच्छेदकतात्वेन रूपेण धातुत्व एवास्तीति धातोः कस्यचित्प्रातिपदिकत्वन्दुर्वारमेवेति चेन्न ? धातुत्वगतैकत्ववृत्तिप्रतियोगितानिरूपकभेदवदभिन्नमर्थवच्छब्दस्वरूपम्प्रातिपदिकसंज्ञकमिति सूत्रार्थः । धातुत्वञ्च प्रतियोगितायां स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्तिसम्बन्धावच्छिन्नाऽधेयतानिरूपिताऽऽधारतावच्छेदकत्वसम्बन्धेन । समन्वयस्स्वयमूह्यः । ननु व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदमादाय धातोः प्रातिपदिकत्वं स्यादेव धातुत्वेन घटो न धातुरित्याकाराश्रयणात् एतद्भेदस्य निरुक्तभेदरूपत्वात् । अन्येऽप्येवमेव दोषा अन्वेष्या इति चेन्न ? एतद्भेदीयप्रतियोगिताया घटनिष्ठत्वेनात्र प्रतियोगिताया धातुनिष्ठाया एव ग्रहणेन नात्र दोषलेश इति वर्णनात् । न च धातुत्वेन भू एध् नेति सामान्यधर्मावच्छिन्नप्रतियोगिताकविशेषभेदमादाय दोषो दुरुद्धरस्तदीयप्रतियोगितायाः धातुनिष्ठत्वादिति वाच्यम् ? धातुत्वव्यापकत्वेन प्रतियोगिता विशेषणीया प्रकृते च एध्निष्ठैव न तु धातुत्वव्यापिकेति दोषाऽभावात् । ननु धातुत्वेन धातुघटोभयन्नास्तीति भेदमादाय दोषो दुर्वारः एतद्भेदीयप्रतियोगिताया धातुत्वव्यापकत्वादिति चेन्न ? धातुत्वविशिष्टो यो भेदस्तादृशभेदविशिष्टाऽभिन्नं यदर्थवच्छब्दस्वरूपन्तत्प्रातिपदिकं स्यात् । वैशिष्ट्यञ्च स्वावच्छिन्नप्रतियोगितानिरूपकत्व स्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्त्वैतदुभयसम्बन्धेन । लक्षणसमन्वयश्च धातुत्वेन धातुर्नेतिवाक्य एव न तु धातुत्वेन घटो न धातुरित्यादाविति । किञ्च धातुत्वगतैकत्ववृत्तिभेदवदभिन्नं यदर्थवदित्यप्यर्थः । धातुत्वगतैकत्ववृत्तिता च भेदे स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन । समन्वयस्स्वयमूह्यः । नच व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकं धातुत्वेन संयोगेन धातुर्नधातुरित्येवम्विधभेदमादाय तस्य केवलान्वयित्वेन धातौ सत्त्वादिति वाच्यम् ? सम्बन्धे स्वरूपसम्बन्धावच्छिन्नाऽवच्छेदकता गृह्यते । इयन्तु संयोगसम्बन्धावच्छिन्नेत्यदोषात् । नच स्वरूपसंयोगोभयसम्बन्धेन धातुत्वेन

धातुर्नेतिभेदमादाय दोषसत्ता, स्वरूपपर्याप्तावच्छेदकताकावच्छेदकतायाः निवेशेऽपि न निर्वाहसम्बन्धः । स्वरूपसंयोगोभयपर्याप्ताया अपि स्वरूपपर्याप्तत्वादिति वा-वाच्यम् ? स्वनिरूपितप्रतियोगितावच्छेदकतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्र-तियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वरूपतृतीयसम्बन्धो देयः । उभयसम्बन्धा-वच्छिन्नावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक-ता च धातुत्वस्वरूपस्वरूपसंयोगोभयगतद्वित्वेऽस्ति नतु धातुत्वस्वरूपस्वरूपगतैकत्वे इति उभयसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदमादाय दोषाऽसत्त्वात् । नच धातुत्वेन घटो न घटत्वेन धातुनेति भेदद्वयस्य समनियतत्त्वेनैक्यम् तयोश्च धाता-वपि सत्त्वेन तद्भेदस्य निरूपकतावच्छेदकता अन्तिमप्रतीतिमादाय, प्रतियोगिताव-च्छेदकता च आद्यप्रतीतिमादाय, तामेवादाय प्रतियोगितावच्छेदकतावच्छेदकता-वच्छेदकता च धातुत्व एवास्तीति स भेद उक्तसम्बन्धत्रयेण धातुत्वगतैकत्वे वर्त्तत इति तमादाय धातोऽप्रातिपदिकत्वं स्यादेवेति वाच्यम् ? धातुत्वगतैकत्ववृत्ति-प्रतियोगितानिरूपकभेदस्य विवक्षितत्वात् । वृत्तिता च स्वावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिता-कपर्याप्त्यनुयोगितावच्छेदकत्व स्वानुयोगितावच्छेदकाभावत्वावच्छिन्ननिरूप्यतानि-रूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वैत-त्त्रितयसम्बन्धेन । स्वम्प्रतियोगिता यस्याऽप्रतियोगितायाः धातुत्वमवच्छेदकं तान्निरूपितानुयोगितावच्छेदकाऽभावत्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावच्छेद-कं घटत्वम्' यन्निरूपितानुयोगितावच्छेदकाऽभावत्वावच्छिन्ननिरूप्यतानिरूपित-निरूपकतावच्छेदकं धातुत्वम् तस्याः अवच्छेदकञ्च घटत्वमिति नेयम्प्रतियोगिता निरुक्त द्वाप्रयोजककुक्षिप्रविष्टेति घटत्वावच्छिन्ननिरूपकताकभेदत्वावच्छेदेन धातु-त्वावच्छिन्नप्रतियोगितानिरूपकत्वम् । धातुत्वावच्छिन्ननिरूपकताकभेदत्वावच्छेदेन चास्य भेदस्य घटत्वावच्छिन्नप्रतियोगिताकत्वमेवेति सर्वमवदातम् ।

## कृत्तद्धितेति—

राजपुरुष इत्यादौ राजन् ङस् पुरुष सु इति समासेऽपि धातुप्रत्ययप्रत्ययान्तभि-न्नत्वात्पूर्वसूत्रेण प्रातिपदिकसंज्ञासिद्धौ समासग्रहणन्नियमार्थमिति । ननु राजन् ङस् पुरुष सु इत्यादौ प्रत्ययान्तत्वस्य विशेषतश्श्रूयमाणत्वात्कथम्पूर्वसूत्रेण सि-द्धिरिति चेन्न ? प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभा-

यथा प्रत्ययान्ततदादिभिन्नस्येत्यर्थेन राजन् ङस् पुरुष सु इत्यत्र प्रत्ययान्तत्वेऽपि तदादित्वाऽभावात् । ननु प्रत्ययोऽन्तोऽन्तावयवो यस्य स प्रत्ययान्तः, तदादिपदस्यार्थः तत्पदेन बुद्धिविषयत्वात्प्रकृतिर्गृह्यते तत्प्रकृतिरूपमादिर्यस्य स तदादिः तत्तत्प्रकृतिप्रत्ययविशिष्टसमुदायः प्रत्यायान्तपदार्थः । तत्तत्प्रकृतिप्रत्ययविशिष्टसमुदायस्तदादिपदार्थं इति फलितार्थः ।

एतदभिप्रायेणैव प्रत्ययविशिष्टचरमावयवतानिरूपकत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठाऽद्यवयवतानिरूपकत्वोभयसम्बन्धेन । राजन् अस् पुरुष स् इति समुदाये आद्यसम्बन्धाभावात् ङसमाश्रित्य द्वितीयसम्बन्धाऽभावात् सुमादाय न प्रत्ययविशिष्टत्वम्। तथापि स्ववृत्तिव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकस्वप्रतियोगिको भेदो न भवति इति सार्वजनीनो नियमोऽत एव घटपटसमुदायो न घट इति प्रतीतिर्न भवति। एवञ्च प्रकृते प्रत्ययान्तसमुदायत्वावच्छिन्नानुयोगिताकप्रत्ययान्तप्रतियोगिकभेदोऽपि न भवेत्तथा च प्रत्ययान्तसमुदाये राजन् ङस् पुरुष सु इत्यत्र कथङ्कारम्प्रत्ययान्तभिन्नत्वमिति चेन्न ?

अनुयोगितावच्छेदकत्वम्विनैव प्रत्ययान्तसमुदायत्वे शुद्धनिरवच्छिन्नानुयोगिताकप्रत्ययान्तत्वावच्छिन्नप्रतियोगिताक एव भेदस्स्वीकार्य्य इत्यप्यविरोधी नियम इति न क्षतिः । किञ्च प्रत्ययान्तसमुदाये तद्व्यक्तित्वावच्छिन्नानुयोगिताक एव प्रत्ययान्तभेदस्तमादाय दोषाऽभावात् । अत एव स्वाङ्गसमुदायो न स्वाङ्गमिति सखिसमुदाये सखिभिन्नत्वमिति भाष्यानुयायिनश्शाब्दिकाः । न च निरवच्छिन्नानुयोगिताकभेदमादायैव घटपटसमुदायो न घट इति वाक्यम्प्रामाणिकमेव स्यादिति वाच्यम् ? असति प्रतिबन्धके उद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वय इति नियमेन घटपटसमुदायो न घट इति वाक्ये भेदस्यैव विधेयत्वेन निरवच्छिन्नानुयोगिताकभेदस्य भानाऽसम्भवादुक्तवाक्यस्याऽप्रामाणिकत्वात् । अर्थवत्सूत्रीयप्रत्ययान्तसमुदाये तु न भेदो विधेयोऽपि तु प्रातिपदिकसंज्ञेति तत्र निरवच्छिन्नानुयोगिताकभेदस्य प्रत्ययान्तसमुदाये स्वीकारे न कोऽपि विरोध इति तत्त्वात् ।

### अत्र पूज्यचरणाः

प्रत्ययान्तत्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिताक एव भेदो विषयस्तस्य सत्त्वे बाधकाऽभाव इत्याहुः ।

### नियमशास्त्रीयविचारः

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ १ ॥

"स्वर्गकामो यजेत, अहरहस्सन्ध्यामुपासीत" यागसन्ध्ययोरत्यन्ताप्राप्तत्वाद्विधित्वम् । "व्रीहीनवहन्ति, समे यजति" नखविदलनावहननाभ्यां व्रीहेर्निस्तुषोकरणम्प्राप्तन्तत्र नखविदलनेनैव यदा तुषविमोकेच्छा तदा मुशलाद्यवघातस्याऽप्राप्तत्वात्पाक्षिकस्य तस्य विधानात् । एवम्विषमदेशे सुलभतया यागकरणेच्छा तदा समदेशाधिकरणकयागः पाक्षिक इति तत्र नियमः । मुशलाद्यवघातेनैव स्वच्छतण्डुलप्राप्तिर्न तु नखविदलनेन । समदेशाधिकरणकयागेनैवापूर्वोत्पत्तिर्न विषमदेशाधिकरणयागेनेति नियमः ।

क्षुन्निवृत्त्यर्थम्पञ्च पञ्चनखा भक्ष्या इति पञ्चनखेषु भक्षणम्प्राप्तमन्यत्रापि श्वमांसादिभक्षणेनापि क्षुन्निवृत्तिः कर्तुं शक्या प्राप्ताऽप्राप्तविवेकेन परिसंख्या । एवञ्च व्रीहीनवहन्ति समे यजतोतिवत् प्रातिपदिकत्वस्य पाक्षिकत्वाऽभावान्नियमत्वाऽप्राप्त्या परिसंख्यैव समासे प्राप्नोति वाक्ये च न प्राप्नोति कथन्नियमत्वम् परिसंख्यासंघटनादिति चेन्न ? अन्यनिवृत्तिरूपनियमसाधर्म्येण शास्त्रेऽस्मिन् परिसंख्याया अपि नियमशब्देन व्यवहारात् । नियमशास्त्राणान्निषेधमुखेन प्रवृत्तिर्विधिमुखेन च । अत्र निषेधमुखेन प्रवृत्तौ समासेतरस्य पूर्वभागपदघटितसमुदायस्य प्रातिपदिकसंज्ञा न भवति समासग्रहणमिदमेव व्यर्थं सत्फलितङ्करोति । विधिमुखेन प्रवृत्तौ तु वैयर्थ्यसम्पादकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचः । निषेध्यांशनिरासपूर्वकप्रातिपदिकसंज्ञाया विधानम् । पूर्वविधिसूत्रे पूर्वभागपदघटितसमुदायातिरिक्तत्वेन सङ्कोचः । वाक्यभिन्नं शब्दस्वरूपम्प्रातिपदिकं स्यादिति यावत् । विधेयांशकुक्षौ निषेध्यांशान्तर्भावः । परन्तु निषेधमुखेन प्रवृत्तौ प्राप्तबाधस्वार्थत्यागपरार्थकल्पना निषेधार्थकनशब्दाऽऽयोजनेति गौरवमतो विधिमुखेनैव प्रवृत्तिरिति स्वीकुर्वन्ति नवीनाः । तत्र निषेधमुखेन प्रवृत्तौ नियमाऽकारो दृश्यताम् , स्वीयोद्देश्यतावच्छेदकव्यापको यस्स्ववैयर्थ्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यो धर्म्मस्तद्धर्मावच्छिन्नस्य स्वीयोद्देश्यतावच्छेदकधर्मावच्छिन्नातिरिक्तस्य स्वविधेयाऽभावो बोध्यते । संघटना तु स्वं समास इति तदोयोद्देश्यतावच्छेदकं समासत्वम् तद्व्यापकम् अर्थवत्सूत्रीयोद्देश्यतावच्छेदकमर्थवत्त्वन्तद्व्याप्यः पूर्वभागपदघटितसमुदायत्वधर्म्मस्तदवच्छिन्नस्य समासत्वावच्छिन्नातिरिक्तस्य वाक्यस्य

प्रातिपदिकसंज्ञाऽभावस्समासग्रहणेन बोध्यते । विधिमुखेन प्रवृत्तौ नियमाऽकारस्तु स्वीयोद्देश्यतावच्छेदकव्यापको व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यो यो धर्मस्तद्धर्मावच्छिन्नातिरिक्तत्वेन व्यर्थवाप्रयोजकार्थवत्सूत्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचः । समासत्वावच्छिन्ने प्रातिपदिकसंज्ञा अन्यसूत्रेण केनाऽपि न प्राप्ताऽतस्समास ⌣ प्रातिपदिकसंज्ञको भवति इति विधिमुखत्वम् । अर्थात्पूर्वभागपदघटितसमुदायातिरिक्तं यदर्थवच्छब्दस्वरूपन्तत्प्रातिपदिकसंज्ञकमिति फलितार्थे स्वीक्रियमाणे पूर्वसूत्रेण समासे वाक्ये चोभयत्र न प्राप्नोति प्रातिपदिकसंज्ञेति उत्तरसूत्रेण समासे विधीयते । वाक्ये च पूर्वसूत्रे सङ्कोचान्न भवति । समासग्रहणं कार्यद्वयं करोति पूर्वसूत्रे सङ्कोचं विधानञ्च कौमुदीकारो निषेधमुखेन प्रवृत्तिम्मनुते तदेवाह वाक्यस्य नेति ।

शेखरकारस्तु लाघवानुयायी विधिमुखेन प्रवृत्तिं संयोजयति ।

तन्मते पदशब्दस्स्वातन्त्र्येण प्रयोगार्हार्थवत्परः एवञ्च स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वभागकस्य स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरभागकस्य प्रातिपदिकसंज्ञा चेत्तर्हि समासस्यैवेत्यभिप्रायः । एवन्नियमाकारेणैव पुत्रकाम्या जन्मवान् बहुच्प्रत्ययपूर्वकबहुपटव इत्यादिषु न क्षतिः । अङ्गसंज्ञासूत्रीयप्रत्ययग्रहणपरिभाषाप्रयोजनदर्शनपरकदेवदत्तो गार्ग्यं इत्यादौ यञन्तमात्रस्योत्तरभागस्य विभक्तिरहितस्य स्वातन्त्र्येण प्रयोगार्हत्वाऽभावान्नियमाऽप्रवृत्त्या प्रत्ययग्रहणपरिभाषाफलप्रदानं युक्ततरमेव । कौमुदीमूलोक्तनियमस्वीकारे तु नियमेनैव प्रातिपदिकत्ववारणसम्भवे फलप्रदानमनर्थकं स्यात् । नच प्रत्ययग्रहणपरिभाषाऽभावे पूर्वसूत्रे न केवला प्रकृति ⌣ प्रयोक्तव्या नापि केवल ⌣ प्रत्यय इतिप्रत्ययग्रहणे तदन्तग्रहणमितिबलेन प्रत्ययान्तत्वसिद्ध्या समासे पूर्वसूत्राऽप्राप्त्या समासग्रहणस्य नियमार्थत्वाऽभावेन न भाष्यविरोध इति वाच्यम् ।

प्रत्ययग्रहणपरिभाषायामसत्यामपि न विद्यते प्रत्ययो यत्रासावप्रत्ययः, अन्यपदार्थश्च एकप्रकृतिप्रत्ययभिन्नसमुदाय इति नियमार्थत्वसम्भवे प्राचाम्भाष्यविरोधस्सुकर इत्याशयात् । ननु देवदत्तो गार्ग्यं इत्यत्रैतत्संज्ञाफलभूतेतिलक्षणाऽसङ्घटनेनार्थवत्त्वाऽभावात्प्रातिपदिकसंज्ञाया अप्रवृत्त्या प्रत्ययग्रहणपरिभाषया वारणमसङ्गतमेवेति चेन्न ? उत्तरसूत्रेऽर्थवत्पदानुवृत्त्या अर्थवदन्तं यत्तद्धितान्तं तत्प्रातिपदिकसंज्ञं स्यादित्यर्थाभिप्रायेणैव भाष्यसंयोजनात् । किञ्च प्रत्ययग्रहणपरिभाषाऽ-

भावे कृद्ग्रहणे गतिकारकपूर्वस्यैवेति परिभाषया नियमस्त्वसिद्धौ सपूर्वकस्य चेद् गतिकारकपूर्वस्यैवेतिनियमेन देवदत्त × पक्ता पाचक इत्यत्र फलाऽभावात्तद्धितांशे देवदत्तो गार्ग्यं इति फलप्रदानस्य सौष्ठवात् । साधारणास्तु देवदत्तो गार्ग्य इत्यत्रानर्थकत्वात्समासग्रहणव्यावर्त्याऽसम्भव इति समासग्रहणमिवष्यर्थमेवेति न प्रत्याम्भाष्यविरोधो देवदत्तो गार्ग्यं इत्यत्रत्य इति । सूक्ष्मदर्शिनस्तु सामान्यरूपेण प्रत्ययग्रहणपरिभाषाफलञ्जानाति भाष्यकारो विशेषरूपेण किम्फलमिति पृष्टे देवदत्तो गार्ग्य इत्याह अतो न कोऽपि विरोध इति ।

ननु विनिगमनावैकल्येन वैयर्थ्यसम्पादकशास्त्रीयोद्देश्यतावच्छेदकं यद्रूपं व्यर्थशास्त्रीयोद्देश्यतावच्छेदकव्यापकञ्च यद्रूपन्तद्रूपावच्छिन्नातिरिक्तत्वेनैव वैयर्थ्यसम्पादकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोच × कुतो न ? तथाहि वैयर्थ्यसम्पादकमर्थवदधातुरिति तदीयोद्देश्यतावच्छेदकधातुप्रत्ययप्रत्ययान्तभिन्नार्थवत्त्वं रूपम्व्यर्थीभूत“कृत्तद्धिते”तिसूत्रघटकसमासश्चेति, तदीयोद्देश्यतावच्छेदकं समासत्वन्तद्व्यापकमर्थवत्त्वमेव, उभयशास्त्रीयोद्देश्यतावच्छेदकव्यापकार्थवत्त्वातिरिक्तत्वेनाऽपि सङ्कोचे न क्षतिरिति चेन्न ? एवम्प्रकारेण सङ्कोचेऽर्थवदितरस्यार्थवच्छब्दस्वरूपस्याऽसम्भवेनार्थवत्सूत्रवैयर्थ्यापत्तेः । न चोभयोस्सङ्कोच्यसङ्कोचकशास्त्रयोर्व्याप्यत्वेनव प्रबन्धः । तत्प्रकारश्चेत्थम्—वैयर्थ्यसम्पादकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं व्यर्थीभूतशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं यद्रूपन्तद्रूपावच्छिन्नातिरिक्तत्वेनैवास्तु सङ्कोच इति वाच्यम् ? एवन्नियमपाकारे समासग्रहणवैयर्थ्यापत्तिस्तथाहि व्यर्थताप्रयोजकमर्थवदिति शास्त्रम् , तदीयोद्देश्यतावच्छेदकव्याप्यं व्यर्थीभूतसमासश्चेतिशास्त्रीयोद्देश्यतावच्छेदकव्याप्यञ्च रूपं यत्किञ्चित्समासत्वमेव सम्भवति । तथा च तादृशोभयशास्त्रीयव्याप्ययत्किञ्चित्समासत्वरूपधर्मातिरिक्तत्वेनैवार्थवदितिशास्त्रीयार्थवत्पदार्थ सङ्कोचापत्तौ धातुप्रत्ययप्रत्ययान्तभिन्नयत्किञ्चित्समासेतरार्थवच्छब्दस्वरूपम्प्रातिपदिकसंज्ञं स्यादित्य“र्थवदधातुरि”ति सूत्रस्यार्थे “कृत्तद्धिते”तिसूत्रघटकसमासश्चेत्यस्य यत्किञ्चित्समासे प्रातिपदिकसंज्ञाविधानमेव फलन्तच्चान्यथासिद्धम् । अर्थवदितिपूर्वसूत्रेणैव यत्किञ्चित्समासे प्रातिपदिकसंज्ञासिद्धेः । समासश्चेत्यस्य सुतराम्वैयर्थ्यादुभयशास्त्रीयव्याप्यातिरिक्तत्वेन सङ्कोचस्यानावश्यकत्वात् । तथा च वैयर्थ्यसम्पादकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं व्यर्थीभूतशास्त्रीयोद्देश्यतावच्छेदकव्यापकं यद्रूपन्तद्रूपावच्छिन्नातिरिक्तत्वेनैव वैयर्थ्यसम्पादकशास्त्रीयोद्दे-

-श्यतावच्छेदकावच्छिन्ने सङ्कोच इति नियमाकारऽफलितार्थः ।

ननु नवीनसम्मतविधिमुखेन प्रवृत्तिस्तु न लक्ष्यसाधिका किन्तु निषेधमुखे-नैव, तथाहि निषेधमुखेन प्रवृत्तेरेव प्रहण्यात् प्रहन्न्तीत्यादौ णत्वमेकत्र, अपरत्र तन्नि-षेधः अत्पूर्वस्येति नियमसूत्रम् "हन्तेरिति" विधिसूत्रम् तत्र वैयर्थ्यसम्पादक- "हन्ते" रितिशास्त्रीयोद्देश्यतावच्छेदकहन्धातुसम्बन्धिनत्वे सङ्कोचतावच्छेदकरूपा-वच्छिन्ने हन्धातुसम्बन्धिनकारे व्यर्थीभूत "अत्पूर्वस्ये" तिशास्त्रीयोद्देश्य-तावच्छेदकावच्छिन्न हन्धातुसम्बन्ध्यत्पूर्वकनकारेतरहन्धातुसम्बन्धिनकारस्य णत्वन्नेत्यर्थेन निषेधार्थकत्वस्य फलिततया हन्धातुसम्बन्ध्यत्पूर्वकनकारे प्रह-ण्यादित्यादौ "हन्ते" रित्यनेन णत्वम् । हन्धातुसम्बन्ध्यत्पूर्वकनकारेतरहन्-धातुसम्बन्धिनकारे प्रहन्न्तीत्यादावत्पूर्वस्येति निषेधाण्णत्वाभावसिद्धिः । पूर्वोक्त-रीतिमनुसृत्य विधिमुखेन प्रवृत्तौ तु वैयर्थ्यसम्पादक "हन्ते" रितिशास्त्रीयोद्दे-श्यतावच्छेदकमुपसर्गस्थनिमित्ताऽव्यवहितोत्तरत्वविशिष्टहन्धातुसम्बन्धिनत्वमेव । तद्व्याप्यं यद्व्यर्थीभूतात्परस्येतिशास्त्रीयोद्देश्यतावच्छेदकमत्पूर्वकत्वविशिष्ट-हन्धातुसम्बन्धिनत्वमेव तद्व्यापकञ्च हन्धातुसम्बन्धिनत्वमेव सङ्कोचकतावच्छेद-कम् । तथा च हन्धातुसम्बन्धिनकारातिरिक्तत्वेनैव सङ्कोचाद्धन्तेरिति सूत्रस्य हन्धातुसम्बन्धिनकारेतरहन्धातुसम्बन्धिनकारस्य णत्वमित्यर्थाऽपत्तौ प्रहण्या-दित्यादीष्टस्थले णत्वानापत्तेः । एवञ्च निषेधमुखेन प्रवृत्तिरेव गरीयसीतिचेन्न ? तत्तण्णत्वविधायकशास्त्रसामर्थ्यादुक्तनियमाकारस्याऽप्रवृत्तिकल्पनात् । नचोक्तनि-यमाकाराऽप्रवृत्तावपि*विधिमुखेन प्रवृत्तौ को भवेत्सूत्रार्थः, सूत्रार्थप्रबन्धे तु पूर्वोक्त-दोषो दुरुद्धर एव तथा च निषेधमुखेनाऽपि प्रवृत्तिर्नवीनैरप्यङ्गीकार्या । किञ्च

न मांसभक्षणे दोषो न मद्ये नच मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

इति मनुवाक्ये निवृत्तेऽप्राधान्यान्निषेधमुखेनैव प्रवृत्तिप्रामाण्याच्च । नच व्यर्थताप्रयोजक "हन्ते" रितिशास्त्रीयोद्देश्यतावच्छेदकहन्धातुसम्बन्धिनत्व-व्याप्यं यद् व्यर्थीभूतात्पूर्वस्येतिशास्त्रीयात्पूर्वकनत्वन्ताद्दशनत्वस्यैव सङ्कोचकता-वच्छेदकत्वमाश्रित्य तदतिरिक्तत्वेन सङ्कोचे न पूर्वोक्तप्रयोगाऽसिद्धिरिति वाच्यम् ? अत्पूर्वकत्वविशिष्टहन्धातुसम्बन्धिनत्वस्यैवोद्देश्यतावच्छेदकत्वेन शुद्धात्पूर्वकन-त्वस्योद्देश्यतावच्छेदकानाक्रान्तत्वेन तेन रूपेण सङ्कोचाऽसम्भवात् । एवञ्च निषेध-

मुखेनाऽपि प्रवृत्तिरिति । वस्तुतस्तु पञ्च पञ्चनखा भक्ष्याः भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यते । अथवा अभक्ष्यो ग्राम्यकुक्कुटः अभक्ष्यो ग्राम्यसूकरः। अभक्ष्यनियमेन भक्ष्यविधानङ्गम्यते इति भाष्याभ्यां क्वचिद् विधिमुखेन प्रवृत्तिः क्वचिन्निषेधमुखेन प्रवृत्तिस्तत्तत्प्रकरणतात्पर्यानुरोधात् । एवञ्च शेखरकारादिप्रबन्धो दुराग्रहग्रस्त इति शुक्लाः । "इन्हन्पूषार्यम्णां शौ" इत्यत्र तु "सौ च" इति सूत्रारम्भसामर्थ्यात् वृत्रहेत्यादौ दीर्घः, बहुवृत्रहाणीत्यादौ तु शिग्रहणसामर्थ्यात् दीर्घः "सर्वनामस्थाने" इति सूत्रे शुद्धेन्नहनाद्यतिरिक्तत्वेनैव सङ्कोचः ।

स्वातन्त्र्येण प्रयोगार्हत्वञ्च—

स्वप्रकृतिकप्रत्ययेतरसमभिव्याहारानपेक्षबोधजनकत्वम् । नच देवदत्तो गार्ग्य इत्यस्यापि तत्त्वापत्त्या देवदत्तो गार्ग्य इतिसमुदायस्य समासग्रहणनियमेनैव प्रातिपदिकत्वानापत्त्या प्रत्ययग्रहणपरिभाषाया अभावे तद्धितान्तत्वात्प्रातिपदिकत्वापादनपरभाष्यासङ्गतिरिति वाच्यम् ? यस्य समुदायस्य स्वातन्त्र्येण प्रयोगार्हपूर्वोक्तभागकसमुदायत्वम्विवक्षितं तस्य या संज्ञा तत्फलभूतविभक्तीतरसमभिव्याहारानपेक्षबोधजनकत्वम् राज्ञ इत्यस्य पुरुष इत्यस्य च पार्थक्येन स्वातन्त्र्येण प्रयोगार्हत्वम् ।

नच कुम्भङ्करोतीतिसमासे कार इत्यपूर्वपदसमभिव्याहारेणैव बोधकत्वेन स्वातन्त्र्येण प्रयोगार्हत्वाभावेन तत्समुदायस्य समासत्वव्यापकत्वानापत्तिरिति वाच्यम् ? विभक्तीतरपदार्थे पूर्वपदेतरत्वनिवेशस्य करणीयत्वात । नच प्रभवतीत्यादौ प्रशब्दस्य भवतिशब्दसमभिव्याहारेणैवार्थबोधकत्वात्स्वातन्त्र्येण प्रयोगार्हत्वाऽभावान्नियमानाक्रान्तत्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम् ? यत्किञ्चित्समुदायविशिष्टत्वं स्वातन्त्र्येण प्रयोगार्हत्वम् । वैशिष्ट्यञ्च—स्वघटकत्व स्वघटकप्रकृतिकप्रत्ययेतरत्व-स्वविशिष्टसमभिव्याहारानपेक्षबोधजनकत्वैतत्त्रितयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च—स्वनिष्ठसंज्ञाफलभूतविभक्तीतरत्व—स्वाघटकत्वोभयसम्बन्धेन, राज्ञः पुरुषः प्रभवति पञ्चगवधनः कुम्भकार इत्यादौ भवतिधनकुम्भापेक्षबोधजनकत्वस्य प्रादीनां सत्त्वेऽपि भवतीत्यादीनां तत्समुदायाऽघटकत्वाऽभावात् । कुम्भकारेतिसमासप्रकृतिकविभक्तिसापेक्षबोधजनकत्वेन कार इत्यस्य तत्त्वानापत्त्या स्वनिष्ठसंज्ञाफलेत्यादि । देवदत्तो गार्ग्य इत्यत्र देवदत्तो गार्ग्येतिसमुदायविशिष्टो गार्ग्य-

प्रकृतिकः सुप्रत्ययस्तत्समभिव्याहारेणैव बोधजनकत्वात्तत्त्वाऽभावेन न प्रत्ययग्रहण-परिभाषाभाष्यविरोधः ।

नन्वेवं देवदत्तेन कृतमित्यादौ देवदत्तेन कृतेत्यस्य कृद्ग्रहणपरिभाषया कृदन्त-तदादित्वेन प्रातिपदिकत्वापत्तिः । कृतेत्यस्योक्तयुक्त्या स्वातन्त्र्येण प्रयोगार्हत्वाऽभावेन नियमानाक्रान्तत्वात् देवदत्तो गार्ग्येतिवद् देवदत्तेन कृतेत्यस्याऽप्यर्थवदन्तत्वादिति चेन्न ? स्वनिष्ठसंज्ञाफलभूतविभक्त्यर्थस्य स्थाने स्वप्रतिपाद्यतावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकविभक्तीति देयम् । देवदत्तेन कृतेत्येतत्प्रतिपाद्यतावच्छेदकदेवदत्तकर्तृककरणकर्मत्वावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमेव कृत्पदोत्तरविभक्तेस्तदितरानपेक्षयैव बोधकत्वात् कृतेत्यस्य तत्त्वम् । देवदत्तो गार्ग्यत्येतत्प्रतिपाद्यतावच्छेदकमेव नास्ति तदवच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमेव सुतरां गार्ग्यप्रकृतिके प्रत्यये नास्तीति तदितरत्वमेव तस्य, तदपेक्षयैव च गार्ग्यस्य बोधकत्वात्तत्त्वाऽभाव इति तयोर्वैषम्येनाऽदोषात् ।

## सरूपाणामिति ।

नन्वेकशब्दस्य केवलान्यार्थकत्वेन सर्वत्र सत्त्वात्तदितराऽप्रसिद्ध्या कथमन्वय इति चेन्न ! "एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते" इत्यभियुक्तोक्त्या प्रथमार्थकत्वेनाऽदोषात् । द्वन्द्वापवाद एकशेष इति पक्षनिरसनपूर्वकप्रातिपदिकानामेकशेष इति पक्षो भाष्यसम्मतः । जननीवाचकमातृशब्दपरिच्छेत्तृवाचकमातृशब्दयोर्भ्यामि मातृभ्यां मातृभ्यामिति लाक्षण्यादेकशेषस्तु न भवति "वृद्धो यूने"तिसूत्रादेवकाराऽपकर्षात् । नन्वेवशब्दार्थस्य क्वान्वयः सरूपपदार्थे १ षष्ठ्यर्थघटकत्वे २ एकपदार्थे ३ शेषपदार्थे ४ एकपदार्थे ५ विभक्तिपदार्थे वा ६ षट् पदार्थास्सन्ति क्वान्वयः ? तत्र नाद्यः, सरूपारब्धसमुदायघटकस्सरूपारब्धसमुदायेतराघटक एकश्शिष्यत इत्यर्थे जननीवाचकपरिच्छेत्तृवाचकमातृशब्दापत्तिवारणायापकृष्टैवकारस्य वैयर्थ्यापत्तेः । न द्वितीयः, यत्पदोत्तरमेवकारः प्रयुज्यते तदर्थसम्बन्धस्य तदर्थेतरसम्बन्धाऽभावस्य विशेष्ये विशेषणे वा प्रतीयमानत्वात् । सरूपघटकमात्रारब्धसमुदायघटक एकश्शिष्यत इत्यर्थापत्तौ रामश्च कृष्णश्च रामश्चेति सहविवक्षायां रामकृष्णरामा इति प्रयोगापत्तिः । न तृतीयः, सरूपघटकारब्धसमुदायानामेक एव शिष्यत इत्यर्थे मातृशब्दयोर्निरुक्तरीत्या

दोषोऽनिवार्य्य इति अपकृष्टैवकारस्य निरर्थकत्वं स्यात् । न चतुर्थः, सरूपघटकार-ब्धसमुदायानामेकशेष एवेत्यर्थापत्तौ कार्यान्तरम्प्रयोगे रामावित्यादौ न स्यात् । न पञ्चमः, एकस्यामेव विभक्तावेकशेष इत्यर्थापत्तौ कस्याञ्चिदेकशेषऽकस्याञ्चिन्न स्यात् । नापि षष्ठः, नापि साद्रूप्येऽन्वयस्तथा सति सारूप्यमेव येषान्तैरारब्धो यस्स-मुदायस्तद्घटक इत्यर्थे मातृशब्दयोरापत्तिस्तदवस्थैव । नच ययोरेकशेषश्चिकीर्षित-स्तयोस्स्ववृत्तियावद्रूपवत्वस्य तत्त्वे हारितेयं हारिणेयमिति तद्धिते वैरूप्यसत्वेन दोषवारणाय विभक्त्यव्यवहितपूर्वत्वावच्छेदेन ययोरेकशेषश्चिकीर्षितस्तयोस्स्ववृत्ति-यावद्रूपवत्त्वमिति निवेशेऽपि नक्षतमित्यर्थकाक्षतशब्दलाजाऽपुम्भूम्नि चाक्षतास्त-ण्डुलपर्यायाक्षतशब्दयोरेकशेषापत्तेः।एवञ्च अस्मद्गुरुचरणाःसरूपाणामेक इत्यस्य शब्दविशिष्टसमुदायघटक एकश्शिष्यत इत्यर्थः । वैशिष्ट्यञ्च—स्वघटितत्व स्ववृत्ति-रूपाभाववदघटितत्वोभयसम्बन्धेन । अत्रार्थे प्रमाणमपकृष्टैवकारः । अथ च सरूपप-दस्य शब्दविशिष्टसमुदायोऽर्थ इति तात्पर्यग्राहकैवकारः । वैशिष्ट्यञ्च—स्वारब्ध-त्व स्ववृत्तिरूपविशिष्टरूपवदनारब्धत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च—स्व-भिन्नत्व स्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धे-न । द्वितीयसम्बन्धे तात्पर्यग्राहकमेकविभक्ताविति पदम् । तत्र वैशिष्ट्यञ्च स्वसा-मानाधिकरण्य स्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभय-सम्बन्धेन । नित्यबहुवचनान्तदारशब्दस्य सर्ववचनान्तदारशब्देनैकशेषस्त्विष्ट एव । संज्ञाभूतसर्वशब्दस्य सर्वनामसंज्ञकसर्वशब्देनैकशेषो भाष्यादिप्रमाणादनिष्ट एव । नित्यद्विवचनान्तपुष्पवन्तशब्दस्य नित्यैकवचनान्तैकशब्देनैकशेषवारणायोपायान्त-रम् । तथाच वैशिष्ट्यानि—स्वारब्धत्व स्ववृत्तिरूपविशिष्टरूपवदनारब्धत्व स्ववृत्ति-रूपाभाववदनारब्धत्वैतत्त्रितयसम्बन्धेन शब्दविशिष्टसमुदायघटक एकश्शिष्यते । सम्बन्धघटकवैशिष्ट्यञ्च स्वविशिष्टभिन्नत्व स्वाश्रयप्रकृतिकविभक्तिसजातीयविभ-क्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन ।पुनर्वैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वाश्रय-प्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन । एवकारो ना-पकृष्यते भाष्येऽदर्शनात् ।

## सुपि च—

"अतो दीर्घो यञी"तियञनुवर्त्तते तच्च सप्तम्यन्तमिविशेषणं, सुपीति विशेष्य-स्तदन्तविधिम्प्रबाध्य "यस्मिन्विधि"रितितदादिविधिरङ्गस्येत्यधिकारः । तथा च

अभेदसम्बन्धावच्छिन्ना यजादित्वावच्छिन्ना यजादिनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या छुत्वावच्छिन्ना छुनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना छुत्वावच्छिन्ना छुनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या मात्राद्वयन्यूनकालिकस्वरूपात्त्वावच्छिन्नाऽन्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या समवायसम्बन्धावच्छिन्नाऽत्त्वावच्छिन्ना प्रकारता तादृशप्रकारता निरूपिता या तदन्तत्वावच्छिन्ना तदन्तनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्नाऽदन्तत्वावच्छिन्नाऽदन्तनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽङ्गत्वावच्छिन्नाऽङ्गनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धावच्छिन्नाऽङ्गत्वावच्छिन्नाऽङ्गनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या दीर्घत्वावच्छिन्ना दीर्घनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना दीर्घत्वावच्छिन्ना दीर्घनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता पर्याप्तिसम्बन्धावच्छिन्ना समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वविशिष्टकर्तृत्वावच्छिन्ना या कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता च याऽस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

रषाभ्यान्नो णस्समानपदे—

घटकत्वसम्बन्धावच्छिन्ना समानपदत्वावच्छिन्ना समानपदनिष्ठा या प्रका-

---

रषाभ्यान्नो ण इति—अत्र पदग्रहणसामर्थ्येन सूत्रे लिङ्गवचनमतन्त्रमितिपरिभाषानाश्रयणान्निमित्तनिमित्तिनोरेकपदस्थत्व एव नस्य णत्वमिति सूत्रार्थेन प्रातर्नमनमित्यादिन्यासे णत्ववारणसम्भवात्समानग्रहणङ्किमर्थमिति प्रश्नः। कुर्वन्नित्याद्यनुकरणे णत्ववारणाय तु न पदग्रहणम् परिनिष्ठितान्तस्य नस्य णत्वन्नेत्यर्थकेन "पदान्तस्येर्गतिसूत्रेणेव तन्निषेधसम्भवात्। समानमेव अखण्डमेव यत्पदन्तत्रैव णत्वं यथा स्यादित्यर्थं समानग्रहणस्यावश्यकत्वात्। तेन रामनामेत्यादौ समासरूपसमानपदघटकत्वेऽपि न णत्वमखण्डपदत्वाभावात्। पदाघटितपदत्वमखण्डपदत्वम्। रामनामेतिसमुदाये पदत्वसत्त्वेऽपि पदाघटितत्वाऽभावात्। नच मातृभोगीणेत्यादौ मातृपदघटितत्वेन पदाघटितत्वाऽभावेन णत्वन्न स्यादिति वाच्यम्? निमित्तिमत्पदाघटि-

रता तादृशप्रकारतानिरूपिता रेफषकारान्यतरत्वावच्छिन्ना रेफषकारान्यतरनिष्ठा

तत्त्वमखण्डपदत्त्वमिति लक्षणेन मातृपदस्य निमित्तिमत्त्वाऽभावेन भोगीनेत्यस्य केवलप्रत्ययस्य वा पदत्वाऽभावेन च मातृभोगीनेतिसमुदाये विशिष्टाऽभावसत्त्वेन णत्त्वसिद्धिसौष्ठवात्। निमित्तं रेफः निमित्तो नकार इति पारिभाषिकोऽर्थः।

नच सुपर्वणेत्यादौ निमिर्त्तिमत्पदं पर्वन्निति तद्घटितत्त्वेन णत्त्वन्न स्यादिति वाच्यम्? निमित्तानधिकरणनिमित्तिमत्पदाघटितत्त्वमखण्डपदत्त्वमिति परिष्कृतलक्षणात्। पर्वन्नित्यस्य निमित्तानधिकरणत्वाऽभावेन णत्त्वसिद्धेः। नच गन्धर्वस्य गानं गन्धर्वगानमित्यादौ "गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक्सुबुत्पत्ते"रितिपरिभाषया गानेत्यस्य पदत्त्वाऽभावेन समुदाये विशिष्टाऽभावसत्त्वेन णत्त्वमापद्येतेति वाच्यम्? पदशब्देन पदत्त्वयोग्यस्यार्थवतो ग्रहणेनार्थवत्त्वस्य तत्र सत्त्वेनाभावान्तलक्षणस्य तत्समुदायेऽभावेन णत्वाऽयोगात्। पद्यते गम्यतेऽर्थोऽनेनेति पदमिति विग्रहाऽभिधानात्। किञ्च विभक्तीतरानपेक्षया लोकेऽर्थविषयकबोधजनकत्त्वम् पदत्त्वमिति परिष्काराच्च।

ननु सर्वनरेणेत्यादौ सर्वघटकरेफोत्तरत्त्वेन नरघटकनकारस्यापि णत्त्वं स्यादिति चेन्न? रषाभ्यामिति वैशिष्ट्यम्पञ्चम्यर्थः रेफषकारान्यतरविशिष्टस्य नस्य णत्त्वमिति सूत्रार्थः। वैशि० स्वोत्तरत्त्व स्वाघटितपदाघटकत्त्वोभयसम्बन्धेन। समानपदग्रहणमत्रार्थे तात्पर्यग्राहकम्। सर्वनरेणेत्यत्र नरघटकनकारे रेफवैशिष्ट्यन्नास्ति स्वोत्तरत्त्वसत्त्वेऽपि द्वितीयसम्बन्धाभावात्। विभक्तिनकारे तत्रैव सर्वनरणेत्यत्रनरघटकरेफवैशिष्ट्यमस्ति स्वोत्तरत्त्वं स्वाघटितपदाघटकत्त्वञ्चास्तीति णत्त्वोपपत्तिः नारायणशब्दस्य संज्ञाशब्दत्त्वेन समानपदत्त्वम् "पूर्वपदात्संज्ञायामग" इति सूत्रेण क्षुम्नादिगणपठितस्य नृनमन्निति समुदायस्याऽपि संज्ञाभूतत्त्वात्समानपदत्त्वम्। ननु व्रीहिवापाणीत्यादौ "प्रातिपदिकान्ते"ति णत्वस्याऽसिद्धत्त्वा "दट्कुप्वाङि्ति"णत्वं स्यात्। नुम्ग्रहणन्तु प्रहिण्वन्नित्यादौ णत्वार्थञ्चरितार्थमिति चेन्न? स्वानधिकरणपदघटितसमुदायनिरूपितावयवत्त्वाऽभाववत्त्वरूपतृतीयसम्बन्धस्याऽपि वैशिष्ट्यनियामकत्त्वाङ्गीकारात्। नन्वेवम्वारिणि शय इत्यादौ नुमस्तादृशसमुदायनिरूपितावयवत्त्वेन णत्त्वानापत्तिरिति चेन्न? स्वानधिकरणपदघटितसमुदायनिष्ठोद्देश्यतानिरूपितावयवत्त्वावच्छिन्नविधेयतानाश्रयत्त्वस्य सम्बन्धात्। ननु "पूर्वपदात्संज्ञायामग" इतिसूत्रारम्भसामर्थ्यात्पूर्वपदस्थान्निमित्तात्परस्य नस्य णत्वञ्चेत्तर्हि संज्ञायामेवेतिनियमादेव रामनामेत्यादौ णत्ववारणसम्भवात्समानग्रहणङ्किमर्थमिति प्रश्नः। नच "प्रातिपदिकान्तनुमि"ति सूत्रस्य वैयर्थ्यम्? प्रातिपदिकान्तनुम्विभक्तिभिन्नस्य नस्येति विशेषणदानेन चारितार्थ्यात्। शोभनप्रियदायिक इत्यत्र णत्वापत्तेः। पूर्वपदशब्दस्य समासप्रथमावयवरूढत्वादिति तत्त्वम्।

या विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्ना रेफषकारान्यतरत्वावच्छिन्ना रेफषकारान्यतरनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या नत्वावच्छिन्ना ननिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना नत्वावच्छिन्ना ननिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या णत्वावच्छिन्ना णनिष्ठा विशेष्यतातादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना णत्वावच्छिन्ना णनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता पर्याप्तिसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता च या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता याऽस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

## प्रत्ययलोप इति ।

ननु लोपनं लोपः प्रत्ययस्य लोपः प्रत्ययलोपः प्रत्ययादर्शनमिति यावत् । अर्थात्प्रत्ययादर्शने प्रत्ययलक्षणमितिसूत्रार्थे हरिर्भानुरित्यत्र विसर्गादिना सुप्रत्ययादर्शने प्रत्ययलक्षणविधानात्सुप्रत्ययबुद्धयां प्रतिबन्धकाऽभावेन जस्बुद्धयापत्तौ "जसि चे" तिगुणस्स्यादिति चेन्न ? तत्तच्छास्त्रकर्तृकप्रत्ययलोपे प्रत्ययलक्षणमितिसूत्रार्थान्निर्वाहसम्भवात् । नच हरिप्रिय इत्यादौ हरिश्चासौ प्रियश्चेति समासे ङसोऽभावात्प्रत्ययलक्षणेन 'घेर्ङिती'ति'गुणापत्तिरिति वाच्यम् ? "न लुमताऽङ्गस्ये" तिनिषेधात् यस्याः प्रकृतेर्विहितस्य यत्प्रत्ययस्याऽभावश्शास्त्रकर्तृकस्तस्यां प्रकृतौ तत्प्रत्ययनिमित्तकं कार्यम्भवतीतिसूत्रार्थेन हरिरित्यादावदोषाच्च । नच राज्ञ इत्यादौ नलोपापत्तिः राजेत्यत्र शास्त्रकर्तृकप्रत्ययाऽभावसत्वात् प्रकृतेरैक्याच्चेति वाच्यम् ? प्रत्युच्चारणं शब्दा भिद्यन्त इतिसिद्धान्ताभ्युपगमेन व्यक्तिपक्षाश्रयणेन च सुप्रकृतिराजशब्दापेक्षया ङस्प्रकृतिराजशब्दस्य भिन्नत्वेनाऽक्षतेः । नच राजशब्दाद् भिन्नो राजशब्द इतिव्यवहारोऽनुपपन्नः भेदीयानुयोगितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति प्रतियोग्यवृत्तिधर्मप्रकारकनिश्चयस्यैव कारणतेतिव्युत्पत्तेरिति वाच्यम् ? राजशब्दाद् भिन्नो राजशब्द इति व्यवहाराऽभावेऽपि आनुपूर्वीवैलक्षण्यात् सुसमभिव्याहृतराजशब्दस्य ङस्समभिव्याहृतराजशब्दाद्

भिन्नत्वेन दोषाऽभावात्। वोभवीतीत्यादौ प्रत्ययाऽव्यवहितपूर्वस्य कार्याऽभावेन "यङो वे" तीडागमानापत्त्या "यस्य च भावेने" ति सत्सप्तमी नत्वौपश्लेषिकाधिकरणबोधिकेति।

स्राष्टङ्कुर्वन्नित्यत्र प्रत्ययाऽदर्शनेन प्रत्ययलक्षणं स्यात्तर्हि षष्ठ्यभावेन समासापत्तिरतो लुक्श्लुलुबित्यनुवर्त्य एतैर्लकारवच्छब्दैः कृतम्प्रत्ययाऽदर्शनं यत्र तत्र प्रत्ययलक्षणम् । प्रत्ययत्वव्याप्यविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मावच्छिन्नाश्रयणं यत्र तत्रैव प्रत्ययलक्षणमिति नावयवलोप इति । प्रक्रियाकौटिविचारशब्दरत्नशब्देन्दुशेखरयोः । "इदुदुपधस्ये"तिसूत्रे लक्षणावारणायेदमेव प्रत्ययग्रहणं प्रत्ययावयवे प्रत्ययत्वव्यवहार इति ज्ञापयति । न च रामं घटं पटमित्यादौ मकारभागे सुप्त्वव्यवहाराऽपत्त्या "सुपि चे"तिदीर्घापत्तिरिति वाच्यम् ? समान्यातिदेशे विशेषानतिदेश इतिपरिभाषया प्रत्ययत्वावच्छिन्नविषयता यत्र तत्रैव प्रत्ययावयवे प्रत्ययत्वव्यवहारः अतिदिश्यमानधर्मसमनियतधर्मनिमित्तकं कार्यन्नेति सर्वप्रसिद्धिरिति सुप्त्वावच्छिन्नविषयताया आनेतुमशक्यत्वात् ।

नच "द्वित्वे गोयुगजि"ति वार्त्तिकेन द्वावुष्ट्रावुष्ट्रगोयुगमित्यादौ प्रत्ययत्वव्यवहारापत्त्या "वान्तो यी"तिवान्तापत्तिरितिवाच्यम् ? गव्युगचि कार्ये ओकारोच्चारणसामर्थ्येन तदप्रवृत्तेः ।

नच आखनिकवक इत्यादौ "खनेर्डडरेकेकवका वाच्या"इतिकृदन्तप्रकरणीयवार्त्तिकेन प्रत्यये प्रत्ययावयवे प्रत्ययत्वव्यवहारेण ककारस्येत्संज्ञाऽपत्तिः । नच फलाऽभावः "गमहने"त्युपधालोपस्य फलस्य विद्यमानत्वादिति वाच्यम् ? अवयवत्वन्यूनवृत्तिधर्मावच्छिन्नविषयत्वाऽनिरूपिता प्रत्ययत्वावच्छिन्ना विषयता प्रत्ययावयवे गच्छतीति कल्पनात् । अत्र अवयवत्वन्यूनवृत्त्यादित्त्वधर्मावच्छिन्नविषयतानिरूपितत्वेन "लशक्तद्धित"इत्यस्याऽप्रवृत्तेः । वस्तुतस्तु ज्ञापकस्य सजातीयापेक्षत्वात्सूत्रघटकप्रत्ययपदप्रयोज्यविषयताया एवावयवे आरोप इति "अचि श्नुधात्त्वि"तिसूत्रेऽङ्गाक्षिप्तप्रत्ययपदप्रयोज्यविषयतायास्सत्त्वान्न तत्रत्यभाष्यविरोधः ।

ननु वैयर्थ्यसम्पादकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं व्यर्थीभूतशास्त्रीयोद्देश्यतावच्छेदकव्यापकं च यद्रूपन्तद्रूपावच्छिन्नातिरिक्तत्वेनैव वैयर्थ्यसम्पादकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचशास्त्रव्युत्पत्तिसिद्धः । तथाच प्रकृतं

व्यर्थताप्रयोजकस्थानिवत्सूत्रीयोद्देश्यतावच्छेदकादेशत्वव्याप्यत्वस्य प्रत्ययलोपत्वे सत्त्वेऽपि व्यर्थीभूतप्रत्ययलक्षणशास्त्रीयोद्देश्यतावच्छेदकप्रत्ययलोपत्वव्यापकत्वस्याऽभावात् कथं स्थानिवत्सूत्रीयादेशपदार्थो प्रत्ययलोपातिरिक्तत्वेन सङ्कोच इति चेन्न ? सामान्यतो लोपत्वावच्छिन्नातिरिक्तत्वेन नैव सङ्कोचोऽपि तु वैयर्थ्यसम्पादकशास्त्रीयोद्देश्यतावच्छेदकप्रत्ययत्वव्यापकसामान्यप्रत्ययलोपत्वावच्छिन्नातिरिक्तत्वेन सङ्कोचः । अयमाशयः, स्वीयोद्देश्यतावच्छेदकं कृत्स्नप्रत्ययलोपत्व तद्व्यापकं वैयर्थ्यं प्रयोजकस्थानिवत्सूत्रीयोद्देश्यतावच्छेदकादेशत्वस्य व्याप्यं प्रत्ययलोपत्वं तदवच्छिन्नातिरिक्तत्वेनादेशत्वावच्छिन्ने सङ्कोच इति प्रत्ययलोपे स्थानिवद्भावस्य न प्राप्तिरिति छद्यत्प्रासाद इत्यत्र न स्थानिवद्भावः ।

शेषो घ्यसखि ।

शेषशब्दार्थोऽनदीसंज्ञाविति । सखिवर्जमिति सखिशब्दस्य घिसंज्ञा न भवतीत्याशयः । नच सखिना वानरेन्द्रेण लङ्का दग्धा महापुरी, पतिनेति च तत्र २ श्रूयन्ते एवमन्येऽपि प्रयोगाः कथं सेत्स्यन्तीति वाच्यम् ? आर्षत्वान्निर्वाहात् । पतिमाचक्षाणः णिचि तु सिद्ध्यति नैवार्थभेदापत्तेः ।

ननु सखिशब्दस्य घिसंज्ञा न भवतीत्यर्थे विचारः । सखिशब्देन नञः सम्बन्धात्सखिभिन्नशब्दावयवाविवर्णोवर्णौ घिसंज्ञाविति वर्णसंज्ञापक्षेऽर्थः । परन्त्वस्मिन्पक्षे आकडारसूत्रबलेन लघुघिसंज्ञयोस्समावेशो न स्यादतस्तदन्तविधिपक्षे सखिभिन्नाविवर्णोवर्णान्तौ घिसंज्ञाविति । सुसखीतिसमुदायस्सखिभिन्न इति सखिशब्दानुपूर्वी यावद्रूपेण सुसखिशब्दे नास्तीति फलितम् ।

ननु स्वघटितसमुदायत्वावच्छेदेन स्ववृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदो न भवतीतिनियमोऽत एव घटपटौ न घट इति न भवति घटपटावितिसमुदायस्य घटघटितत्वेन तद्वृत्तिघटत्वावच्छिन्नप्रतियोगिताकभेदो न भवति तद्वत् सखिघटितसमुदाये सुसखीत्याख्ये सखिशब्दभिन्नत्वाऽभावात् सुसखिशब्दे कथङ्कारं घिसंज्ञेति चेन्न ? "अस्वाङ्गपूर्वपदाद्वे"ति सूत्रभाष्ये कल्याणपाणिपादेत्यादौ ङीष्वारणाय स्वाङ्गसमुदायो न स्वाङ्गमिति भाष्यकृतोक्तम् । स्वघटितसमुदायेऽपि स्वभेदोऽस्त्येव तथा सुसखीतिसमुदायस्य सखिभिन्नत्वेन घिसंज्ञया सुसखिनेति वैयाकरणमतम् । दन्तोष्ठमितिरूपाऽसिद्धये स्वाङ्गसमुदाये स्वाङ्गत्वाऽभाववच्छरीरावयवसमुदाये

शरीरावयवत्वाभावा "च्छरीरावयवाच्चदिति" यत्प्रत्ययो नेति ।

किन्तु "दन्त्योष्ठ्यो वस्स्मृतो बुधै" रिति वाक्ये केवलादेव दन्तशब्दादोष्ठ-शब्दाच्च यदिष्ट इति विशेषविवरणमस्मत्कृतकौमुदीटीकायान्नञ्सद्द्वादिगुणाना-मिति सूत्रटिप्पण्याम् ।

किञ्च आकाशमेकम् परन्तूपाधिभेदाद् घटाऽऽकाशम् पटाकाशम् मठाकाशमिति व्यवहारः । तथाच घटाकाशोभयत्वावच्छेदेनाकाशे द्वित्वसत्त्वादाकाशो द्वाविति सन्दिह्यते परन्तु शुद्धाकाशत्वावच्छेदेन द्वित्वावच्छिन्नप्रतियोगिताकभेदतात्पर्येणा-काशो न द्वाविति प्रयोग उपपद्यते तद्वत् सखित्वावच्छेदेन सखित्वस्य सखिघटित-समुदाये सत्वेऽपि इसखित्वावच्छेदेन सखिशब्दभेदोऽस्त्येव इसखित्वरूपानुपूर्व्या-श्शुद्धसखित्वरूपानुपूर्व्यामभावेन तयोर्भेदो निर्बाध एव । किञ्च असति प्रतिबन्धके उद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वय इति नियम एवञ्च भेदविधेयस्थल एव निरवच्छिन्नानुयोगिताकभेदो न भवतीति व्यवहारः । अत्र भेदस्य विधेयत्वाऽभा-वेन निरवच्छिन्नानुयोगिताकभेदप्रसिद्धौ बाधकाऽभाव इति हृत्तात्पर्य्यम् । अधिकं सखिशब्दीयशेखरे स्पष्टम् ।

### रायो हलि—

अभेदसम्बन्धावच्छिन्ना हलादित्वावच्छिन्ना हलादिनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या विभक्तित्वावच्छिन्ना विभक्तिनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्य-त्वाऽभिन्ना वा याऽव्यवहितपुर्वत्वसम्बन्धावच्छिन्ना विभक्तित्वावच्छिन्ना विभक्तिनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या स्वरूपसम्बन्धेन रैत्वावच्छिन्ना रैनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या "ऽऽलोऽन्त्य" सूत्रसहाय-तया स्वघटकत्वसम्बन्धावच्छिन्ना रैत्वावच्छिन्ना रैनिष्ठा प्रकारता तादृशप्रकार-तानिरूपिता स्वघटकनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना रैत्वावच्छिन्ना रैनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता याऽऽत्वावच्छिन्ना आनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना आत्वावच्छिन्ना आ-निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या विधेयताविशेषाऽऽश्रयत्वरूपादेशत्वाव-च्छिन्नाऽऽदेशनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या ऽभेदसम्बन्धाव-च्छिन्नाऽऽदेशत्वावच्छिन्नाऽऽदेशनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कर्तृ-

त्त्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता ताद्दशविशेष्यतासमानाधिकरणा ताद्दशविशेष्यत्वाऽभिन्ना ताद्दशविशेष्यत्वावच्छिन्नप्रकारत्वावच्छिन्ना वा या वृत्तित्वसम्बन्धावच्छिन्ना समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता ताद्दशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नवर्त्तमानकालनिष्ठप्रकारतानिरूपिता च याऽस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता ताद्दशविशेष्यताशालिशाब्दबोधः ।

आङि चापः—

आङीत्यौपश्लेषिकाधिकरणे सप्तमी, एवमोसीत्यपि तेनाव्यवहितपूर्वत्वांशोपस्थितिः । आङिति ङकारविशिष्टा संज्ञा नतु ङकारस्येत्संज्ञाऽत एव न याट् । एवञ्च—

औङारोऽयं शीविधौ ङिद् गृहीतो ङिच्चास्माकन्नास्ति कोऽयम्प्रकारः ।
सामान्यार्थस्तस्य चासञ्जनेऽस्मिन् ङित्कार्यन्ते स्यात्प्रसक्तं स दोषः ॥
ङित्त्वे विद्याद्वर्णनिर्देशमात्रं तच्च विद्यात्तदादौ ।

इतिङकारादेर्याडिति "यस्मिन्विधिरिति" परिभाषया न दोष इति अस्मत्कृतकौमुदीकल्पलतिकायां भाष्यसम्मतायान्द्रष्टव्यम् । अव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना आङ्त्व ओस्त्वावच्छिन्ना आङोस्निष्ठा या प्रकारता ताद्दशप्रकारतानिरूपिता या आप्त्वावच्छिन्ना आप्निष्ठा विशेष्यता ताद्दशविशेष्यतासमानाधिकरणा ताद्दविशेष्यत्वावच्छिन्नप्रकारत्वावच्छिन्ना ताद्दशविशेष्यत्वाऽभिन्ना वा या समवायसम्बन्धावच्छिन्ना आप्त्वावच्छिन्ना आप्निष्ठा प्रकारता ताद्दशप्रकारतानिरूपिता तदन्तत्वावच्छिन्ना तदन्तनिष्ठा या विशेष्यता ताद्दशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना आबन्तत्वावच्छिन्ना आबन्तनिष्ठा प्रकारता ताद्दशप्रकारतानिरूपिता याऽङ्गत्वावच्छिन्नाऽङ्गनिष्ठा विशेष्यता ताद्दशविशेष्यतासमानाधिकरणा या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना स्वघटकनिष्ठनिवर्त्यतानिरूपितनिवर्त्तकतावत्त्वसम्बन्धावच्छिन्नाऽङ्गनिष्ठा प्रकारता ताद्दशप्रकारतानिरूपिता या एत्वावच्छिन्ना एनिष्ठा विशेष्यता ताद्दशविशेष्यता समानाधिकरणायाऽभेदसम्बन्धावच्छिन्ना एत्वावच्छिन्ना एनिष्ठा प्रकारता ताद्दशप्रकारतानिरूपिता पर्याप्तिसम्बन्धावच्छिन्नसमवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता च या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता ताद्दशविशेष्यतासमानाधि-

करणा या वृत्तित्व(आधेयत्व)सम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्तमानकालत्वावच्छिन्न वर्तमानकालनिष्ठप्रकारतानिरूपिता च याऽस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

## यू स्त्र्याख्यौ ।

नित्यस्त्रीलिङ्गौ—स्त्रीत्वलिङ्गनिष्ठप्रकारतानिरूपितविशेष्यताश्रयत्वे सति स्त्रीत्वेतरलिङ्गनिष्ठप्रकारतानिरूपितविशेष्यतानाश्रयत्वन्नित्यस्त्रीत्वम् । एतत्फलितार्थमेव धर्मविशिष्टत्वन्नित्यस्त्रीत्वम् । वैशिष्ट्यञ्च स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताकबोधजनकत्वेन तात्पर्यविषयत्व स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गप्रकारताकबोधाऽजनकत्वोभयसम्बन्धेन । ङ्यन्तकुमारीशब्दस्य प्रथमवयोविशिष्टत्वरूपधर्मावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताकबोधजनकत्वेन तात्पर्य्यविषयत्वम् । स्त्रीत्वेतरपुंस्त्वाद्यबोधकत्वेन नित्यस्त्रीत्वान्नदीसंज्ञा । कुमारीपुरुष इत्यत्र यद्यपि पुँस्त्वबोधकत्वन्तथापि कुमारीकर्मकाचरणसदृशाचरणादिकर्तृत्वावच्छिन्ने पुंस्त्वान्वयो न तु प्रथमवयोविशिष्टत्वावच्छिन्न इति न क्षतिः ।

नच सेनान्नयतीति सेनानीशब्दे सेनात्वधर्मवैशिष्ट्यसत्वान्नित्यस्त्रीत्वापत्तिः । सेनात्वधर्मावच्छिन्ने स्त्रीत्वबोधकत्वस्य पुंस्त्वाद्यबोधकत्वस्य सत्वादिति वाच्यम् ?

## धर्म्मविशिष्टत्वन्नित्यस्त्रीत्वम् वैशिष्ट्यञ्च—

स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठ प्रकारताकबोधजनकत्वेन तात्पर्यविषयत्व—स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताकबोधाजनकत्व—स्वपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावच्छेदकतानिरूपितशक्तापर्याप्त्यधिकरणत्वैतत्त्रितयसम्बन्धेन । प्रथमसम्बन्धफलम् जिह्रेतीति ह्रीःलज्जात्वमादाय न दोषः । द्वितीयस० फ० प्रकृष्टन्ध्यायतीति प्रधीरिति । तृतीय फल० सेनानीरित्यलम् ।

## ह्रस्वो नपुंसके प्रातिपदिकस्येति ।

"ह्रस्वो नपुंसके यत्तस्ये"ति न्यासेन सिद्धौ प्रातिपदिकग्रहणं सत्त्वप्रधानप्रातिपदिकसंग्रहार्थम् । सत्त्वम् द्रव्यम् , लिङ्गसंख्याकारकान्वितन्द्रव्यं सत्त्वम् ।

---

प्रथमलिङ्गग्रहणञ्चेतिवार्त्तिकम् अवयवस्त्रीविषयत्वात् सिद्धम् इति भाष्यञ्च एवम्विधे परिष्कारे तात्पर्यग्राहकम् ।

सत्त्वप्रधानत्वञ्च—

सत्त्वनिष्ठविशेष्यताकबोधजनकत्वम्। प्रातिपदिकस्येति किम् काण्डे कुड्ये रमते ब्राह्मणकुलमिति वाक्यघटककाण्डे इत्यत्र सप्तम्यर्थाधिकरणत्वस्यैव विशेष्यत्वम्। काण्डरूपद्रव्यस्य तत्प्रति विशेषणत्वाद्भाष्यसङ्गतिः।

नच काण्डत्वनिष्ठप्रकारतानिरूपितकाण्डनिष्ठविशेष्यताया द्रव्ये काण्डे सत्त्वाद्दोष एवेति वाच्यम्? सत्त्वनिष्ठमुख्यविशेष्यताकबोधजनकत्वं सत्त्वप्रधानत्वम्। मुख्यत्वञ्च प्रकारत्त्वाऽसामानाधिकरण्यम् प्रकृते काण्डे इत्यत्र अधिकरणत्वनिष्ठविशेष्यतानिरूपितप्रकारतासामानाधिकरण्यस्यैव काण्डेतिद्रव्ये सत्त्वादक्षतेः। नच

द्योतिका वाचिका वा स्युर्द्वित्वादीनाम्विभक्तयः।
यद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः॥

इतिवाक्यपदीयप्रमाणेन विभक्तेर्द्योतकत्वपक्षे काण्डेतिप्रकृत्यर्थनिष्ठैव विशेष्यतेति सत्त्वप्रधानत्वमस्त्येवेति काण्डनिष्ठा मुख्यैव विशेष्यतेति वाच्यम्? अस्ति रमते इत्यादिक्रियार्थनिष्ठविशेष्यतानिरूपितप्रकारत्त्वस्यैव सत्त्वेनामुख्यत्वस्यैव सिद्धेः। वस्तुतस्तु द्रव्यविशिष्टस्य प्रातिपदिकस्य ह्रस्व इत्यर्थः। वैशिष्ट्यञ्च स्वनिष्ठविशेष्यताप्रयोजकत्व० स्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाप्रयोजकत्वोभयसम्बन्धेन। एवमपि काण्डे इत्यादौ दोष एवेति द्रव्यविशिष्टस्य प्रातिपदिकस्य ह्रस्व इत्याशयः। वैशिष्ट्यञ्च स्वनिष्ठप्रधानताख्यविषयताप्रयोजकत्व स्वनिष्ठाऽप्रधानतानिरूपितप्रधानताख्यविषयत्वाऽप्रयोजकत्वोभयसम्बन्धेन। काण्डनिष्ठाऽप्रधानतानिरूपितक्रियाकारकभावसंसर्गनिष्ठप्रधानताप्रयोजकत्वेन काण्डे इत्यस्य ह्रस्वो नेति।

केचित्तु पर्जन्यवल्लक्षणप्रवृत्तिरिति न्यायेन काण्डे इत्यादौ ह्रस्वे ह्रस्वं कृत्वा लक्ष्येलक्षणन्यायेन पुनर्न ह्रस्व इति तत्तुच्छम्? एतद्भाष्यप्रामाण्यादेकदेशमात्रविकारस्यैवादवोढामितिवल्लक्ष्याऽभेदप्रयोजकत्वमत्र तु प्रकृतिकाण्डाकारङिविभक्तीकारोभयस्थानिकविकार इति लक्ष्ये लक्षणन्यायाऽप्रवृत्त्या भाष्यसङ्गतेरिति।

अत एव श्रीपमीर्यस्य कुलस्येति समासे विभक्तिलुकि "आद्गुण" इतिगुणे श्रीपे इति दशायामनेन ह्रस्वे श्रीपि इति सिद्धयत्यन्यथा लक्ष्ये लक्षणन्यायेन श्रीपा इत्यत्र ह्रस्वे कृते पुनर्गुणजैकारविशिष्टे ह्रस्वो न स्यादुभयजविकारत्वे लक्ष्ये लक्षणन्यायाऽप्रवृत्तौ तु रूपमिष्टं सिद्धयतीत्यलम्।

इकोऽचि विभक्तौ—

अचीति विशेषणमिवभक्तौति विशेष्यस्तदन्तविधिमप्रवाध्य "यस्मिन्विधि"-रिति तदादिविधिः । अभेदसम्बन्धावच्छिन्ना अजादित्वावच्छिन्ना अजादिनिष्ठा-या प्रकारता तादृशप्रकारतानिरूपिता या विभक्तित्वावच्छिन्ना विभक्तिनिष्ठा वि-शेष्यता तादृशविशेष्यतासमानाधिकरणा याऽव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना वि-भक्तित्वावच्छिन्ना विभक्तिनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या इक्त्वाव-च्छिन्ना इक्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या समवायसम्ब-न्धावच्छिन्ना इक्त्वावच्छिन्ना इक्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या तदन्तत्वावच्छिन्ना तदन्तनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वरूपसम्बन्धावच्छिन्ना वहुव्रीह्यर्थाऽन्यपदार्थतदन्तत्वावच्छिन्ना तदन्तनिष्ठा प्रका-रता तादृशप्रकारतानिरूपिता या वहुव्रीह्यर्थान्यपदार्थत्वावच्छिन्नाऽन्यपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्नाऽन्यपदार्थत्वा-वच्छिन्नाऽन्यपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽङ्गत्वावच्छिन्नाऽ-ङ्गनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठावयवितानिरूपक-त्वसम्बन्धावच्छिन्नाऽङ्गत्वावच्छिन्नाऽङ्गनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या नुम्त्वावच्छिन्ना नुम्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेद-सम्बन्धावच्छिन्ना नुम्त्वावच्छिन्ना नुम्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता च या कर्तृ-त्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्व-सम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता च या सत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

किमःकः—

अव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना विभक्तित्वावच्छिन्ना विभक्तिनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या किम्त्वावच्छिन्ना किम्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना किम्त्वावच्छिन्ना किम्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या कत्वावच्छिन्ना

कनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना कर्त्त्वावच्छिन्ना कनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता-तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या क्रियात्वावच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

ष्णान्ताः षट् ।

एतत्सूत्रवृत्तौ संख्यापदेनासम्भवात्संख्यावाचको गृह्यते । "स्वंरूपमि"तिसूत्रबलेन स्वरूपग्रहणन्तु न भवत्यशब्दसंज्ञेतिनिषेधादारम्भसामर्थ्याच्च । अत्र संख्यावाचकत्वञ्च षान्तनान्तान्यतरनिष्ठसंख्याप्रकारकसंख्येयनिष्ठमुख्यविशेष्यताकबोधजनकत्वम् । नच दण्डिन इव त्रयः त्रिदण्डिनः पूषाण इव त्रयस्त्रिपूषाणः पञ्च इव त्रयः त्रिपञ्चानः इत्यादिपूपमितसमासे षट्संज्ञया लुगापत्तिरिति वाच्यम् ? लोके संख्यावाचकत्वेन प्रसिद्धषान्तनान्तान्यतरनिष्ठसंख्याप्रकारकसंख्येयनिष्ठमुख्यविशेष्यताकबोधजनकत्वं संख्यावाचकत्वम् । "षड्भ्यो लुगि"त्यस्य षट्प्रधान एव समास इति भाष्यबलेन षडर्थगतसंख्याभिधायिनोर्जश्शसोर्लुगित्येवार्थे दण्डिन इव कति कतिदण्डिन इत्यादावपि लुगापत्तिरिति वाच्यम् ? षड्भ्य इत्यस्याऽत्रृत्या षट्संज्ञकाऽव्यवहितोत्तरवर्त्तिजशो लुगित्यर्थेनाऽप्यदोषात् । पञ्च ब्राह्मणा इत्यादौ लुगभाव॰फलम् । नच प्रियपञ्चान॰पञ्चेत्यादावर्थद्वयसंघटनम् । षट्संज्ञकात्परत्वं षडर्थगतसंख्याभिधायित्वञ्चेति लुक् स्यादिति वाच्यम् ? षट्संज्ञकविशिष्टयोर्जश्शसोर्लुगित्यर्थः । वैशिष्ट्यञ्च स्वार्थगतसंख्याभिधायित्व स्वाव्यवहितोत्तरत्वोभयसम्बन्धेन । प्रत्यासत्तिन्यायेन उभयत्रैकस्यैव षट्संज्ञकस्य ग्रहणेनाऽदोषादुभयत्र तयोर्भेदात् । लुग्विधायकवत्संज्ञाविधायकस्यापि परिष्कृतोऽर्थः । संख्याविशिष्टस्य षान्तनान्तान्यतरस्य षट्संज्ञावैशिष्ट्यञ्च स्वनिष्ठप्रकारतानिरूपितसंख्येयनिष्ठमुख्यविशेष्यताकबोधजनकत्व स्वपर्य्याप्त्यवच्छेदकतानिरूपितावच्छेद्यतावच्छेदकतानिरूपितशक्ततापर्याप्त्यधिकरणषान्तनान्तान्यतरशब्दनिष्ठचरमावयवतानिरूपकत्वोभयसम्बन्धेन । विशेष्यतायाम्मुख्यत्वञ्च स्वप्रयोजकपदप्रयोज्यविशेष्यतानिरूपितप्रकारत्वाऽसामानाधिकरण्यम् । पञ्च ब्राह्मणा इत्यत्र ब्राह्मणविशेषणत्वेऽपि न-

हानिः, त्रिदण्डिन इत्यादौ त्रित्वावच्छिन्नशक्यतानिरूपितशक्तावान् नान्तशब्दो नास्तीति, पञ्चैव षट् पञ्चान इत्यादौ तु नैवेष्टा षट्संज्ञा । अत्र संख्यावाचकत्वत्व-मुक्तसम्बन्धस्वरूपमेवेति ।

## युष्मदस्मदर्थः—

ननु युष्मदस्मच्छब्दयोऽकार्थे शक्तिरिति प्रश्नः । स्वसम्बोध्ये पदार्थे युष्मच्छब्दस्य स्वोच्चारयितरि पुरुषविशेषेऽस्मच्छब्दस्य च शक्तिरिति विवेचना । नन्वेवमर्थे "देव्युवाच-मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवता" इत्यादौ सुरथनामकराजानम्प्रति ऋषिणा श्राव्यते नतु देव्या महिषासुरम्प्रति श्राव्यते येनाऽस्मत्पदेन महिषासुरस्य ग्रहणं देवीकर्तृकमहिषाऽसुरकर्मकवधात इति बोधस्स्यात इति चेन्न ? युष्मत्पदप्रकारको बोधविशेष्यको भगवत्सङ्केत इत्याकारको युष्मत्पदविशिष्टो बोधो भवत्वित्यर्थः । वैशिष्ट्यञ्च—स्वघटितवाक्यजन्यबोधाऽश्रयत्वेनेच्छोद्देश्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकत्व* स्वजन्यत्वैतदुभयसम्बन्धेन । अत्र स्वपदेन युष्मत्पदग्रहणम् तद्घटितं यद्वाक्यं त्वङ्गच्छेत्यादिकम्, तज्जन्यो यो बोधस्तदाश्रयत्वेन या उच्चारयितुरिच्छा मदुक्तवाक्यजन्यबोधाश्रयश्चैत्रो भवत्विवतीच्छा तादृशेच्छोद्देश्यश्चैत्र एव उद्देश्यतावच्छेदकञ्चैत्रत्वम् तद्वृत्ति यदुद्देश्यतावच्छेदकत्वन्तदुपलक्षितो धर्मश्चैत्रत्वमेव तदवच्छिन्नश्चैत्रस्तद्विषयकत्वमपि युष्मत्पदजन्यबोधेऽस्ति, त्वम्पदेन चैत्रस्यैव प्रतिपादनात् युष्मत्पदजन्यत्वमप्यस्तीति उभयसम्बन्धेन युष्मत्पदविशिष्टो बोधस्सङ्केतविषय इति न दोषः ।

अस्मत्पदविशिष्टो बोधो भवत्वित्याकारकोऽस्मत्पदप्रकारको बोधविशेष्यकश्च भगवत्सङ्केतः । मैत्रेण प्रतिपादिते अत्राहङ्गच्छामीति वाक्ये स्वम् अस्मत्पदम् तदुच्चारयितृतावच्छेदकं मैत्रत्वम् तद्वृत्तिस्वोच्चारयितृतावच्छेदकत्वेनोपलक्षितो धर्मो मैत्रत्वमेव तद्विषयकत्वमपि अत्रास्मत्पदजन्यबोधेऽस्ति । अहम्पदेन मैत्रस्य प्र-

---

इदम् एतत् अदस् । सर्वनामसंज्ञकेदमादिपदस्थले अयम्पुरुषः' एष स्थाणुः' इमे दाराः, असौ राजेत्यादौ इदम् पदार्थ एतत्पदार्थादीनाम्विशेष्यत्वमेव पुरुषादीनाम्प्रकारत्वमेव सर्वसम्प्रदायसिद्धो व्यवहारः । प्रकारबोधकपदरहितकेवले अयम् एषः असौ इत्युच्चार्य्यमाणे इदम्पदार्थो विशेष्यः । इदन्त्वम्प्रकारः. एतत्पदार्थो विशेष्यः, एतत्त्वम्प्रकारः । अदऽपदार्थो विशेष्यः, अदस्त्वम्प्रकारः । घट इतिज्ञाने घटो विशेष्यः घटत्वम्प्रकार इतिवत् ।

त्तिभाषणात् स्वजन्यत्वमस्मत्पदजन्यत्वमप्यस्तीत्युभयसम्बन्धेन अस्मत्पदविशिष्टबोधः। उभयत्र स्वपदार्थस्य सम्बन्धघटकतया तत्तत्तद्व्यक्तित्वेन युष्मदस्मदोर्न सङ्केतविषयता।

अत एव नाऽननुगमः किन्तु तच्छब्दवत् युष्मदस्मत्पदत्वरूपानुगतानुपूर्वी विशेषेणैवेति न पदव्यक्तिभेदेन शक्तिभेदः। कालान्तरीणपुरुषान्तरीयोच्चारणेनाऽपि न दोष इत्यलम्।

## सर्वशब्दार्थः—

ननु सर्वपदस्य कार्थे शक्तिरिति प्रश्नः, अशेषत्वं सर्वपदार्थः। अशेषत्वञ्च विधेयविशिष्टत्वम् वैशिष्ट्यञ्च स्वाऽभाववदवृत्तित्व—स्वोयोद्देश्यतावच्छेदकत्वमित्युभयसम्बन्धेन। सर्वे घटा रूपवन्त इत्यादौ घटमुद्दिश्य रूपवत्त्वम्विधीयते उद्देश्यो घटः उद्देश्यतावच्छेदकं घटत्वम् उद्देश्यतावच्छेदकघटत्वावच्छिन्नसकलघटेषु रूपवत्त्वमशेषा घटा रूपवन्त इति तत्त्वम्। रूपाऽभाववदवृत्तिघटत्ववन्तो घटा इति फलितार्थः। रूपशून्यः कोऽपि घटो नास्तीति शुद्धविवरणम्। ननु अत्यन्ताऽभावाऽप्रतियोगित्वम् केवलान्वयित्वम्। सर्वे घटाः प्रमेया इत्यादौ विधेयप्रमेयातिरिक्तः पदार्थ एव नास्तीति स्वाभाववदवृत्तित्वरूपसम्बन्धासंघटनेन कथमर्थसङ्गतिरिति चेन्न? उद्देश्यतावच्छेदकव्यापिका सती विधेयव्याप्या या पर्य्याप्तिः वृत्तिरिति यावत्। तादृशपर्य्याप्तिको यो धर्मस्स सर्वपदप्रवृत्तिनिमित्तम्। व्यापकत्वन्द्विविधम् व्याप्यसमानाधिकरणात्यन्ताऽभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् एकम् व्याप्यसमानाधिकरणान्योन्याऽभावप्रतियोगितानवच्छेदकधर्मवत्त्वन्द्वितीयम्। यथा पर्वतो वह्निमानित्यत्र पर्वते धूमसमानाधिकरणात्यन्ताभावो घटादीनामेव तादृशात्यन्ताऽभावप्रतियोगितावच्छेदकधर्मो घटत्वादिकम्। तादृशधर्मवत्त्वं घटादावेव प्राप्तम् वह्नेश्च धूमाधिकरणे पर्वतेऽत्यन्ताऽभावो न भवति इति वह्नित्वन्धूमसमानाधिकरणात्यन्ताऽभावप्रतियोगितानवच्छेदकधर्मइति तदेव धूमव्यापकत्वमिति प्रथमोदाहरणम्। पर्वते धूमसमानाधिकरणः पर्वतो जलवान्न इत्याकारक एवान्योन्याऽभावस्सम्भवति तत्प्रतियोगी जलवान् प्रतियोगितावच्छेदकत्वं जलवद्विशेषणत्वात् जले प्राप्तम्। वह्निमान् न इत्याकारकस्तु पर्वतेऽन्योन्याऽभावो न भवति इति वह्नौ यत् तादृशान्योन्याऽभावप्रतियोगितानवच्छेदक-

---

तात्पर्य्यायविषयतासम्बन्धनिवेशे तु न कुत्रापि दोषः।

त्त्वम् प्राप्तम् तच्च धूमव्यापकत्वमेवेति । द्वितीयोदाहरणम् अत्र सर्वशब्दार्थ-घटकव्यापकलक्षणे यद्यत्यन्ताभावग्रहणञ्चेत्तर्हि सर्वाणि द्रव्याणि रूपवन्ती-त्त्यनिष्टप्रयोगापत्तिस्तथाहि अत्रोद्देश्यतावच्छेदकं द्रव्यत्त्वम् तदधिकरणे रूपशून्ये अकाशेऽपि रूपन्नास्तीत्याकारकरूपात्यन्ताऽभावसत्त्वेऽपि प्रमेयन्नास्ती-त्त्याकारकप्रमेयात्यन्ताऽभावस्तु नास्त्येव आकाशे शब्दस्य सत्त्वात् शब्दस्याऽपि प्रमेयत्वात । तथा च प्रमेयत्वं द्रव्यत्ववदाकाशनिष्ठात्यन्ताऽभावप्रतियोगिता-नवच्छेदकमेव धर्मस्तादृशप्रमेयत्वधर्मवत्त्वञ्च रूपव्याप्यपर्याप्तावस्त्येवेति रूप-व्याप्यपर्य्याप्तौ द्रव्यत्वव्यापकत्वलाभात् सर्वाणि द्रव्याणि रूपवन्तीतिप्र-योगापत्तिस्स्यादेव । अन्योन्याऽभावघटितव्यापकत्वग्रहणे तु द्रव्यत्त्वाधिकरणे आकाशे आकाशं रूपव्याप्यपर्य्याप्तिमन्नेत्त्याकारकोऽन्योन्याऽभावोऽस्त्येव आकाशे रूपाऽभावात तादृशान्योन्याभावप्रतियोगिरूपव्याप्यपर्याप्तिवत्व तद्विशेषणीभूत-रूपव्याप्यपर्य्याप्तौ तादृशान्योन्याऽभावप्रतियोगितावच्छेदकत्वमेव प्राप्तमिति रूप-व्याप्यपर्य्याप्तौ द्रव्यत्वव्यापकत्वाऽलाभात न सर्वाणि द्रव्याणि रूपवन्तीत्यापत्तिः ।

व्याप्यत्वञ्च व्यापकाभाववदवृत्तित्वम्, धूमादीनाम्वह्न्याद्यभाववदवृत्तित्वात । ननु यदि विधेयाऽभाववदवृत्तित्वरूपं व्याप्यत्वमिष्टं स्यात्तदा सर्वे घटाः प्रमेया इत्यादिकेवलान्वयिविधेयकस्थले प्रमेयत्वाऽभावस्य सर्वत्रैवाप्रसिद्धत्वात् सर्व-पदार्थबोधो न स्यादिति चेन्न ? व्यभिचारित्वसम्बन्धावच्छिन्ना प्रति-योगिता यस्य तथा एतादृशो यो व्यभिचारित्वसम्बन्धावच्छिन्नप्रति-योगिकतत्तद्विधेयतावच्छेदकावच्छिन्नप्रतियोगिताकस्तत्तद्विधेयाऽभावस्तादृशविधेया-ऽभाववत्त्वमत्र विधेयव्याप्यत्वम् । व्यभिचारित्वसम्बन्धश्च स्वाऽभाववदवृत्ति-त्वसम्बन्धावच्छिन्नप्रतियोगिताकव्यापकाऽभावत्वम्व्याप्यत्वम् । यथा धूमे व-ह्न्यभाववदवृत्तित्वन्नास्तीति तादृशसम्बन्धेन धूमे वह्निस्तु न सम्भवति किन्तु व-ह्न्यभाव एव वर्त्तते इति वह्न्यभाववदवृत्तित्वसम्बन्धेन धूमे यद् वह्न्यभाववत्वं तद् वह्निव्याप्यत्वमेव, तथैव सर्वे घटाः प्रमेया इत्यत्र विधेयम्प्रमेयत्वं सर्वत्र स्वरूप-सम्बन्धेनैव वर्त्तते न तु स्वाऽभाववदवृत्तित्वसम्बन्धेनेति स्वाभाववदवृत्तित्वसम्बन्धेन उक्तपर्य्याप्तौ प्रमेयत्वाऽभाववत्वं तदेव प्रमेयत्वव्याप्यत्वमस्तीति दोषाऽभावात ।

किञ्च व्यभिचारित्वसम्बन्धस्य स्वाऽभाववदवृत्तित्वसम्बन्धेनेतिव्याख्या न कार्य्या किन्तु व्याप्ये व्यभिचारित्वन्नास्तीति तेन व्यभिचारित्वसम्बन्धेन व्यापका-

ऽभावत्वं सुलभमेव । तथैवोक्तपर्य्याप्तौ प्रमेयत्वव्यभिचारित्वन्नास्त्येवेति तेन व्यभिचारित्वसम्बन्धेन प्रमेयाऽभाववत्त्वम्बिज्ञेयम् । सर्वे घटा रूपवन्त इत्यादौ घटत्वव्यापकपर्य्याप्त्युक्तसम्बन्धेन रूपाऽभाववत्त्वमस्त्येवेति उक्तपर्य्याप्तौ व्यभिचारित्वसम्बन्धेन रूपस्याऽसम्भवात् । यथा पटसत्त्वेऽपि घटत्वेन पटो नास्तीति व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽप्यभावऽप्रसिद्ध एव । यथा भूतले संयोगेन घटसत्त्वेऽपि समवायसम्बन्धेन तथाविधाऽभावस्याऽप्रसिद्धत्वेऽपि व्यधिकरणेन व्यभिचारित्त्वसम्बन्धेन विधेयाऽभावऽप्रसिद्ध एव इति सर्वे घटाऽप्रमेया इत्यादिषु न व्यभिचारः । ननु को व्यधिकरणधर्मः कश्च व्यधिकरणसम्बन्ध इति प्रश्नः । यो यस्य धर्मो न भवति स तस्य व्यधिकरणधर्मः यो यस्य यत्र सम्बन्धो न भवति स तस्य व्यधिकरणसम्बन्धः । यथा वह्न्याद्यभाववति घटादीनां सत्त्वात् तत्र स्वाऽभाववद्वृत्तित्वसम्बन्धस्य च प्रसिद्धिरिति उद्देश्यतावच्छेदकघटत्वादीनामनुगमकस्विधेयतावच्छेदकत्वमेवात एवापूर्वधर्मव्यापकत्वहानिर्न । नापि सर्वपदशक्तेरानन्त्यम् पूर्वमगृहीतस्याऽपि पटत्वादिधर्मस्योद्देश्यतावच्छेदकत्वेन रूपेण सुग्रहत्वात् । उपलक्षणत्वादेवोद्देश्यतावच्छेदकत्वविधेयतावच्छेदकत्ववत्त्वयोश्शाब्दबोधे प्रवेशो नास्ति । तच्छब्दादौ बुद्धिविषयतावच्छेदकत्त्वोपलक्षणाऽप्रवेशवत् ।

किञ्च सर्वे घटा रूपवन्त इत्यादौ स्वार्थस्य सर्वशब्दार्थस्य उद्देश्ये घटेऽन्वयोऽस्ति इति स्वार्थान्वयितावच्छेदकधर्मो घटत्वम् तद्व्यापिका तथा तादृशधर्मावच्छिन्नस्य स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नस्य नाम उद्देश्यस्य योऽन्वयितावच्छेदकधर्मो विधेयतावच्छेदकधर्मो रूपत्वम् तदवच्छिन्नव्याप्या या पर्य्याप्तिस्तादृशपर्य्याप्तिको यो धर्मो यावत्त्वं तदवच्छिन्नस्सर्वपदार्थः । अत्र घटस्याऽधेयतासम्बन्धेन रूपेऽन्वयो भवतीति उद्देश्यस्य घटस्य अन्वयितावच्छेदकधर्मो रूपत्वम् । पृथिव्यां सर्वाणि रूपाणीत्यत्र सर्वपदार्थस्य रूपेऽन्वयोऽस्तीति स्वार्थान्वयितावच्छेदकधर्मो रूपत्वम् तद्व्यापिका तथा रूपत्वावच्छिन्नस्य अन्वयितावच्छेदकधर्मः पृथिवीत्वम् तदवच्छिन्नव्याप्या या पर्य्याप्तिस्तादृशपर्य्याप्तिको यो धर्मो यावत्त्वन्तदवच्छिन्नत्वं सर्वपदार्थः अत्र रूपसमुदायस्य पृथिव्यामन्वयात्तदन्वयितावच्छेदकधर्मऽपृथिवीत्वम् । ननु अन्वयिपदेन सर्वत्र विशेष्यस्यैव ग्रहणम्प्रसिद्धमत्र तु विशेषणीभूतरूपादेर्विधेयस्य कथं ग्रहणमिति चेन्न ? अस्मिन्नर्थे अन्वयिपदेन विशेष्यविशेषणयोरुभयोर्ग्रहणात् । सर्वं गगनमित्यादौ प्रयोगाऽभावायानेकत्वमपि सर्वशब्दार्थः ।

अयं सर्वं घटमेवेति इत्यादावन्यार्थः । सर्वंप्रमेयमित्यादावन्यार्थः । चैत्रो दधि भुङ्क्ते मैत्रःपयो भुङ्क्ते देवदत्तो घृतम्भुंक्ते विष्णुमित्रस्सर्वमेवेत्यादौ उपक्रान्त-पदार्थमात्रेऽपि सर्वपदशक्तिरेवमनेके सर्वशब्दर्था इत्यलम् ।

## किमर्थाः—

किंशब्द इति किंशब्दस्याक्षेपार्थे १ कुत्सिते २ वितर्के ३ प्रश्ने च ४ शक्तिः । किंमौः किमिन्दुः निषेधार्थः किम्पद्मम् स किंसखा साधु न शास्ति योऽधिपं हिताच्च यस्संश्रुणुते स किम्प्रभुः, किन्तत्र गमनेन मा याहीत्यर्थः । किम्प्रमाणमीश्वरे इति चतुर्थकत्वम् । उदुद्देश्यवाचककिंशब्दस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदक-धर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितधर्मः प्रवृत्ति-निमित्तम् । को गच्छति इति कथने ब्राह्मणो गच्छतीत्युत्तरम् । नच प्रमेयो गच्छ-तीत्युत्तरं कुतो नेति वाच्यम् ? स्वसमभिव्याहृतपदोपस्थाप्यविधेयन्यूनवृत्तिधर्माव-च्छिन्ने शक्तिस्वीकारात् । गमनकृत्यपेक्षया प्रमेयत्वस्न न्यूनवृत्तीतिव्यभिचारा-ऽभावात् । विधेयवाचकमपि किम्पदम् । अयं कः स्वसमभिव्याहृतपदोपस्थाप्य-तावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकत्वेन वक्तृजिज्ञासितध-र्मः प्रवृत्तिनिमित्तम् । उपस्थाप्यान्तमुपलक्षणतयाऽनुगमकन्तच्छब्दवत् काला-न्तरीणपुरुषान्तरीयस्वत्वाऽननुगमवारणाय किम्पदविशिष्टो बोधो भवत्वित्याकारकं पदप्रकारकबोधविशेष्यकशक्तिज्ञानम् । वैशिष्ट्यञ्च स्वसमभिव्याहृतपदोपस्थाप्यता-वच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितविषय-कत्व स्वजन्यत्वमुभयसम्बन्धेनोदाहरणं स्फुटतरमेवेति दिक् ।

यच्छब्दः प्रक्रम्यमाणपरामर्शकः प्रक्रान्तपरामर्शकश्च । वर्त्तमानकालिकोप-क्रमविषयः प्रक्रम्यमाणः । भूतकालिकोपक्रमविषयः प्रक्रान्त इति विधिः । तत्पदप्रतिपाद्यस्सन् यो वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मेण घटत्वादिना-ऽवच्छिन्नस्तस्मिन् प्रक्रम्यमाणपरामर्शकयच्छब्दस्य शक्तिरिति फलितार्थः । स कथयति यो जानाति तमानय य इहास्ति, अत एव यत्तदोर्नित्यसापेक्षता । प्रक्रा-न्तपरामर्शकयत्तदोर्न नित्यसापेक्षता । चैत्रस्समागतो यस्तत्रावलोकितः । साधु च-न्द्रमसि पुष्करैः कृतम्मीलितं यदभिरामताधिके ।

इदमेतदोः प्रत्यक्षबुद्धिविषये शक्तिः अर्थात् वक्तृप्रत्यक्षज्ञाननिरूपितलौकि-कविषयतावति यथा अयं घटः एष घटः । ननु अयमात्मा इदं गगनम् दीधितिकृता

इदन्द्व्यणुकन्नित्यमणुत्वादित्यतीन्द्रिये द्व्यणुके इदम्पदम्प्रयुक्तमेवमादीनां प्रत्यक्षत्वाऽभावात्कथं सिद्धिरिति चेन्न ? प्रत्यक्षपदेन विनिगमनाविरहात् लौकिकाऽलौकिकोभयप्रत्यक्षग्रहणेन घटादीनां लौकिकप्रत्यक्षविषयत्वमात्ममन आदीनामलौकि० । अदश्शब्दस्य परोक्षविषये अर्थात् लौकिकविषयताशालिप्रत्यक्षभिन्नज्ञानविषय इति यावत् । असावात्मेति युक्तमुदाहरणम् । स्वशब्दस्य स्वसमभिव्याहृतपदोपस्थाप्ये शक्तिः, समभिव्याहृतत्वञ्चैकवाक्यघटकत्वम् । चैत्रस्स्वपुत्रम्पश्यतीत्युदाहरणम् । इदम्पदविशिष्टो बोधो भवतु । एतत्पदविशिष्टो बोधो भवतु अदःपदविशिष्टो बोधो भवत्विति । वैशिष्टयञ्च स्वार्थबोधनाय वक्तृप्रत्यक्षज्ञाननिरूपितलौकिकविषयतावत्त्वम् स्वजन्यत्वमित्युभयसम्बन्धेनेति दोषाःपारहर्त्तव्याः । एवमेव सर्वत्रापि तच्छब्दवत् एकशब्दस्य कैवल्यादिविशिष्टेऽर्थे शक्तिःकैवल्यञ्च सजातीयद्वितीयरहितत्वम् । अनेकव्यक्तिका घटाःपरस्परं सजातीया भवन्ति इति तत्रान्यघटव्यक्तिनिष्ठतद्घटप्रतियोगिकभेदस्य प्रतियोगित्वमेतद्घटव्यक्तौ वर्त्तते । यस्य च सजातीयन्द्वितीयञ्च भवति तत्र सजातीयनिष्ठस्वप्रतियोगिकभेदप्रतियोगित्वमपि न भवति । यथा ब्रह्मणि अत्र भेदशब्देन तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भेदो ग्राह्य इति द्वित्वावच्छिन्नप्रतियोगिताकभेदमादाय न दोषः । उद्देश्यविधेयवाचकमेकपदम् । एकपदविशिष्टो भवतु वैशिष्ट्यञ्च० स्वसजातीयनिष्ठभेदाऽप्रतियोगित्वविशिष्टविषयकत्व स्वजन्यत्वैतदुभयसम्बन्धेन । किञ्च उक्तविभक्त्यर्थवत्वे सत्येकत्वसंख्यावद्विषयकत्व स्वजन्यत्वैतदुभयसम्बन्धेन । यन्निष्ठसंसर्गतायां प्रतियोग्यनुयोगिविषयतानिरूपितत्वं स एव साक्षात्सम्बन्ध इति दिक् । एवम्मात्रशब्दार्थोऽपि । एकत्समानार्थकम्मात्रपदम् मात्रं कात्स्न्र्येऽवधारणे" इति चामरः । मात्रशब्दस्येतरयोगव्यवच्छेदकत्वम् अर्थः । मात्रशब्दसमानार्थकैवशब्दार्थोऽत्र विचार्य्यः । एवशब्दस्यार्थोऽवधारणसम्भवश्च । "एवे चानियोग" इति भाष्यवार्त्तिकम् ? उष्ट्रो लवणमेव भुङ्क्ते घट एव प्रसिद्धः, क्वेव भोक्ष्यसे इत्यादिषु प्राचुर्य्याऽव्यर्थकासम्भवार्थानामप्रतीतेः । अवधारणन्त्रिविधम् विशेष्यसङ्गतैवकारेऽन्ययोगव्यवच्छेदरूपम् "पार्थ एव धनुर्द्धरः" पार्थेतरस्मिन्धनुर्द्धरत्वन्नास्ति, पार्थेतरावृत्तिधनुर्द्धरत्ववान् पार्थः । विषणसङ्गतैवकारेऽयोगव्यवच्छेदरूपम् शङ्खःपाण्डुर एव, क्रियासङ्गतैवकारेऽत्यन्ताऽयोगव्यवच्छेदरूपम् नीलं सरोजम्भवत्येव । ननु केवलेतरयोगव्यवच्छेदार्थकत्वे पार्थ एवेत्युक्ते वाक्ये

इतरस्य योगस्सम्बन्धस्तस्य व्यवच्छेदोऽभाव इत्यर्थः। पार्थ स्त्रीपुत्रादीनां सम्बन्धः मैनेजरादीनाञ्च सम्बन्ध इति कथमन्ययोगव्यवच्छेदार्थकत्वमिति चेन्न ? अन्यस्मिन् योगे व्यवच्छेदे च खण्डशक्ति˘कस्यचित्पदार्थस्य योगः कस्यचिद्व्यवच्छेदः प्राकरणिकतात्पर्य्यवशात्।

धेट् पाने इति धातुःपानकर्मत्वगोत्वोभयधर्मविशिष्टत्वन्धेनुशब्दार्थः। चन्द्रत्वधर्मविशिष्टश्चन्द्रः, सूर्य्यत्वधर्मविशिष्टस्सूर्य्यः, तदुभयवाचकम्पुष्पवन्तपदम् पुष्पवन्तपदादेकदैव चन्द्रसूर्ययोरुभयो˘प्रतीतिरेककालावच्छेदेनैव। नैकम्बिहायाऽपरबोध˘कदाचिदपि। अत एव "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकराविति" अमरः। पुष्पवन्तशब्दोऽदन्तो हलन्तश्चेति श्रीधर्य्याममरटीकायाम्।

शब्दाश्रयत्वमाकाशत्वम्। आकाशत्वन्न जातिरेकमात्रवृत्तित्वात्।

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥

इत्यभिधानादप्रकृतमेतत्। शब्दाश्रयत्वमाकाशत्वन्तच्च नाकाशपदवाच्यम् आकाशपदात्स्वरूपत एवाकाशरूपार्थबोधात्। अयमभिप्रायः, आकाशत्वं यथा शब्दाश्रयत्वरूपम् तथाऽष्टद्रव्यातिरिक्तद्रव्यत्वरूपमपि, शब्दाश्रयत्वे शक्तिश्चेत्तर्हि अष्टद्रव्यातिरिक्तद्रव्यत्वेऽपि स्यादिष्टापत्तिस्तु न, एकधर्मिप्रकारीभूतेषु नानाधर्मेषु एकपदस्य पर्याप्त्या नानाशक्तीनां क्वचिदप्यदर्शनात। उभयत्रैका शक्तिस्तु न ? उभयधर्मप्रकारकबोधस्याऽप्रसिद्धत्वात् तस्मादाकाशपदस्य कस्मिन्नपि धर्मे शक्तिर्नास्तिइतिनिर्विकल्पक एव बोध इति तत्त्वम्। निर्विकल्पकत्वमाकाशपदार्थः आकाशत्वाप्रकारकत्वम्। तथाच तत्तद्धर्मप्रकारकशाब्दबोधे धर्मसामान्यावच्छिन्नत्वानवच्छिन्ना या बोधविषयत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपितविशेष्यतासंसर्गकं पदप्रकारकं तद्धर्मावच्छिन्नविशेष्यताकं शक्तिज्ञानम्विशिष्टाऽवाचकाकाशादिपदस्य कारणम्। कस्यापि धर्मस्याकाशादिपदवाच्यत्वन्नास्तीति स्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वसंबन्धेन कस्याऽपि धर्मस्य आकाशपदजन्यबोधविषयतायामन्वयाऽभावात् तादृशविषयतानिष्ठा प्रकारता धर्मसामान्यावच्छिन्नत्वानवच्छिन्ना जाता तच्च शक्तिज्ञानम् धर्मसामान्यावच्छिन्नत्वानवच्छिन्ना या आकाशपदजन्यतानिरूपितभगवत्सङ्केतायविशेष्यतासंबन्धेन आकाशपदविशिष्टमाकाशम् इत्याकारकव्याख्याप्रकार इति।

"त्यदादीनाम" इति अष्टकम्पाणिनीयम् त्यच्छब्दोऽपि सर्वनामा । यथा तच्छब्दस्य बुद्धिविशेषविषयत्वोपलक्षितवक्तृजिज्ञासिधर्मावच्छिन्ने शक्तिस्तथा त्यच्छब्दस्याऽपीति पूर्ववद्व्यवहारः प्रदर्शित एवानुसन्धेयः । त्यद्तद्शब्दार्थविचारे समानैव गतिः ।

नहो धः—

पाणिनीयसङ्केतसम्बन्धेन पदसंज्ञकसमुदायघटकचरमावयवत्वेन प्रतीयमानस्य नहो हकारस्य धत्वमित्येकोऽर्थः झलव्यवहितपूर्वत्वविशिष्टस्य नहो हस्य धत्वमितिद्वितीयोऽर्थः । पाणिनीयसङ्केतसम्बन्धेन पदत्वावच्छिन्ना पदनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्ना तदन्तत्वावच्छिन्ना तदन्तनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना तदन्तत्वावच्छिन्ना तदन्तनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या नहत्वावच्छिन्ना नहनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिरूपितावयवितानिरूपकत्वसम्बन्धावच्छिन्ना नहत्वावच्छिन्ना नहनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्ना हत्वावच्छिन्ना हनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्ना स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धावच्छिन्ना स्वनिष्ठादेशितानिरूपकत्वसम्बन्धावच्छिन्ना वा या हत्वावच्छिन्ना हनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या धत्वावच्छिन्ना धनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना धत्वावच्छिन्ना धनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता च या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्व (आधेयत्व) सम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽस्त्यर्थक्रियात्वावच्छिन्ना क्रियानिष्ठः विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

उगितश्च—

पञ्चकम्प्रातिपदिकार्थः, पञ्चकन्धात्वर्थः, जातिव्यक्तिलिङ्गसंख्याकारकभेदात ,

क्रियात्त्वक्रियाकालकारकसंख्याभेदात्, समवायसम्बन्धावच्छिन्नस्त्रीत्त्वत्त्वनिष्ठ-निरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना स्त्रीत्त्व-निष्ठा प्रकारता तादृशप्रकारतानिरूपिता तथा स्त्रीत्त्वनिष्ठवाच्यतानिरूपकत्वसंबंधाव च्छिन्ना उगिदन्तत्वाच्छिन्ना उगिदन्तनिष्ठा या विशेष्यता तादृशविशेष्यतासमा-नाधिकरणा याऽभेदसम्बन्धावच्छिन्ना उगिदन्तनिष्ठा प्रकारता तादृशप्रकारतानिरू पिता या पाणिनीयसङ्केतसम्बन्धावच्छिन्ना प्रातिपदिकत्त्वावच्छिन्ना प्रातिपदि-कनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अव्यवहितोत्तरत्त्वस-म्बन्धावच्छिन्ना प्रातिपदिकत्त्वावच्छिन्ना प्रातिपदिकनिष्ठा प्रकारता तादृशप्रका-रतानिरूपिता या प्रत्ययसंज्ञकङीप्त्वावच्छिन्ना ङीप्निष्ठा विशेष्यता तादृशवि-शेष्यतासमानाधिकरणा या ऽभेदसंबन्धावच्छिन्ना ङीप्त्वावच्छिन्ना ङीप्निष्ठ प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्त्वत्त्वाव-च्छिन्नैकत्त्वनिष्ठप्रकारतानिरूपिता च या कर्तृत्त्वावच्छिन्ना कर्तृनिष्ठा विशेष्य-ता तादृशविशेष्यतासमानाधिकरणा या आधेयत्त्वसम्बन्धावच्छिन्ना कर्तृत्त्वा-वच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या परिच्छिन्नत्त्वसम्ब-न्धावच्छिन्ना वर्तमानकालत्त्वावच्छिन्ना वर्तमानकालनिष्ठा या प्रकारता तादृशप्र-कारतानिरूपिताऽस्त्यर्थसत्तात्त्वावच्छिन्ना अस्त्यर्थसत्तानिष्ठा विशेष्यता तादृशवि-शेष्यताशालिशाब्दबोधः ।

प्रातिपदिकार्थं इति ।

स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्याकर्मादिरेव च ।
अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः ॥

इति प्रमाणात्पञ्चकम्प्रातिपदिकार्थो वैयाकरणमते पञ्चकञ्च धात्वर्थः क्रियात्त्व-क्रियाकालकारकसंख्याभेदात् ।

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् ।
शब्दस्सुकरसम्बन्धो नच व्यभिचरिष्यति ॥

मीमांसकास्तु गवादिशब्दानां जातावेवाकृतिस्वरूपायां शक्तिः । जातौ श-क्तिर्व्यक्तौ लक्षणेति न गौरनुबन्ध्य इत्यादौ दोषः । किञ्च स्वाश्रयकर्मकत्त्वसम्ब-न्धेन जातेर्व्यक्तावन्वयः, आनन्त्याद् व्यक्तीनामव्यभिचारदोषाल्लाघवेन जातावेवे-त्याहुः । चार्वाकवत् केवलप्रत्यक्षप्रमाणवादिनोऽशाब्दिकमीमांसकयोरनीश्वरवादे

साम्यम्। शक्तिवादे तु वैषम्यमुक्तमेवात एव महाभाष्यारम्भे नेश्वराराधनाऽष्टाध्याय्याश्च। "अथ शब्दानुशासनमि"त्येव "द्वे ब्रह्मणी" इतिश्रुतिश्शब्दब्रह्म परब्रह्म च; "यच्छब्द आह तदस्माकं प्रमाणमि"ति पस्पशाभाष्यम्। शब्दे ब्रह्मणि निष्णातः परब्रह्माधिगच्छति इति च। एकश्शब्दस्सम्यग् ज्ञातस्सुष्ठु प्रयुक्तस्स्वर्गे लोके च कामधुग्भवतीति श्रुतिः। अत एव "तद् द्वारमपवर्गस्येति" इयं सा मोक्षमाणानामजिह्मा राजपद्धति"रिति च "सर्वप्रकाशकं शब्दब्रह्म चेत्यभिधीयते" इति अथ प्रमाणप्रबन्धः प्रत्यक्षमेव प्रमाणमिति चार्वाकः।

प्रत्यक्षमनुमानञ्चेति द्वे एवेति वैशेषिकाः। प्रत्यक्षमनुमानमागम इति सांख्याः वाच्यवाचकभावस्सम्बन्धश्शब्दार्थयोरितिसांख्याः। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति नैयायिकाः। प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदात्षट् प्रमाणानीति भाट्टवेदान्तिनौ। प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसम्भवैतिह्यभेदादष्टौ प्रमाणानीति पौराणिकाः, चेष्टया सह नव प्रमाणानीति आलङ्कारिकाः। शब्दः प्रत्यक्षञ्चेति प्रमाणद्वयं शाब्दिकानाम्। अत एव मीमांसकवदनीश्वरवादित्वं वैयाकरणानां सिध्यति।

मीमांसकमतञ्च ज्यायस्तरम्—यदि जातिरेव पदार्थस्तदा घटत्वस्य पदार्थत्वेन पदार्थैकदेशत्वाऽभावात्पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति नियमस्याऽप्राप्त्या नित्यत्वस्य घटत्वेऽन्वयान्नित्यो घट इति प्रयोगापत्तेः। घटत्वस्य गोत्वस्य च पदार्थत्वे तस्यैव शक्यत्वेन शक्यतावच्छेदकं घटत्वत्वं गोत्वत्वञ्चेति विशिष्टधर्मावच्छेदकत्वे गौरवाच्च। लोकार्थबोधनाय व्यक्तौ लक्षणायां लक्ष्यतावच्छेदकगौरवाच्च। न च व्यक्तिशक्तिवादेऽपि "नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामति विशिष्टबुद्धौ विशेषणज्ञानङ्कारणमिति" न्यायाभ्यां जातेरावश्यकत्वात्तत्रैवास्तु शक्तिरिति मीमांसकानुमतमेव न्याय्यमिति वाच्यम्? गोत्वत्वावच्छिन्नत्वेन भानापत्तौ शक्यतावच्छेदकगौरवात्।

न चोपलक्षणत्वञ्च प्रकृते शक्तिविषयत्वे सति शाब्दबोधाऽविषयत्वमेव। गोत्वत्वस्योपलक्षणत्वात्स्वरूपत एव गोत्वेन भानमिति न गौरवमिति वाच्यम्, स्वरूपतो गोत्वस्य भाने जातेरुपलक्षणत्वे गवादिपदजन्यशाब्दबोधे ऽविशेषात् द्रव्यत्वादेरपि भानं स्यादतो व्यक्तिविशेषणत्वमेव जातेः स्वीकार्यमिति। जातिशक्तिवादस्य गौरवग्रस्तत्वात। अत्र शुद्धमीमांसकाः, व्यक्तिशक्तौ न विरोधः व्यक्तेः

शक्तिरस्तु शाब्दबोधम्प्रति शक्तिज्ञानस्य व्यक्तिनिरूपितशक्तिज्ञानत्वेन कारणत्वन्नास्तीति व्यक्तिनिरूपिता शक्तिस्स्वरूपसत्त्येवोपयुज्यते न तु ज्ञाता सती, जातिनिरूपिताशक्तिश्च ज्ञाता सती उपयुज्यते शाब्दबोधम्प्रति शक्तिज्ञानस्य जातिनिरूपित-शक्तिज्ञानत्वेन कारणत्वमिति भेदो जातिव्यक्तिशक्त्योर्वादे । नैयायिकास्तु—"जात्याकृतिव्यक्तयऽपदार्थः" इति गौतमसूत्रानुरोधेन घटपदस्य घटघटत्वसमवायेषु शक्तिः । आकृतिपदेन समवायः । न च घटपदाद् घटो बोद्धव्य इतीच्छया बोधविशेष्यता घट एव न घटत्वादाविति । विषयतामात्रञ्च तद्घटकघुध् तव्य इत्यादिष्वपीति कथन्त्रिष्वेव शक्तिरिति वाच्यम् ? आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यतारूपसम्बन्धेन घटादिपदजन्यबोधविषयता घटादौ वर्त्तते, स्वनिष्ठावच्छेद्यतानिरूपितावच्छेदकतात्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यतारूपसम्बन्धेन घटत्वादौ शक्तिः ।

टापमन्तरेणाऽपि बागादिशब्दे लिङ्गप्रतीत्या लिङ्गमपि प्रातिपदिकार्थः । दधि पश्येत्यादौ विभक्तेर्लुक्यपि संख्याकारकयोः प्रतीत्या ते अपि प्रातिपदिकार्थः । लिङ्गं संख्यायाम्विशेषणम् । कारकञ्च व्यक्तौ विशेषणम् द्योत्यम्विशेषणमिति नियमात् । प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येवेति एवशब्देनास्वपदविग्रहो मात्रशब्देन मयूरव्यंसकादित्वात्समासः । द्वन्द्वान्ते द्वन्द्वादौ द्वन्द्वमध्ये वा श्रूयमाणम्पदं प्रत्येकमभिसम्बध्यते इति नियमेन मात्रशब्दार्थे द्वन्द्वघटकसर्वपदार्थानामन्वयः । ननूक्तनियमस्वीकारे वीतरागभयक्रोधः, जगदुदयरक्षाप्रलयकृदित्यादौ दोष इति चेन्न ? द्वन्द्वं कृत्वा द्वन्द्वघटकपदमात्रातिरिक्तं पदन्तदादौ तदन्ते वा श्रूयमाणम्पदम्प्रत्येकमभिसम्बध्यत इति स्वरूपात् । द्वन्द्वान्त इत्यंशे प्रमाणम् गतिबुद्धीतिसूत्रे साहित्ये द्वन्द्वविधान"जीवद्योर्न"ति वार्तिकञ्च ।

द्वन्द्वादावित्यत्र प्रमाणन्तु "अधिशीङ्स्थासाङ्कर्मे"ति सूत्रेऽधिग्रहणम् । द्वन्द्वान्ते द्वन्द्वादौ द्वन्द्वमध्ये इत्त्यपि केचिद्वदन्ति । घटपटनीलमठशठा इत्त्युदाहरणम् । मध्यांशे द्वन्द्वघटकत्वमेव बोध्यम् । अत्र प्रमाणन्तु "अन्तरशब्दस्याङ्किविधिणत्वेषूपसर्गत्वम्वाच्यमि"तिवार्त्तिकीयमध्यपातिविधिग्रहणम् । "मात्रं कात्स्न्र्येऽवधारणे" इत्यमरः । मात्रशब्दस्यैतस्मिन् योगे व्यवच्छेदे च शक्तिः । इतरस्य भेदे आश्रये च शक्तिः तत्र प्रातिपदिकार्थपदार्थस्य प्रतियोगितासम्बन्धेन भेदेऽन्वयः,

आश्रयस्य च प्रतियोगितासम्बन्धेन योगशब्दार्थे सम्बन्धे विषयतानिरूपकबोधजनकत्वरूपेऽन्वयः, सम्बन्धस्य च स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेन व्यवच्छेदशब्दार्थाऽभावेऽन्वयः, अभावस्य च स्वरूपसम्बन्धेन प्रातिपदिकेऽन्वयः, तथाचेत्थं शाब्दबोधः ।

प्रातिपदिकार्थप्रतियोगिकभेदाश्रयनिष्ठविषयतानिरूपकबोधजनकत्वरूपसम्बन्धनिष्ठप्रतियोगिताकाऽभाववत्प्रातिपदिकात्प्रथमा । न च तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदमादाय भेदाश्रयप्रतियोगिकाऽभाववत्त्वाऽभावेनानेकघटतात्पर्येण घटा इत्यादौ प्रथमा न स्यादिति वाच्यम् ? प्रातिपदिकार्थतावच्छेदकावच्छिन्नप्रतियोगिताकभेदग्रहणेनाऽदोषात् । न च प्रमेयो घट इत्यादौ प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदस्याऽप्रसिद्धत्वेन प्रमेयाभिधेयज्ञेयशब्देभ्य प्रथमा न स्यादिति वाच्यम् ? "आकाशन्न पश्यति आकाशन्न जिघ्रति अभाव आकाशन्न पश्यति हिमविन्ध्यौनाङ्गुलिसमौ" इत्यादिष्वप्रसिद्धप्रतियोगिकाऽभावस्यैव सर्वसम्मतत्वात् । किञ्च यद्यत्र भूतले घटो नास्तीत्यत्रैतद्भूतलवृत्तिघटकर्तृकसत्ताया असत्त्वेन तत्प्रतियोगिकाऽभावस्याऽप्यप्रसिद्धप्रतियोगिकत्वात् ।

वस्तुतस्तु—

प्रातिपदिकविशिष्टात्प्रातिपदिकात्प्रथमा । वैशि० स्वार्थविषयकबोधजनकत्वस्वाभाववत्त्वसम्बन्धाभ्याम् । अभावीयप्रतियोगितावच्छेदकसम्बन्धश्च स्वार्थप्रतियोगिकभेदवद्विषयकबोधनिष्ठजन्यतानिरूपितजनकत्वरूपः । प्रमेयादेरुक्तसम्बन्धस्याप्रसिद्धत्वेन तादृशाऽप्रसिद्धसम्बन्धावच्छिन्नप्रतियोगिताकाऽभाववत्त्वसत्त्वात्प्रथमा । "इदमपि सूत्रं क्रियायोग एव प्रवर्त्तते इति भाष्यम् । नच घटोऽस्तीत्यादौ तिवर्थकर्त्तर्य्येव घटादिपदार्थस्यान्वये अभेदसम्बन्धेन क्रियान्वयाऽभावात्प्रथमा न स्यादिति वाच्यम् ? घटाऽभिन्नकर्तु क्रियायामन्वये घटस्याऽप्यन्वये बाधकाऽभावात् । नच देवदत्तस्स्वस्य पुत्रं पश्यतीत्यादौ स्वपदार्थस्याऽपि तिवर्थाऽभिन्नतया क्रियान्वयेन स्वशब्दात्प्रथमापत्तिरिति वाच्यम् ? क्रियानिष्ठविशेष्यतानिरूपितवृत्तित्वसम्बन्धावच्छिन्नप्रकारतासमानाधिकरणविशेष्यताविशिष्टात्प्रातिपदिकात्प्रथमादिरित्यर्थः । वैशि० स्वनिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताश्रयबोधकत्व स्वसमानाधिकरणभेदसम्बन्धावच्छिन्नप्रकारत्वाऽप्रयोजकत्वोभयसम्बन्धेन । स्वस्य पुत्रमित्यादौ भेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वमेवेति न दोषः । नीलस्छन्दरो

घटोऽस्तीत्यादौ सर्वत्र प्रथमा। एवं सुन्दरं पण्डितं पुत्रं पश्यतीत्यादौ द्वितीया। स्वस्य पुत्रं पश्यन्तं पश्येत्यादौ स्वपदान्न द्वितीया। क्रियापदेन धात्वर्थमात्रग्रहणात् द्वितीयान्तार्थस्य फलेऽन्वयेऽपि न दोषः। ननु पञ्चकं प्रातिपदिकार्थ इतिपक्षे लिङ्गमात्रेऽपि प्रथमा लिङ्गग्रहणमव्यर्थमिति चेन्न? तत्सामर्थ्यादत्र नियतोपस्थितिकस्यैव प्रातिपदिकार्थपदेन ग्रहणात्। निपूर्वकयम्धातोर्व्यापकत्वमर्थः, आश्रयत्वं क्तप्रत्ययार्थः, व्यापकत्वाश्रय इति भावः। नियता कोऽर्थो व्यापिकोपस्थितिर्यस्य स नियतोपस्थितिकः। व्यापकता च व्याप्यांशसाकाङ्क्षत्वाद् व्याप्यतानिरूपिता। किन्निरूपितव्यापकत्वमिति जिज्ञासायां यस्मिन्नुच्चारित इति, यदुच्चारितप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयो योऽर्थस्स तत्प्रातिपदिकार्थस्तन्मात्रबोधकात्प्रातिपदिकात्प्रथमेति फलितार्थः। ननु यत्तच्छार्थयोरननुगतत्वेनोच्चारितयत्किञ्चिद्घटादिशब्दविषयकत्वापत्तौ असति प्रतिबन्धके उद्देश्यतावच्छेदकव्यापकत्वम्विधेये भासत इतिनियमाऽप्रवृत्तौ शास्त्रस्यैतस्य सर्वलक्ष्यविषयकत्वं व्याहन्येत यत्तच्छब्दार्थयोरप्रवेशे सर्वार्थस्यैव यत्किञ्चित् प्रातिपदिकार्थत्वस्य सत्त्वेनातिप्रसङ्गरूपवज्रपात इति। नियता उपस्थितिर्यस्येति विग्रहः व्यापकत्वविशिष्टोपस्थितिनिरूपितविषयताश्रयोऽर्थस्समासार्थः। यद्विषयकोपस्थितिर्व्यापकत्वविशिष्टेति विग्रहार्थः। यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिस्स तदर्थ इतिशेखरः।

सप्तम्यर्थो निरूपितत्वं विषयत्वं षष्ठ्यर्थः निपूर्वकयम्धातोर्व्यापकत्वमर्थः, "इत्थम्भूतलक्षण" इतिविहितायास्तृतीयाया वैशिष्ट्यमर्थः तच्च स्वरूपसम्बन्धेन; सप्तम्यन्तयत्पदार्थस्य अभेदसम्बन्धेन उच्चारिततत्पदार्थेऽन्वयः, उच्चारिततत्पदार्थस्य अभेदसम्बन्धेनैव प्रातिपदिकपदार्थेऽन्वयः, प्रातिपदिकपदार्थस्य सप्तम्यर्थनिरूपितत्वसम्बन्धेन व्यापकत्वपदार्थेऽन्वयः, व्यापकत्वस्य स्वरूपसम्बन्धेन उपस्थितिपदार्थेऽन्वयः, यत्पदार्थस्य वृत्तित्वसम्बन्धेन षष्ठ्यर्थविषयत्वेऽन्वयः, षष्ठ्यर्थविषयत्वस्य स्वनिरूपितत्वसम्बन्धेन उपस्थितिपदार्थेऽन्वयः, इत्याशयेनैव यद्वि-

---

वस्तुतस्तु—कारकाधिकारीयविभक्तिमात्रातिरिक्त "शेषे षष्ठी" इत्यादिविहितविभक्त्यतिरिक्तविभक्तौ विकीर्षितायाम् क्रियानिष्ठविशेष्यतानिरूपितसाक्षात् परम्परया वा प्रकारताप्रयोजकात् प्रातिपदिकात् प्रथमा इत्येव "इदमपि सूत्रं क्रियाय ग एव प्रवर्त्तते" इति भाष्याभिमतमिति समाराध्यपादाः।

न्नोच्चारिताऽभिन्नेति पूर्वोक्तश्शाब्दबोधः ।

ननु "आकाशस्य तु विज्ञेयश्शब्दो वैशेषिको गुणः" समवायसम्बन्धेन घटस्याकाशनिष्ठत्वम्, उपस्थितिशब्दार्थो ज्ञानम्, तदधिकरणमात्मैव तथाच शब्दस्याकाशस्थत्वाज् ज्ञानस्यात्मस्थत्वादुभयोरेकाधिकरणवृत्तित्वाऽभावाद् व्याप्यव्यापकभावोऽनुपपन्न इतिचेन्न ? समवायेनाकाशाधिकरणकत्वेऽपि शब्दस्य स्वविषयकश्रावणप्रत्यक्षसमवायित्वसम्बन्धेनात्मनि सत्त्वादुपस्थितेर्व्यापकत्वाऽक्षतेः । नच कामक्रोधाद्युपहितमनसां शुकानां बकानां मूकानाञ्च शक्तिग्रहो न जात इत्यात्मन्युपस्थितेरभावेन पुनरपि व्यापकत्वमव्याहन्येतेति वाच्यम् ? स्वनिष्ठशक्तिग्रहाहितोद्‌बुद्धसंस्कारसमवायित्व स्वविषयकश्रावणप्रत्यक्षसमवायित्वोभयसम्बन्धेनात्मन्युभयोस्सत्वात ।

लिङ्गग्रहणसामर्थ्यादुपस्थितिपदस्य शाब्दबोधपरत्वात शाब्दबोधे तात्पर्यज्ञानं कारणमिति न नियतलिङ्गे तटादौ प्रातिपदिकार्थत्वेन प्रथमा । सर्वलिङ्गविषयकबोधस्यैकदाऽसम्भवात। नन्वेवन्नानार्थकहर्यादिपदस्थले सिंहत्वावच्छिन्नविषयकबोधेच्छयोच्चरितहरिपदनिष्ठविषयताव्यापकत्वस्य इन्द्रत्वावच्छिन्नविषयतायामभावेन इन्द्रत्वावच्छिन्नविषयताकबोधेच्छयोच्चरितहरिपदनिष्ठविषयताव्यापकत्वस्य सिंहत्वावच्छिन्नविषयतायामभावेन च चालनीन्यायेन कासामपि हरिपदवाच्यानांविषयतानां हरिपदजन्यबोधे व्यापकत्वभङ्गेन प्रातिपदिकार्थत्वन्न स्यादिति वाच्यम् ? प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वम्प्रातिपदिकार्थत्वम् । वैशिष्टयञ्च स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयविषयतात्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावत्वोभयसम्बन्धाभ्याम् ।

नच आश्रयभेदान्निरवच्छिन्नविषयता भिद्यते इतिसार्वजनीनः पन्थाः । अन्यघटवृत्तिघटत्वनिष्ठविषयताव्यापकत्वस्यैतद्घटनिष्ठविषयतायामभावेन केषामपि घटादीनामप्रातिपदिकार्थत्वञ्च स्यादिति वाच्यम् ? स्वज्ञानाधीनोपस्थितिप्रयोज्यत्वस्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगिताऽनवच्छेदकत्वसम्बन्धाभ्याम् प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वम्प्रातिपदिकार्थत्वम् ।

नच घटादिपदजन्यशाब्दबोधे घटत्वादिविषयके घटत्वविषयतावत्यनुमितिनिष्ठभेदस्य सत्त्वेनानुमितीया शाब्दबोधीया च निरवच्छिन्ना विषयतैकैव तथाच भेदप्रतियोगितावच्छेदकत्वस्यैव सत्त्वात्कथम्प्रातिपदिकार्थत्वमिति वाच्यम् ? स्वज्ञा-

-नाधीनोपस्थितिप्रयोज्यत्वस्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिरूपितानुयोगिता-निरूपितशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वसम्बन्धाभ्याम् ।

नच वस्तुपदजन्यपटत्वविषयतावच्छाब्दबोधो नेत्याकारकभेदमादाय पटस्य प्रातिपदिकार्थत्वन्न स्यादिति वाच्यम् ? स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणत्वाभाववत्वाभ्याम् । अनूक्तभेदीयप्रतियोगितावच्छेदकताया वस्तुपदजन्यत्व पटत्वविषयतात्वोभयपर्याप्तत्वेन शुद्धपर्याप्त्यधिकरणत्वाऽभाववत्वस्य पटत्वविषयतायां सत्त्वेनाक्षतेः ।

नच तत्पदनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यबोधे पटविषयके घटत्वविषयतावान्नेति घटविषयकबोधे पटत्वविषयतावान्नेतिभेदस्य परस्परं सत्त्वाच्छक्तिविशिष्टविषयताया ×कस्या अप्यभावेन तत्तत्पदप्रातिपदिकार्थत्वं कस्यचिदपि न भवेदिति वाच्यम् ?

प्रातिपदिकनिष्ठशक्तिविषयकज्ञानविशिष्टविषयताऽश्रयत्वम्प्रातिपदिकार्थत्वम् । वैशिष्ट्यञ्च० स्वाधीनोपस्थितिप्रयोज्यत्व स्वाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणत्वाऽभाववत्वसम्बन्धाभ्याम् ।

भवन्तस्तु—

---

प्रवृत्तिनिमित्तत्वञ्च-वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम् इति प्रकाशग्रन्थे पक्षधरमिश्रा नैयायिकशिरोमणयः । आकाशः शब्दाश्रय इति सहप्रयोगावलोकनात् आकाशपदाप्रवृत्तिनिमित्ते आकाशपदजन्योपस्थितीयप्रकारताश्रये शब्दाश्रयत्वे अतिव्याप्तिवारणाय प्रथमसत्यन्तदलम् । गौतमीय ।"जात्याकृतिव्यक्तयः पदार्थं" इति घटादिपदवाच्यावयवसंयोगविशेषरूपाकृतौ अतिव्याप्तिनिरासाय द्वितीयं सप्तम्यन्तदलम् । मृत्पदवाच्ये मृत्पदवाच्यकपालवृत्तिके घटे मृत्पदप्रवृत्तिनिमित्तत्ववारणाय विशेष्यदलम् । नचेह लक्षणे घटपदवाच्यत्वादिविशेषणत्रयविशिष्टे पुंस्त्वत्वादौ प्रवृत्तिनिमित्तत्वापत्तिरिति वाच्यम्? वैयाकरणनिकाये यथा आश्रयत्वादीनाम् अखण्डोपाधित्वाङ्गीकारेण निर्वाहस्तथैव पुंस्त्वादीनामपि अखण्डोपाधित्वाङ्गीकारेण तेषां स्वरूपसम्बन्धेन भानाभावेन पुंस्त्वत्वादौ घटादिपदवाच्यत्वास्वीकारात् अदोषात् । नच विशिष्टशक्तिपक्षे वाच्योपस्थितीयप्रकारताश्रयत्वस्य पुंस्त्वादावपि सत्त्वनातिव्याप्तिर्दुर्वारेति वाच्यम् ? वाच्यार्थनिष्ठविशेष्यताया: (प्रकारतानिरूपिकायाः) निरवच्छिन्नाया ग्रहणेन दोषाभावात् । इत्यादि तत्र २ समुह्यम् ।

प्रातिपदिकविशिष्टत्वम्प्रातिपदिकार्थत्वम् । वैशिष्ट्यञ्च स्वप्रयोज्यबोधविषयत्वेन तात्पर्यविषयत्व-स्वाऽभाववत्त्वसम्बन्धाभ्याम् । अभावीयप्रतियोगितावच्छेदकसम्बन्धश्च प्रयोज्यधर्मितानिरुपितप्रकारताश्रयत्व-स्वज्ञानाधीनोपस्थितिप्रयोज्यबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयरूपः । विष्णुतात्पर्येणाच्चरितहरिपदप्रातिपदिकार्थत्वमश्वादेर्वारणाय प्रथमस्सम्बन्धः । तटपदप्रातिपदिकार्थत्वम्पुंस्त्वादेर्न स्यादिति द्वितीयः । वटादौ प्रातिपदिकविशिष्टत्वेन प्रातिपदिकार्थत्वम्पृथक् ।

प्रवृत्तिनिमित्तन्तदाश्रयश्च प्रातिपदिकार्थं इति नवीनाः । प्रवृत्तिनिमित्तत्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम् ।

नन्वेवं लक्षणे घट इत्यादौ पुँल्त्वत्वादेरपि प्रवृत्तिनिमित्तत्वापत्तेः वैयाकरणमते लिङ्गस्याऽपि प्रातिपदिकार्थत्वात् इति चेत् ? स्वविशिष्टत्वं स्वप्रवृत्तिनिमित्तत्वम् । वैशिष्ट्यञ्च स्ववाच्यत्व स्ववाच्यवृत्तिविशेष्यतानिरुपितोपस्थितीयप्रकारताश्रयत्व स्वप्रयोज्यधर्मितानिरूपितप्रकारतानवच्छेदकत्वैतत्त्रितयसम्बन्धेन ।

## कर्त्तुरिति—

करोतीति कर्त्ता कर्त्तरि तृच्, कृधातोरुत्पत्त्यनुकूलव्यापारार्थकत्वेऽपि व्यापारमात्रमत्रार्थः । अनेकलक्ष्यानुरोधाद् "द्वितीयाश्रिते"त्यादिसामर्थ्याच्च । केव-

---

आप्धातोः सन्नन्तात् "मतिबुद्धिपूजार्थेभ्यश्च" इति शास्त्रेण वर्त्तमाने क्तप्रत्ययः। तथाच क्तप्रयययोगे यद्यपि "कर्तृकर्मणोः कृति" इति षष्ठी कर्तृशब्दात् तथापि "नलोकाऽव्ययनिष्ठाखलर्थतृनाम्" इतिशास्त्रेण निष्ठायोगे षष्ठीनिषेधोऽपि प्राप्तः परन्तुतदपि प्रतिबाध्य "क्तस्य च वर्त्तमाने" इति सूत्रेण षष्ठी सिध्यति । नच आप्धातोः मत्याद्यर्थाभावात् कथं "मतिबुद्धि" सूत्रेण क्तप्रत्ययो वर्त्तमान इति वाच्यम् ? "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुखी मतिः" इतिमतिबुद्ध्योः पर्य्यायवाचकत्वेनान्यतरोपादानवैयर्थ्यसम्पादनपुरस्सरम् भाष्ये "मतिरिहेच्छा" इति प्रतिपादनात् मत्यर्थेन इच्छार्थकग्रहणात् तथैव च भाष्योदाहरणात् सन्नन्तापूधातोरिच्छार्थकत्वेन क्तप्रत्ययस्य निर्बाधत्वात् । कर्त्तुः इति षष्ठीदर्शनाच्च । अन्यथा निरुक्तरीत्या भूतकालिकक्तप्रत्यये "नलोक" इति षष्ठी निषिद्धैव स्यात् । नच तादृशभाष्यादिबलेन इच्छामात्रार्थकग्रहणेऽपि ईप्सधातोः प्रकृत्यर्थस्याधिक्यात् इच्छामात्रार्थकत्वाभावेन भक्षितेऽपि लशुनेऽशान्तो व्याधिरिति वाच्यम् ? "असति बाधके प्रमाणानां सामान्ये पक्षपातः" इति परिभाषया "कर्त्तुः" इतिषष्ठीनिर्देशेन च इच्छार्थकल्पनायाः साधारण्येन ज्ञापनात् मात्रपदनिविष्टज्ञापने मानाभावादिति भावः ।

लाश्रयत्वमात्रन्तृजर्थः अनन्यलभ्यो हि शब्दार्थ इतिन्यायात् व्यापारस्य धातुलभ्यत्वात्। आप्नोतेस्सन्नन्ता "न्मतिबुद्धी"तिकर्मणि क्तःमतिरिहेच्छा बुद्धेः पृथगुपादानसामर्थ्यात्। इच्छामात्रार्थकत्वे भाष्यम्प्रमाणम्। ईप्सितशब्दः क्रियापरस्तमद्ग्रहणसामर्थ्यात् भाष्यात्तत्रत्याचद्प्रतीतेः। "क्तस्य च वर्त्तमान" इति कर्त्तरि षष्ठी तदर्थो व्यापाराश्रयत्वम्। ननु कटं कृतवान् कटं करिष्यतोरित्यादौ वर्त्तमानकालिकेच्छाविरहेण कर्मत्वन्न स्यादिति चेन्न! क्तप्रत्ययोपात्तवर्त्तमानत्वस्याऽविवक्षितत्वात। नच "क्तस्य च वर्त्तमान" इतिषष्ठी न स्यादिति वाच्यम्? "तस्याऽपत्य"मित्यत्र लिङ्गवचनवदविवक्षितत्वात। तत्र वर्त्तमानपदस्य भूतभविष्यद्व्यावर्त्तकपरत्वात् "गमेरिडि"त्यत्र परस्मैपदग्रहणस्य तङानयोरभावपरत्ववत्।

वस्तुतस्तु—

अतीतेऽह्नि कृतस्य पाकस्य तात्पर्य्येणेदानीम्पाकङ्करोतीति प्रयोगवारणाय प्रयोगविशिष्टत्वम्वर्त्तमानत्वम्। वैशिष्टयञ्च स्वोच्चारणसमानाधिकरणत्ववत्व स्ववाचकधातुजन्यबोधविषयत्वेन तात्पर्यविषयप्रारब्धाऽपरिसमाप्तिक्रियाश्रयत्वोभयसम्बन्धेन। समन्वयस्तु स्वयमूह्यः, क्तप्रत्ययार्थो वर्त्तमानश्च पाणिन्युच्चरितेप्सितप्रयोग एव।

नच वर्त्तमानत्वाऽविवक्षायाम्मानाऽभावः? कर्मणि हनः भावकर्मणोः कर्मणा यमभिप्रैतीत्या" देरेव प्रामाण्यात्। ननु तृचाऽऽश्रयत्वस्योक्तत्वादुक्तार्थानामप्रयोग इतिन्यायेन "प्राचां ष्फस्तद्धित" इतिसूत्रीयषिद्ग्रहणज्ञापितेन आश्रयार्थबोधिका षष्ठी कथङ्कारं स्यादिति चेन्न? तृचा कर्तृपदार्थव्यापारविशिष्टाश्रयत्वस्योक्तत्वेऽपि ईप्सधात्वर्थसम्बन्धप्रकारकेच्छानुकूलव्यापारविशिष्टाश्रयत्वस्यानुक्ततयोक्तार्थानामित्यस्याऽप्रवृत्तेः नचाभेदान्वयबोधम्प्रति विरूपोपस्थितिः कारणम् अत एव घटो घट इत्यादावभेदसंसर्गकघटप्रकारकघटविशेष्यकशाब्दबोधो न, प्रकृते व्यापाराश्रयस्य कर्तृपदार्थस्य षष्ठ्यर्थव्यापाराश्रयेण कथमभेदान्वयबोधः सरूपोपस्थितिसत्त्वात इति चेन्न? इच्छीयप्रकारताश्रयफलप्रयोजकव्यापाराश्रयः षष्ठ्यर्थः कर्तृपदस्य व्या-

---

वर्त्तमानत्वाविवक्षायाम् अपि वर्त्तमानत्वशक्तिमतः क्तस्य योगे षष्ठोत्यर्थाश्रयणान्न दोषः। यथा "सूत्रे लिङ्गवचनमतन्त्रम्" इतिपरिभाषाव्याख्यावसरे "तस्यापत्यम्" इति सूत्रघटकापत्यमित्यत्र नपुंसकत्वशक्तिमतः प्रातिपदिकात् स्वमोरम् स्वमोर्लुक् च। शक्तिमत्ता सदा तिष्ठत्येवेति परिभाषायां सत्यां न विवादस्तद्वत् अविवक्षितेऽपि वर्त्तमानत्वे वर्त्तमानत्वशक्तिसत्ता सदैव स्थिरेति न दोष इति तत्त्वज्ञाः।

पाराश्रय इति सामान्यविशेषयोरभेदान्वये क्षत्यभावात् । आश्रयत्वमात्रं कर्मप्रत्यय-यार्थः, व्यापाराश्रयः कर्तृपदार्थ इति न दोष इति । केचित्तु कर्तृपदार्थस्स्वतन्त्रः षष्ठ्यर्थो व्यापाराश्रय इति न दोष इति केचित् । नीलघटो घट इतिवद्विशेषणांशेऽधिकावगाहिबोधवत् इति दृष्टान्तश्च । ननु तण्डुलम्पचतीत्यादौ इच्छीयविषयत्वेनाऽस्मदादीनामपि कर्मत्वं स्यादिति चेन्न ? इच्छीयमुख्यविशेष्यताश्रयस्यैव तत्वाङ्गीकारेणाऽदोषात् । ननु स्तोकम्पचतीत्यादौ अभेदेनान्विते स्तोके विक्लित्त्याश्रयत्वाऽभावेन कथं कर्मत्वमिति चेन्न ? व्यपदेशिवद्भावेन फलसम्बन्धिन्यपि तत्त्वसिद्धेः । कटं भीष्मङ्कुर्वित्यवत् ।

ननु स्वजनकव्यापारवत्त्वसम्बन्धेन देवदत्तस्य स्वाधिकरणकालवृत्तित्वसम्बन्धेन पाषाणस्य कालिकसम्बन्धेन सर्वेषाम्फलाश्रयत्वात् पाषाणम्पचतीत्यादि स्यादितिचेन्न? समवायसम्बन्धेन फलाश्रयस्य विवक्षणेनाऽदोषात् । नच घटञ्जानातीति ग्रामन्त्यजतीत्यादौ विषयतासम्बन्धप्रतियोगित्वसम्बन्धसम्भवात्कथं कर्मत्वमिति वाच्यम् ? समवायविषयताप्रतियोगित्वान्यतमसम्बन्धेन फलाश्रयस्य विवक्षणेन निरुक्तप्रयोगाणां सिद्धत्वात् । अन्यतमत्वञ्च समवायविषयताप्रतियोगित्वरूपसमुदायत्वावच्छिन्नप्रतियोगिताकभेदवद्भिन्नत्वमित्येतेषामेव तत्वस्य सत्वेन जगतः प्रवेशाऽभावेनाक्षतेः । वस्तुतस्तु फलतावच्छेदकसम्बन्धेन फलाश्रयः कर्म भवतीत्यर्थे फलतायाः कार्यतारूपत्वेन कार्यतावच्छेदको यस्सम्बन्धस्स एव फलतावच्छेदक इति । सच यादृशाधिकरणम्मत्वा कार्यकारणभावस्तादृशाधिकरणे कार्यं येन सम्बन्धेन प्रतीयते स एव सम्बन्धः । तण्डुलादौ समवायेन विक्लित्तिम्प्रति व्यापारस्य कारणतया पचेः फलतावच्छेदकस्समवाय एव । कालम्पचतीति तु न ? काले समवायेन विक्लित्तेरसत्त्वात् । एवमन्येषान्धातूनामर्था ऊह्याः ।

ननु नरकङ्गच्छति काराऽगारङ्गच्छति बलाच्छत्रुगृहङ्गच्छतीत्यादौ कथं कर्मत्वन्नहि नरकं कारागारम्वा कश्चिद् गन्तुमिच्छतीति च मद्वृत्तिव्यापारजन्यविक्लित्त्याश्रयस्तण्डुलो भवत्वितीच्छाया यथासत्त्वम् इति चेन्न ? तादृशफलवत्त्वप्रकारकेच्छोद्देश्यत्वेन विवक्षितं कर्म भवतीत्यभिप्रायेण कर्मत्वसिद्धेः । नच ग्रामन्नगच्छतीत्यादौ नञर्थविशिष्टत्वेन फलाश्रयत्वाऽभावात्कथं कर्मत्वमिति वाच्यम् ? गम्धातोस्संयोगानुकूलव्यापारे शक्तत्वात् संयोगत्वेनारोपितसंयोगवास्तविकसंयोगयोर्ग्रहणेन रूपसिद्धेः । असमस्तनञः क्रियायामन्वयाच्च सम्बोधनान्तं कृ-

त्त्वोऽर्थो इतिकारिकावलात् ।

अर्थो द्विविधः बौद्धो बाह्यश्च । एवञ्च नञ्समभिव्याहारे बौद्ध एवार्थो नञ्पदन्तात्पर्यग्राहकम् अतो ग्रामन्न गच्छतीत्यादौ न कर्मत्त्वानुपपत्तिः ।

ननु ग्रामं त्यजतीतिवत् ग्रामाद्विभजते इत्यत्रापि कर्मत्त्वं स्यात् इति चेन्न ? ग्रामन्त्यजतीत्यत्र प्रतियोगित्त्वविशिष्टसमवाय॒फलतावच्छेदकः ग्रामाद्विभजत इत्यादौ अनुयोगित्त्वसमानाधिकरणसमवाय॒फलतावच्छेदक इति वैलक्षण्याल्लक्ष्यसिद्धिः ।

### स्वतन्त्र॒कर्त्ता—

व्यापाराश्रयत्त्वङ्कर्तृत्त्वमिति सामान्यलक्षणम् । नचैवं लक्षणेऽपादानत्त्वाधिकरणत्वादिसर्वेषां कारकाणां कारकव्यापारद्वारा साक्षात्परम्परया वा प्रधानक्रियानिष्पादकत्त्वेनापादानत्वादिकारकाणामपि कर्तृत्त्वापत्तिरिति वाच्यम् ? धात्त्वर्थव्यापाराश्रयत्वङ्कर्तृत्वं कर्तृभिन्नकारकव्यापारस्य धात्त्वर्थत्त्वाऽभावेनापात्त्यभावात् । नच अग्नेर्माणवकम्वारयतीत्यादौ संयोगानुकूलव्यापाराऽभावस्य वारिधात्त्वर्थत्वेन माणवकस्याऽपि कर्तृत्त्वापत्तिरिति वाच्यम् ? प्रधानीभूतधात्त्वर्थाऽऽश्रयत्त्वङ्कर्तृत्त्वम्माणवकनिष्ठो योऽग्निसंयोगानुकूलव्यापारस्तस्याऽप्रधानत्त्वात् । नच पक्वस्तण्डुलो देवदत्तेनेत्यादौ कर्मणि प्रत्ययात्फलस्यैव प्राधान्येन व्यापारस्याऽप्रधानत्त्वाद् देवत्तस्य कर्तृत्त्वन्न स्यात् । अजा ग्रामन्नीयत इत्यादावजाया॒कर्तृत्त्वापत्तिश्चेति वाच्यम् ? कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्त्वर्थाऽश्रयत्त्वङ्कर्तृत्त्वमिति तदानीमप्राधान्येऽपि पचति नयतीत्त्यादौ प्राधान्यसत्त्वेनाऽदोषात् । नच कर्तृत्वज्ञाने स्वातन्त्र्यज्ञाने स्वातन्त्र्यज्ञाने कर्तृत्त्वज्ञानमित्यन्योन्याश्रयापत्तिः, कर्मप्रत्ययसमभिव्याहारे पच्यते तण्डुलो देवदत्तेनेत्यादौ कर्तृत्त्वानापत्तिश्चेति वाच्यम् ? नच तिप्समभिव्याहार इति निवेशेनोभयत्र न क्षतिरिति वाच्यम् ? एधते देवदत्त इत्यादौ शपा व्यवधानेन तिप्समभिव्याहाराऽभावेन वज्रदोषात् । नच प्रधानीभूतधात्त्वर्थाश्रयत्त्वमेव कर्तृत्त्वम्प्राधान्यञ्चात्र जनकत्त्वेन प्रतीयमानत्त्वमेव नतु शाब्दबोधीयविशेष्यताऽश्रयत्त्वन्तथाच पच्यते तण्डुल इत्यदौ व्यापारस्य विशेष्यत्त्वाऽभावेऽपि जनकत्त्वेन प्रतीयमानत्त्वात्कर्तृत्त्वसिद्धेस्सौकर्य्यात् इति वाच्यम् ? अजां ग्रामन्नयतीति संयोगानुकूलव्यापारानुकूलव्यापारस्य धात्त्वर्थत्त्वात् प्राथमिकव्यापारस्य जनकत्त्वेन प्रतीयमानत्त्वादजाया॒कर्तृत्त्वापत्तेः । नच जनकत्त्वेन प्रतीयमानत्त्वे सति जन्यत्वेनाऽप्रतीयमान-

त्वमेव प्राधान्यमित्यजाव्यापारस्य जन्यत्वेन प्रतीयमानत्वात्प्राधान्याऽभावेन कर्तृत्वापत्तिदोषस्याजादावसम्भव इति वाच्यम् ? पचतीत्यादौ व्यापारस्य देवदत्तादिकर्तृजन्यत्वेन सर्वत्र प्रतीत्या कुत्राऽप्येवमादिस्थले कर्तृत्वानापत्तेः। पाचयति देवदत्तेन यज्ञदत्त इत्यादौ प्रयोज्यव्यापारस्य हेतुमण्णिजर्थव्यापारजन्यत्वेन प्रयोज्यव्यापाराश्रयस्य कर्त्तृत्वानापत्तेश्च।

## अत्रेत्थम्पूज्यचरणाः—

स्वविशिष्टव्यापारवत्त्वमेव स्वकर्त्तृत्वम्। वैशिष्ट्यञ्च—स्वजन्यबोधविषयत्त्वेन तात्पर्यविषयत्त्व-स्वजन्यबोधविषयत्त्वेन तात्पर्यविषयीभूतार्थनिरूपितजन्यत्त्वेनाऽप्रतीयमानत्त्व स्वबोध्यत्त्वेन तात्पर्य्यविषयनिरूपितजन्यत्त्वेन प्रतीयमानाऽभावाऽप्रतियोगित्त्वमिति त्रितयसम्बन्धेन पाचयतीत्त्यादावस्ति धातुद्वयम्। पच इति शुद्धः पाचि इति हेतुमण्णिजन्तः, प्रयोज्यस्य देवदत्तादेः पचनिरूपितं कर्तृत्त्वम्। प्रयोजकस्य पाचिनिरूपितं कर्तृत्त्वम्। पचेर्विक्लित्त्यनुकूलव्यापारोऽर्थः। पाचेर्विक्लित्त्यनुकूलव्यापारानुकूलव्यापारोऽर्थः। प्रथमव्यापारे पचिवैशिष्ट्यम् द्वितीयव्यापारे पाचिवैशिष्ट्यम्। अग्नेर्माणवकम्वारयतीत्त्यादौ संयोगानुकूलव्यापाराभावानुकूलव्यापारोऽर्थस्तत्र प्रथमव्यापारस्य जन्यत्त्वेनाऽप्रतीयमानत्त्वात्तदाश्रयमाणवकादेः कर्तृत्त्ववारणाय तृतीयसम्बन्धनिवेश इति।

## अतो दीर्घो यञि।

अभेदसम्बन्धावच्छिन्ना यञादित्त्वावच्छिन्ना यञादिनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या सार्वधातुकत्त्वावच्छिन्ना सार्वधातुकनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या अव्यवहितपूर्वत्त्वसम्बन्धावच्छिन्ना सार्वधातुकत्त्वावच्छिन्ना सार्वधातुकनिष्ठा पाणिनीयसङ्केतसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता मात्रिकत्त्वधर्मावच्छिन्ना मात्राद्वयन्यूनकालिकत्त्वधर्मावच्छिन्नाऽत्त्वावच्छिन्नाऽन्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या समवायसम्बन्धावच्छिन्ना अत्त्वावच्छिन्ना अन्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या बहुव्रीह्यर्थान्यपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना वाऽन्यपदार्थत्त्वावच्छिन्नाऽन्यपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽङ्गत्त्वावच्छिन्नाऽङ्गनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वनिष्ठोद्देश्यतानिरूपकत्त्व स्ववृत्तिमात्राधिकमात्राप्रव-

त्वैकत्व स्यानष्टस्थानिता निरूपकत्वसम्बन्धावच्छिन्नाऽङ्गत्वावच्छिन्नाऽङ्गनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या पाणिनीयसङ्केतसम्बन्धावच्छिन्ना दीर्घत्वावच्छिन्ना दीर्घनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना दीर्घत्वावच्छिन्ना दीर्घनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिताऽस्त्यर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताकशाब्दबोधः ।

## ण्वुल्तृचौ—

विवक्षितकर्तृपदार्थनिष्ठविषयतानिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्ना अधिकृतधातुत्वावच्छिन्ना धातुनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता ण्वुल्तृच् एतदन्यतरत्वावच्छिन्ना ऽन्यतरनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्नाऽन्यतरप्रत्ययत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या आधेयत्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिताऽस्त्यर्थक्रियात्वावच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः । ननु "धातो"रित्यधिकारात्स्वाव्यवहितोत्तरत्वसम्बन्धेन कर्तृरूपार्थे विवक्षिते ण्वुलस्तृचो वा विधानम् कदाचित् ण्वुल् कदाचित्तृच इति चेत्पर्यायतया विधानेऽपि वैकल्पिकत्वप्रसङ्गः । "यच्छब्द आह तदस्माकम्प्रमाणमि"ति भाष्यादेकस्मिन्नेव काले विनिगमनाविरहादुभयोर्विधानापत्तिः । पक्तेतिसाधनाय प्रवृत्तौ चिकीर्षितायां ण्वुलोऽपि तल्लक्ष्ये विधानन्निर्विवादमेव कथङ्कारम्पक्ता पाचक इति रूपसिद्धिरिति । नचोभयविधानसामर्थ्यात्पर्यायतेति वाच्यम् ? पार्थक्येन ण्वुलस्तृचो वा विधानस्य पाणिनिना कर्त्तुं शक्यत्वात् ।

प्रत्ययानाम्प्रकृत्यर्थान्वितेति—

प्रत्येत्यर्थम्बोधयतीति प्रत्ययः। अथवा स्वीयमर्थम्प्रत्याययतीति प्रत्यय इति पातञ्जलभाष्यम्। अथवा पाणिनीयसङ्केतसम्बन्धेन प्रत्ययपदवत्त्वम् प्रत्ययत्वम्। पाणिनीयाष्टकानुरोधेन प्रत्ययाधिकारपठितत्वम्प्रत्ययत्वम्। अत एव स्वार्थिकानाम्प्रज्ञादिभ्योऽणित्यादीनामपि प्रत्ययत्वम्। अत एव "क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे" इति भाष्यपरिभाषे सङ्गच्छेतेतराम्। तयोः फलम् कुटीरः यावक इति। दण्डिनमानयेत्यादौ कर्मत्वपदार्थस्य दण्डेऽन्वयबोधवारणाय प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वमिति नियमः। प्रकृतित्वम्प्रत्ययविधानावधित्वमत एव बहुपटव इत्यादौ बहुन्यपि तत्त्वम्। नच तावेव सुप्तिङौ यौ ततः परौ सैव च प्रकृतिराद्येतिभाष्यात्प्रत्ययाव्यवहितपूर्वस्यैव प्रकृतित्वलाभ इति बहुपटव इत्यादौ कथम्प्रकृतित्वमिति वाच्यम्? तदर्थाऽनवबोधात्। यौ ततो विधानावधेरसति विशेषानुशासने परौ तावेव सुप्तिङौ इति उपलक्षणम्प्रत्ययान्तरस्याऽपि, यतो विहितौ सैव प्रकृतिरिति भाष्यार्थवर्णनेनाऽविरोधात्। एवञ्च प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वम्प्रत्ययत्वमिति विलक्षणलक्षणलावण्यम्।

नचान्यप्रकृत्यर्थनिरूपितप्रत्ययत्वमन्यप्रत्ययस्य स्यादिति वाच्यम्? स्वप्रकृत्यर्थान्वितस्वार्थबोधजनकत्वम्प्रत्ययत्वम्। तत्तत्प्रत्ययनिरूपितप्रकृत्यर्थान्विततत्तत्प्रत्ययार्थबोधजनकत्वम्प्रत्ययत्वमिति फलितम्। नन्वेवं प्रत्ययनिरूपितत्वमेव प्रकृतित्वं समायाति। प्रत्ययाव्यवहितपूर्वत्वम्। नच रुणद्धि पचतीत्यादावागमविकरणइनम्शाव्यवधानात्कथम्प्रकृतित्वमिति प्रकृतित्त्वम् वाच्यम्? आगमविकरणभिन्नप्रत्ययाऽव्यवहितपूर्वत्वमिति स्वीकारात्। नच बहुचः पूर्वत्वात्कथं लक्षणसङ्गतिरिति वाच्यम्? स्वाव्यवहितपूर्वत्व स्वाव्यवहितोत्तरत्वान्यतरवत्त्वे सति प्रत्ययाव्यवहितपूर्वत्वम्प्रकृतित्वमिति स्वीकारात्। नच चैत्रः पचतीत्यादौ सुप्प्रत्ययनिरूपितप्रकृतित्वन्धातावापद्येतेति वाच्यम्? स्वविधायकशास्त्रजन्यबोधीयस्वनिष्ठविषयतानिरूपिताव्यवहितोत्तरत्वाव्यवहितपूर्वत्वान्यतरविषयतानिरूपितविषयताश्रयत्वम्प्रकृतित्वमिति वर्णनात्। नच "अव्ययसर्वनाम्नामकच्प्राक्टेरि"तिमध्येऽकचि पचतकीत्यादौ "तिङश्चे"ति तत्र कथं प्रकृतित्वमिति वाच्यम्? शिष्टत्वञ्च निखिलशब्दधर्मिकसाधुत्वप्रकारकयथार्थज्ञानवत्त्वम्। शिष्टाऽभियुक्तपुरुषीयप्रकृतिव्यव-

हारविषयत्त्वम्प्रकृतित्त्वम् । तत्तद्व्यवहारस्येयम्प्रकृतिरिति विशेषाकारत्वेन सामान्यलक्षणाऽभिसन्धानेनाऽदोषात् ।

## लुकाऽनुत्पत्तिरेवान्वाख्येयेति ।

नन्वेकस्मिन् जन्मन्यज्ञानिनाज्ञातसंस्कारो न निवर्त्तते भुक्तवन्तम्प्रति मा भुङ्क्था इति ब्रूयात्किन्तेन कृतं स्यादिति न्यायौ । उद्देश्यतावच्छेदकावच्छेदेन विहितस्य कार्यस्य कथङ्कारन्निषेधादिना निवृत्तिरित्त्यादिव्यवहारपुञ्जेन येषाम्प्रत्ययानामन्येषाम्वर्णानाम्वा विधानङ् कृत्वा लुगादिना निवृत्तौ कर्त्तव्यायाम्विरोधश्श्रुतौ तु लक्ष्याऽसिद्धिरिति चेन्न ? लुग्विधायकशास्त्रप्रवृत्तिवेलाकेलिते पञ्च षट् इत्त्यादिषु "षड्भ्यो लुगि"तिशास्त्रबलेन जसादिप्रत्ययानामनुत्पत्तिरेव तत्र२कल्प्यत इति व्याख्यानेनाऽविरोधात् । षट्संज्ञकप्रातिपदिकातिरिक्तत्वेन "स्वौजसमौडि"-तिविधिशास्त्रे सङ्कोचेन जसो विधानमेव नेति फलितम् । नच विनिगमनाविरहेण तुल्यन्यायेन च लुग्विषये यथाऽनुत्पत्तिस्तथा लोपविषयेऽपि स्यादनुत्पत्तिर्लुग्लोपयोस्समव्यवहारविषयत्वात् "हल्ङ्याब्भ्यो"सूत्रबलेन"स्वौजसि"तिसूत्राधिकृतप्रातिपदिकपदे हलन्तातिरिक्तत्वेन सङ्कोचापत्तौ हलन्तत्वावच्छिन्नातिरिक्तात्प्रातिपदिकात्स्वादय इत्यर्थस्यैव फलितत्वात्पन्था इत्यादावपि सोरुत्पत्तिर्न स्यादिति वाच्यम् ? लिट् ध्रुक् हरित् मरुदित्यादिवत् शास्त्रप्रक्रियासम्पन्ने रूपे यत्र हलन्तत्वन्तत्र ताहशहलन्तातिरिक्तत्वेनैव सङ्कोच्यते इतिकल्पनेन पन्था इत्यादौ परिनिष्ठिते रूपे न हलन्तत्वमिति तस्मिन् लक्ष्ये [व्यक्तिपक्षाश्रयणेन यावल्लक्ष्यन्तावल्लक्षणमित्यर्थकेन तत्र सङ्कोच्यसङ्कोचकभावाऽभावात् । नच राजेत्यादौ परिनिष्ठिते रूपे हलन्तत्वाऽभावेन सोरुत्पत्तौ सोश्श्रवणन्दुर्वारमेवेति वाच्यम् ? "स्वौजसमौ"डितिसापादिकशास्त्रदृष्ट्या त्रैपादिकनलोपविधायकस्याऽसिद्धत्वेन नान्तत्वबुद्ध्या परिनिष्ठिते रूपेऽपि हलन्तत्वबुद्धिसौष्ठवेन सङ्कोच्यसङ्कोचकभावस्य तत्र सयुक्तिकत्वात् । नच "अदर्शनं लोप"इतिबलेन प्रसक्तकर्मकानुत्पत्तेरेव लोपसंज्ञेति फलितात् "प्रत्ययलोपे प्रत्ययलक्षण"मितिशास्त्रेण प्रत्ययाऽभिन्नप्रसक्तकर्मकानुत्पत्तौ सत्याम्प्रत्ययलक्षणम्भवतीत्यर्थकेन गोदः कम्बलदः इत्यादौ कप्रत्ययान्ते"कर्मण्यणि"त्यपवादभूता"ताऽनुपसर्गे कः"इति विधिविशिष्टेऽणन्तत्वबुद्ध्याऽणन्तोद्देश्य"टिड्ढे"ति ङीप्स्यादिति वाच्यम् ? अणो योऽकारस्तदन्तान् ङीबित्यर्थस्य जागरूकत्वेन वर्णा-

श्रयत्वाद्वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषया प्रत्ययलक्षणाऽप्रवृत्त्या दोषाभावात् ।

नच भवेत्यादाव "तो हे" रितिशास्त्रेण "सेह्यपिच्चे"ति शास्त्रे सङ्कोचापत्तौ हेरनुत्पत्तौ सेडभावापत्तौ "भवसि" इति रूपमापद्येतेति । किञ्च "न षट्स्वस्रादिभ्य" इतिशास्त्रे उद्देश्यतावच्छेदकरूपेणोद्देश्यसिद्धये ङीप्प्रसक्तेरावश्यकतया षट्संज्ञकादौ प्रत्ययलक्षणेन ङीबादिप्रयुक्तकार्य्यापत्तिरिति च दोष इति वाच्यम् ? लोट्लकारस्थानिकसेः प्रसङ्गेऽभावमात्रस्य अदन्ताऽव्यवहितोत्तरत्वाऽभाववतो हेश्च साधुत्वबोधनेनाऽदोषात् । "न षडि" त्यादौ ङीबादेः प्रतियोगितया प्रवेशेन विधानात्प्राक् प्रसक्त्यभावेन प्रत्ययलक्षणाऽप्रवृत्तेरेतत्सर्वं शेखरकारमते ।

केचिच्छाब्दिकम्मन्यास्तु—लुगादिना नानुत्पत्तिः, स्थानिघटितबुद्धिप्रसक्तावादेशघटितं साधु । यथा "हनो वध लिङि" त्यादौ । तथा च न जातनिवृत्तिः "सिद्धे शब्दार्थसम्बन्धे नित्याश्शब्दा" इतिपक्षे "इको यणची" त्यादाविकारबुद्धिप्रसङ्गे यकारबुद्धिः कार्य्येति । भुक्तवन्तमित्यादिन्यायसञ्चार एव नेति शेखरकृत्प्रयासो न जाने कीदृशतात्पर्य्येणेति दिक् ।

इति शब्दसाङ्केतिकप्रकरणम् ।

# अथ शास्त्रार्थकला प्रारभ्यते ।

ध्यात्वा वाणीं स्वान्तनिष्ठकार्यमात्रप्रपूरिकाम् ।
व्याख्यामि शास्त्रार्थकलाम्पारिभाषेन्दुशेखरीम् ॥ १ ॥
सरयूपारीणशुक्लो वेणीमाधवनामकः ।
शब्दतर्कादिसत्तत्त्वप्रभाभासितभावुकः ॥ २ ॥
सज्जनास्तुष्टिमेधेरन् शास्त्रमार्गश्रुताऽनया ।
दुर्जना दौष्ट्यमाप्यास्युर्गतिर्मे जगदम्बिका ॥ ३ ॥

## शब्दशास्त्रीयपरिभाषापदार्थः ।

लक्ष्यधर्मिकसाधुत्वप्रकारकबोधोपयोगिबोधजनकत्वम् परिभाषात्वम् । "तः

---

पितरौ बुद्धिदौ स्तुत्वा गुरुन्देवीं सरस्वतीम् ।
स्वल्पयाऽमलया मत्या टिप्पणीं कर्त्तुमुत्सहे ॥ १ ॥
तातपादैर्विरचिता या शास्त्रार्थकलाभिधा ।
राजनारायणः श्रीमांस्तस्याः संस्कृतये मुदा ॥ २ ॥

तत्र भवान् ग्रन्थकारो दुरितप्रशमसमाप्तिसत्प्रचाराद्यर्थमवश्यमादर्त्तव्यं शिष्टाचारपारम्पर्य्यक्रमागतं "ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयम्" इत्याद्याप्तोपदिष्टमिष्टनमस्कृत्यादिपूर्वकम् मङ्गलं शिष्यशिक्षार्थं निबध्नाति ध्यात्वेति ।

यद्यपि "परितो भाषते या सा परिभाषा प्रकीर्तिता"इत्याद्यनुरोधात् कर्तृप्रत्ययान्तः परिभाषाशब्दोऽनुभूयते तथापि परिभाष्यते प्रतिपाद्यते ऽनया विलक्षणोऽर्थ इति विग्रह एव विधेयः । विलक्षणार्थप्रतिपादकत्वन्तु तत्र २ परिभाषेन्दुशेखरादौ ग्रन्थे चात्रैव निरूपितमवगन्तव्यम् । शास्त्रेषु ज्ञापकसिद्धा न्यायसिद्धा वाचनिकी चेति भेदात् त्रैविध्यन्निरूपितम् परिभाषाणाम् । तत्र एका "इको गुणवृद्धी" अचश्च"तस्मिन्निति निर्दिष्टे"इत्यादयः सूत्ररूपाः पाणिनिमुनिप्रणीता इति न तत्र ज्ञापकादीनामुपयोगोऽपि । वाचनिकीष्वेव तासामन्तर्भाव इति केचित्सिद्धान्तिनः । याश्च भाष्यादौ वचनरूपेण पठिता आहोस्विद् ज्ञापकादिभिस्साध्यास्ताश्शाब्दिकसम्मता अन्याः । एवम् सामान्यतः परिभाषापदार्थलक्षणं किमिति जिज्ञास्यमानन्निर्विक्तिं "शब्दशास्त्रीय"इत्यादिना ।

स्मिन्निति निर्दिष्ट" इतिसूत्रप्रवृत्तिमन्तरा "इको यणची"ति शास्त्रस्य शाब्दबोधो न भवति। तत्राचीति औपश्लेषिकाधिकरणे सप्तमी। उप समीपे श्लेषस्सम्बन्धस्तत्कृतमौपश्लेषिकम्। समीपसम्बन्धश्च विनिगमावैकल्यात्पूर्वपरसाधारणः। अव्यवहितपूर्वत्वांशोपस्थितिः, अजव्यवहितपूर्वत्वविशिष्टस्येको यणिति अप्रामाण्यज्ञानानास्कन्दितो बोधः। अजव्यवहितपरत्वविशिष्टस्यको यणिति अप्रामाण्यज्ञानसम्वलितो बोधः। तस्मिन्नितिपरिभाषया साहाय्यमनुसृत्याजव्यवहितपूर्वत्वविशिष्टस्येको यणित्यप्रामाण्यज्ञानानास्कन्दितो बोधः। तस्मिन्निति शास्त्रजन्यशाब्दबोधो लक्ष्यधर्मिकसाधुत्वप्रकारकबोधोपयोगी तन्निष्ठजन्यतानिरूपितजनकत्वम् इति परिभाषात्वं सघटते। एवञ्च अप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधोपयोगिबोधजनकत्वम्। अप्रामाण्यज्ञानानास्कन्दितेतिविशेषणम्वस्तुत फलितार्थाऽभिप्रायेण। नच "वृद्धिरादैच्' अदेङ् गुणः' कृत्तद्धितसमासाश्चे"त्यादिसंज्ञाशास्त्राणामपि "वृद्धिरेचि' आद्गुणः' स्वौजसमौडि"तिशास्त्रसहायकत्वेन परिभाषात्वापत्तिः। किञ्च उत्सर्गसमानदेशा अपवादा व्याप्यधर्मावच्छिन्नविषयतया व्यापकधर्मावच्छिन्नविषयताया बाधः। सवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयतातिरिक्तेऽक्त्वावच्छिन्नविषयताया यणित्यपवादशास्त्राणामपि बोधोपयोगिबोधजनकत्वेन परिभाषात्वापत्तिश्चेति वाच्यम्? अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारक बोधोपयोगिशक्त्यविषयकसाधुत्वाप्रकारकबोधजनकत्वम्परिभाषात्वम्। शक्त्यविषयकत्वनिवेशात् "वृद्धिरादै"जित्यस्य न परिभाषात्वम्। साधुत्वाप्रकारकत्वनिवेशादपवादशास्त्रस्या "कस्सवर्ण" इत्यस्य न परिभाषात्वम्। अधिकारशास्त्राणांविधिशास्त्रेण सहैकवाक्यतया बोधकत्वात्साधुत्वाऽप्रकारकपूर्वोक्तबोधजनकत्वाऽभावान्नाधिकारशास्त्राणां परिभाषात्वम्।

नच "छत्वममी"ति वाच्यमित्यादिवार्त्तिकानाम्परिभाषात्वापत्तिस्सूत्रकारस्यानुक्तिम्वार्त्तिककार पूरयति। भोः सूत्रकार "शश्छोऽटी"ति सूत्रस्थाने त्वया

---

व्याप्यधर्मावच्छिन्नविषयतयेति न्यायोऽयं लौकिकोऽनुभवगम्यः। यथा सूचीकटाहन्यायः, तत्र व्याप्यधर्मावच्छिन्ना विषयता "अकस्सवर्णे दीर्घः" इत्यस्य, व्यापकधर्मावच्छिन्ना विषयता "इको यणचि"इत्यस्येति श्रीश इत्यादौ दीर्घविषयताया बाधः। एतदनुवादक एव "सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्,, इति प्रवादः।

"शश्छोऽमो"ति वाच्यम् । इदमेव तात्पर्य्यं "छत्वममीति वाच्यमि"ति वार्त्तिकस्य । एवञ्च "शश्छोऽटी"ति सूत्रजन्यबोधोपयोगित्वं "छत्वममीति" वार्त्तिकस्येतिपरिभाषात्वापत्तिर्दुर्वारेति वाच्यम् ? वार्त्तिकभिन्नत्वे सतीतिनिवेशात् । अतिदेशशास्त्राणां प्राधान्यात् कार्यातिदेशकत्वेन न परिभाषात्वव्यभिचारः । "न भूसुधियो"रित्यादिनिषेधशास्त्राणान्न परिभाषात्वम् । निषेधशास्त्रभिन्नत्वे सतीतिनिवेशात् । नच "व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमि"त्यादिपरिभाषाणाम्बोधोपयोगिबोधजनकत्वाऽभावान्न परिभाषात्वमिति वाच्यम् ? अनाहार्य्याऽप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकविधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिसाधुत्वाऽऽप्रकारकशक्त्यविषयकबोधजनकत्वे सति वार्त्तिकातिदेशनिषेधशास्त्रभिन्नत्वे सति अधिकारशास्त्रभिन्नत्वं परिभाषात्वम् । यत्र २ दोषस्तत्र २ तद्भिन्नत्वे सतीति निवेशः ।

वस्तुतस्तु परितो भाषते या सा परिभाषा प्रकीर्त्तिता प्राचीनैर्वैयाकरणैरेवञ्च परिभाषाशब्दः प्राचीनवैयाकरणैर्लक्ष्यसाधुत्वसहायकवाक्ये सङ्केतीकृत इति रूढत्वेन संज्ञात्वेन वा व्यवहार इति न परिष्कारावश्यकतेति । स्वयंपुरःकोटिरुह्या ।

## व्याख्यानतो विशेषप्रतिपत्तिरिति ।

ननु "लण्" अइउण्" सूत्रयोर्णकारस्यैवोपादानेनाण् इण् ग्रहणेषु सन्देहादनिर्णयोऽत आह "व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्" इति । नन्वेकस्मिन् धर्मिणि विरुद्धधर्मावगाहिज्ञानं संशयस्तथा च शुक्तौ रजतमिदम् शुक्तिगतचाकचिक्यदर्शनेन रजतत्वधर्मावगाहिज्ञानवत् अकारादिपूर्वणकारान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमत् अथवा अकारादिपरणकारान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमदितिसन्देहद्वयाकार इति शक्तौ सन्देह इति चेन्न ? "आदिरन्त्येन सहेतेति" शास्त्रबलेन तत्र सन्देहाऽसम्भवात् अणुदित्सूत्रघटकमेकमेवाण्पदन्तात्पर्यद्वयेनार्थनिर्णायकम् आहोस्वित् एकतात्पर्येणार्थनिर्णाय-

---

व्याख्यानत इति–विशिष्टमाख्यानं व्याख्यानम्, व्याख्यायते नेनेति वा व्याख्यानन्तस्मात् पञ्चम्यास्तसिल् । विशेषस्य असन्दिग्धार्थस्य प्रतिप्रत्तिर्ज्ञानं यतः अतः सन्देहात् लक्षणं शास्त्रम् अप्रवर्त्तकञ्च भवतीति तात्पर्य्यम् । विशिष्टव्याख्यानेन समेषां जायमानसन्देहानां निवृत्तिः शक्यते कर्त्तुमिति न शास्त्रेषु विश्वस्त्यभाव आदरणीय इति ।

कम् । यथा सैन्धवमानय हरिस्सेव्य इति अनेकार्थकहर्य्यादिपदसत्त्वे तात्पर्येणैव शाब्दबोधः । तात्पर्यनिश्चयस्यैव हि शाब्दबोधहेतुत्वं सार्वजनीनम् । वर्णत्रयबोधतात्पर्येणोच्चारितमण् पदमाहोस्वित् वर्णचतुर्दशबोधतात्पर्येण । तात्पर्यसन्देहे शाब्दबोधाऽभावः, व्याख्यानादेव सन्देहनिवृत्ति ✕ कार्येति बोधनायैव महेश्वरेण णकारानुबन्धद्वयोपादानङ् कृतमिति अतो न स्वांशे चारितार्थ्यविचारः । "वाह ऊठ्" सूत्रवटकोठ्ग्रहणेनान्तरङ्गपरिभाषावत् "अदसो मादिति" सूत्रघटकमाद्ग्रहणेनै "कयेगनिर्दिष्टानां सहैव प्रवृत्तिनिवृत्ति" रितिपरिभाषावत् णकारस्सन्देहप्रयोजक एव नतु निरुक्तस्थलवत् ज्ञापकः ज्ञाप्यं सिद्धयति नतु ज्ञापकमिदमेव वैचित्र्यम् । लण्सूत्रघटकणकारस्य ज्ञापकत्वेऽपि स्वांशे चारितार्थ्यादिविवेको नेति फलितम् । यथोत्तरम्मुनीनाम्प्रामाण्यम् "धिन्विकृण्वोरचे"त्त्यकारविधानमन्यथा लोपानुवृत्त्यैव सिद्धे उकारविधानं ज्ञापकम् । ज्ञापिते तु "न धातुलोप आर्द्धधातुके"इत्त्यस्य प्रत्त्याख्यानाद् गुणनिषेधार्थञ्चरितार्थम् । एवंविधम्व्याख्यानम् "ङेर्यः" ङेराम्नद्याम् नीभ्य"इत्यादौ । आद्ये चतुर्थ्येकवचनस्य, द्वितीये सप्तम्येकवचनस्य ग्रहणमिति व्याख्यानम् । "अट्कुप्वाङ्नुमि"तिसूत्रे नुम उपादानात्तस्यैव ग्रहणे प्राप्ते"व्याख्यानत" इतिपरिभाषयाऽनुस्वारग्रहणमित्त्यादिफलम् ।

यथोद्देशं संज्ञापरिभाषम्—

कार्यकालं संज्ञापरिभाषम्—

यथोद्देशपक्षे जातां संज्ञामादाय कार्य्यम्भवति । कार्यकालपक्षे तु यदा यदा कार्यन्तदा तदा संज्ञेतिसिद्धान्तः । ज्ञाशास्त्रे यथोद्देशपक्षः, परिभाषाशास्त्रे कार्यकाल इति केचित् । वस्तुतस्तु कार्यकालयथोद्देशपक्षयोश्चैव नास्ति पूर्वत्वपरत्त्वादिव्य-—

---

यथोद्देशमिति—उद्दिश्यतेऽत्रेत्युद्देश उपदेशश्शास्त्रमिति यावत् । अधिकरणघञन्तश्शब्दः, उद्देशमनतिक्रम्येति विग्रहे "यथाऽसादृश्ये"इति सूत्रेण अव्ययीभावः। संज्ञापरिभाषमिति तु संज्ञाश्च परिभाषाश्चेति समाहारद्वन्द्वः । सर्वेषां लक्ष्याणां संसाधनाय सकृत्पठितमपि संज्ञाशास्त्रमाहोस्वित् परिभाषाशास्त्रमाश्रयितुमलमिति परिभाषार्थः । द्वितीयस्यास्तु कार्य्येण सहैव काल्यते स्वसन्निधिम् प्राप्यते इति कार्य्यकालं संज्ञापरिभाषमिति । यदा यत् कार्यं जननीयन्तदा तदर्थन्तत् सहायिका परिभाषा तेनैव आक्षिप्यते। फलतस्तु यावन्ति लक्ष्याणि तावन्ति लक्षणानि (शास्त्राणि) अपि पठ्यन्ते कार्यकालपक्षे इति। शास्त्रेष्वत एव सामान्यतो व्यवहारः पक्षद्वयम् यथोद्देशपक्षः कार्यकालपक्षश्चेति ।

वहारस्तु संज्ञापरिभाषाशास्त्रयोरुच्चारणाधिकरणदेशीयत्वेनैव तत्तदभिजनदेशापेक्षयैव "विप्रतिषेधे परङ्कार्य्यं"म्पूर्वत्राऽसिद्धमि"त्यादिविषये पूर्वत्वपरत्वनिर्णयः । "पूर्वत्राऽसिद्धमि"तिसूत्रे शास्त्राऽसिद्धत्वपक्ष एव सिद्धान्तितः । शास्त्रत्वञ्च अनाहार्य्याऽप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनकत्वम् । "तस्मिन्निति निर्दिष्टे पूर्वस्ये"तिपरिभाषाप्रवृत्तिम्बिना "इको यणची"त्यादिशास्त्राणां पूर्वोक्तशास्त्रत्वमेव न, लक्ष्यसाधनाऽनर्हत्त्वात् । अतस्तस्मिन्निति निर्दिष्ट इत्यादिपरिभाषाणां शास्त्रत्वसम्पादकत्वेन तत्परिभाषादृष्ट्या त्रिपादीस्थशास्त्राणा "म्पूर्वत्रासिद्धमि"त्यनेनाऽसिद्धत्वन्न भवति शास्त्रत्वाऽभावात् । "असिद्धम्बहिरङ्गमन्तरङ्गे"इत्यादिभाष्योक्तपरिभाषाणान्तु सूत्रार्थसहायकत्वाऽभावेन तत्प्रवृत्तिम्बिनैव शास्त्रत्वसत्वात् । अन्तरङ्गपरिभाषादृष्ट्या त्रिपादीस्थशास्त्राणा "म्पूर्वत्रेति"शास्त्रबलेनाऽसिद्धत्वादन्तरङ्गपरिभाषा त्रिपाद्यान्न प्रवर्त्तते एवं संज्ञाप्रवृत्तिम्बिना संज्ञाघटितशास्त्राणां शास्त्रत्वमेव नास्ति । "सुप्तिङन्तम्पदम्"नलोपः प्रातिपदिकान्तस्ये"तिसंज्ञाशास्त्रन्तु त्रिपाद्याम्प्रवर्त्तत एव । नचा "दसो मादि"तिसंज्ञाशास्त्रदृष्ट्य "अदसोऽसेर्दादुदो म"इत्यस्य नाऽसिद्धत्वम् । "अदसो मादिति" सूत्रारम्भसामर्थ्यात् । तथा च पक्षद्वयबोधकन्न परिभाषाद्वयमित्यलम् ।

## अनेकान्ता अनुबन्धाः--

इत्संज्ञका अनुबन्धास्तेष्ववयवानवयवत्वसन्देहे आद्येति शेखरः । नन्वेकस्मिन्धर्मिणि विरुद्धनानाधर्मावगाहि ज्ञानमेव संशयः । एवञ्च केवलावयवत्वसंदेहेऽनवयव-

---

शास्त्रासिद्धत्वपक्ष इति-न च मनोरमोक्तभाष्यविरोधादिदिशा शास्त्रासिद्धत्वपक्षे स्वीकृतेऽपि राजभ्यामित्यत्र शास्त्रस्यासिद्धत्वेऽपि कार्य्यस्य सिद्धतया दोषापत्तेः, वृक्ष इह इत्यत्र यलोपे गुणापत्तेश्च दुर्वारत्वमेवेति वाच्यम् ? शास्त्रस्यासिद्धत्वप्रतिपादनद्वारा कार्यासिद्धत्वप्रतिपादने तात्पर्य्यात् । तथा च यत्र सपादसप्ताध्यायीस्थस्य त्रैपादिकस्य च शास्त्रस्य यौगपद्येन प्रवृत्तिः तत्रासिद्धत्वबोधनेन लक्ष्ये कार्य्यसंस्कारबुद्धिर्न भवति । यत्र च न तयोर्युगपत् प्रवृत्तिस्तत्र त्रैपादिके कार्ये जातेऽपि शास्त्रेऽभावारोपे तज्जननीयकार्य चाप्रवृत्तज्ञानेन विद्यमानं सापादिकं कार्यन्तु भवत्येव । यत्र च शास्त्रासिद्धत्वज्ञानद्वारा कार्यानिष्पन्नत्वज्ञानेन सापादिकशास्त्रीयोद्देश्यतावच्छेदकाज्ञानं तत्र तस्याप्रवृत्तिरेव । तथा च राजभ्यामित्यादौ न दोषलेशोऽपि ।

त्त्वभानं स्यादेव द्वयोरुपादानं किमर्थम् इति चेन्न ? स्पष्टार्थमुभयोरुपादानस्य करणीयत्त्वात् ।

सन्देहाकारस्तु--

अनुवन्धास्स्वघटितपदाघटितप्रत्ययाघटितपदघटकसंज्ञातिरिक्त कुक्ककारभिन्नबोधकानवयवाः ।

हेत्वाकारस्तु--

स्वघटितघटकबोध्यतावच्छेदकधर्मवत्त्व स्वघटितघटकबोधकावयवत्त्वेन निश्चितोत्तरत्त्वविशिष्टबोधकावयवत्त्वेनानिश्चितं यत्तदुत्तरत्त्वमित्युभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावः । सन् प्रत्यये स्वपदेन नकारस्तद्घटितं सन् बोध्यतावच्छेदकं सत्त्वम् बोधकावयवत्त्वेन स एव निश्चित इतिसंघटनप्रकारः । संज्ञातिरिक्तत्त्वनिवेशाद् गुणादौ दोषाऽभावः प्रत्ययाऽघटितेतिनिवेशादकारघटककारादौ न क्षतिरिति पूज्यपादाः ।

एकान्तपक्षे किकङ्दित्त्यादौ लम्बकर्णादिवदवयवावयविभावे बहुव्रीहिः । अनेकान्तपक्षे तु क्विङ्दित्त्यादौ समीपार्थे बहुव्रीहिः । अनेकान्तपक्षे "वुञ्छण" तिसूत्रे प्रत्ययद्वयमध्यपठितस्यानुबन्धस्यान्यतरसम्बन्धे व्याख्यानं शरणम् । "काश्यादिभ्यष्ठञ् ञिठावि" त्त्यादौ ञिठप्रत्ययञित्त्वं व्यर्थी भूय एकस्यानुबन्धस्य प्रत्ययद्वयमध्योच्चारितस्यापि एकेनैव सम्बन्धो न तु द्वाभ्यामित्त्यर्थज्ञापकम् । एकान्तपक्षे तु "वुञ्छणा" दिसूत्रे प्रत्ययद्वयमध्यपठितस्यानुबन्धस्यैकतरेणैव हि सम्बन्धो व्याख्यानात् । अलन्न्यायाभिमताधिकप्रपञ्चेन ।

---

अनेकान्ता इति-इत्संज्ञायोग्यत्त्वमनुबन्धत्त्वम् इत्संज्ञकत्त्वं वेतिपक्षद्वयमपि शास्त्रीयम् । एकान्तशब्दोऽवयवार्थको व्याख्यानादागमाच्च । अनुबन्धा अनुबन्धिनाऽनवयवा इत्यर्थः । मूलोक्तानुमानीयहेत्वाकारे कुक्कारभिन्नस्वरूपं विशेषणं भागासिद्धिवारणायेति । भागासिद्धिस्तु पक्षतावच्छेदकसामानाधिकरण्येन ( यत्किञ्चित्पक्षे ) हेतोरभावः । स्वरूपासिद्धिस्तु पक्षतावच्छेदकावच्छेदेन हेतोरभाव इति नेह तस्यास्सम्भवशङ्कापि ।

केचित्तु अनुबन्धाः स्वघटितपदाघटितपदघटकसंज्ञातिरिक्तबोधकानवयवा एव एव सन्देहाकारः) हेत्वाकारस्तु स्वघटितघटकबोध्यतावच्छेदकधर्मवत्त्वं स्वघटितघटकबोधकावयवत्त्वेन निश्चितोत्तरत्त्वविशिष्टं बोधकावयवत्त्वेनानिश्चितं यत्तदुत्तरत्त्वमित्युभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावो हेतुरिति ।

वस्तुतस्तु—

एकान्ता अनुबन्धाः—

बोधकेऽवयवा नतु बोध्ये इति तत्त्वम् । अनुबन्धास्स्वावटितवटकबोधकावयवाः । बोधके उपलम्भात् बोध्येऽनुपलम्भादिति तत्त्वम् १

ननु वस्तुतस्तु एकान्ता इत्येव न्याय्यमिति पक्षेऽनुबन्धानामनुबन्ध्यवयवत्वमेव निश्चितमेव "आष्टाभ्य औशि"त्यादावौशादीनामनेकाल्त्वादेव सर्वादेशत्वसिद्धया शिद्ग्रहणमनेकाल्सूत्रे व्यर्थमिति चेन्न १"नानुबन्धकृतमनेकाल्त्वमि"ति परिभाषणात् स्वरूपबोधकस्थले स एवाऽयमिति तत्त्वप्रत्यभिज्ञया बोध्यबोधकयोरभेदाध्यवसायात्, स एवायमादेशो यो बोधके औशित्याकारक आसीत् स एव धर्मो बोध्येऽप्यायातीति अतो बोध्येऽनेकाल्त्वाऽभावेन कथं शिद्ग्रहणमपरिभाषाज्ञापकमित्यपास्तम् । बोधकवृत्तिधर्मस्य बोध्ये निर्विवादत्वात् । वस्तुतस्तु परिभाषेयन्न कार्या अनुबन्धानामल्पदबोध्यत्वन्नास्तीत्येव शिद्ग्रहणेन ज्ञाप्यमेतत्फलितार्थमेव "न ल्यपी"तिज्ञाप्य "मनुबन्धकार्येऽनल्विधाविति निषेधो न प्रवर्त्तते" इतिवाक्यम् । तथाच "नानुबन्धकृतमनेकाल्त्वम् १ नानुबन्धकृतमनेजन्तत्वम् २ नानुबन्धकृतमसारूप्यम् ३ " इतिपरिभाषात्रयन्न कार्य्यम् । नच रामशब्दे घञ्विशिष्टे आनुमानिकस्थान्यादेशभावेन हलन्तत्वमादाय "हल्ङ्यादि"सूत्रेण लोपापत्तिरिति वाच्यम् १ ङ्याब्ग्रहणसामर्थ्यात् । नच प्रश्लेषार्थं ङ्याब्ग्रहणमत एवातिखट्व इत्यादौ न लोप इति वाच्यम् १ भाष्यानुपपत्तेर्दोषाऽधायकत्वात् । नच श्वश्वनशब्देन कुशब्दस्य समासे श्वयनशब्देन कुशब्दस्य समासे कुश्वश्वनः कुश्वयन इत्यादौ ओव्रश्चु टुओश्वि इतिधातुगतानुबन्धमर्यादयाऽजादित्वा "त्कोऽकत्पुरुषेऽची"तिकदादेशापत्तिरिति वाच्यम् १ अल्बोधकपदबोध्यत्वन्नास्तीत्यस्यैव ज्ञाप्यत्वादजादिपदेनाऽनुबन्धस्याऽग्रहणात् । नन्वनुबन्धानामल्पदबोध्यत्वाऽभावे हल्पदेनाऽप्यनुबन्धग्रहणानुपपत्तिः हल्प्रत्याहारस्य अल्प्रत्याहारान्तर्गतत्वादिति चेन्न १ "हलन्त्यमि"त्यादिसूत्रारम्भसामर्थ्याद्धलतिरिक्ताल एव ज्ञाप्यविषयत्वात् । नच कित्पदघटककारादिपदेन ककारानुबन्धानां ग्रहणाऽभावापत्तौ कित्त्वन्न सिद्ध्येदिति वाच्यम् १ "इत्पदप्रयोज्यविषयतानिरूपितविषयत्वाऽप्रयोजकाल्बोधकपदबोध्यत्वन्नास्ती"ति ज्ञाप्यस्वीकारात् । नच "यस्मिन्विधिस्तदादावल्ग्रहणे" इत्यादावपि अल्पदेनानुबन्धग्रहणापत्तौ हल्

ज्ञकशकारादावित्यर्थो न स्यादिति वाच्यम् ? "यस्मिन्विधिरितिपरिभाषी-यविषयातिरिक्तत्वेन ज्ञाप्यविषये सङ्कोचात्, "पाघ्राध्मे" तिसूत्रारम्भसामर्थ्याच्चेति । किञ्च यत्र कुत्रचिद्दोष आपतेत्तत्र सर्वत्राऽपि निरुक्तरीत्या वारणसम्भवाद्भाष्योक्तप्रकारेण सिद्धे परिभाषात्रयमनारम्भणीयमिति शुक्लाः ।

नानुबन्धकृतमनेजन्तत्वम्—

दैप ऽ पकाररूपानुबन्धसत्त्वेऽपि "आदेच उपदेश" इत्त्यात्त्वप्रवृत्त्या दारूपत्वेन अदाबितिप्रतिषेधोपपत्तेर्दैप ऽ पृथक् प्रतिषेधो न वक्तव्य इति फलितार्थः । "उदीचाम्माङ" इतिनिर्देशोऽत्र ज्ञापकः । फलञ्चावदातम्मुखमित्यत्र घुसंज्ञाप्रयुक्त अच उपसर्गात्त इति कार्य्याऽभावः ।

वस्तुतस्तु पकारेत्संज्ञकत्वे सति दात्वमेव दात्त्वमिति स्थानिवद्भावेन पकारेत्संज्ञकत्वम्, कृतात्त्वे स्वत एव दात्वमिति दात्त्वं सुतरामायातीति नावतरणं सयुक्तिकम् ।

नानुबन्धकृतमसारूप्यम्—

अत्र समानरूपवत्त्वं न सारूप्यमपि तु स्वविशिष्टत्वं स्वसरूपत्वम् वैशिष्टयञ्च स्वघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवद्घटितत्व स्वघटकाऽवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवदघटितत्वसम्बन्धाभ्याम् । एतत्परिभाषाबलेन सम्बन्धघटकधर्मेऽनुबन्धाऽवृत्तित्वनिवेश इत्याकूतम् ।

उभयगतिरिह भवति—

इति न किन्तु "कृत्रिमाऽकृत्रिमयो ऽ कृत्रिमे कार्यसम्प्रत्यय" इत्येव युक्तम् । "कर्मणा यमभिप्रैतीति" भाष्यात् असति बाधके केवलकृत्रिमस्यैव ग्रहणम् । यत्र प्रमाणान्तरबलेन अर्थान्तरेऽपि तात्पर्यनिर्णयः तत्र लोकवदर्थान्तरग्रहणम् । यत्र तु तादृशबाधको नास्ति तत्र कृत्रिमस्यैव ग्रहणम् । अनेकभाष्यपर्यालोचनेन "कृत्रिमाऽ

---

नानुबन्धकृतमनेजेति—अत्र ज्ञापकन्तु "उदीचाम् माङो व्यतीहारे" इति सूत्रे माङ इति निर्देश एव, यतो हि "आदेच उपदेशेऽशिति"इति सूत्रेण एजन्तस्यैव धातोरात्त्वं विधीयते इति तत्र यदि ङकाराद्यनुबन्धप्रयुक्तताऽपि स्वीक्रियते चेत् नहि मेङ्धातुरेजन्तः किन्तु ङकारान्त इति कथं सूत्रे आत्त्वविधायकाप्राप्तावपि "माङ" इत्यात्त्वविशिष्टो निर्देशस्स एव ज्ञापयति परिभाषामिमाम् इति । तथा च अनुबन्धप्रयुक्त एजन्तत्त्वाभावो न वक्तुं शक्यते इति अनुबन्धादेस्सत्त्वेऽपि एजन्तत्वं तत्र भवत्येवेति स्वांशे चारितार्थ्यादिकमूह्यं स्वत एव । सर्वमपि चेतद् विशिष्टतया निरूपितं "दाधाघु" इति सूत्र भाष्ये ।

कृत्रिमयोऽकृत्रिमे कार्यसम्प्रत्यय" इत्येव सिद्धम् ।

कार्यमनुभवन्निति—

कार्य्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयत इति न परिभाषाकारः किन्तु "नहि कार्यी निमित्ततयाश्रीयते" इत्येवम् ।

नच कार्यमनुभवन्निति विशेषणाऽभावे ऊर्णोतेस्सनि "सनीवन्तर्द्ध" इतीटि ऊर्णु इस इतिस्थिते "सन्यङो" रितिषष्ठीनिर्देशात्सनऽकार्यित्वेन द्वित्वम्प्रति निमित्तत्वाऽभावेन "द्विर्वचनेऽची" तिसूत्राऽप्रवृत्त्या परत्वेन गुणेऽवादेशे चोकारो नाभ्यासे श्रूयेतेति वाच्यम् ? इह सनो द्वित्वरूपकार्याऽनधिकरणत्वेन द्वित्वम्प्रति निमित्तत्वात् गुणाऽप्रवृत्ते रूपसौष्ठवात् । अनया परिभाषया निमित्तपदेन सप्तम्यन्त-पञ्चम्यन्तान्यतरपदप्रयोज्यविषयताश्रयत्वन्निमित्तत्वमिति गृह्यते । नचावतरणं कथं सङ्गतमिति वाच्यम् ? परिभाषाया अभावेऽपि निमित्तपदेन कारणमात्राभिधा-नात् । उद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयताश्रयत्वं कार्यित्वम् । सप्तम्य-न्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताश्रयत्वन्निमित्तत्वम् ।

कुटादिषु कुङ् शब्दे इतिधातुपाठोऽस्य ज्ञापकः । दीधीङ् वेवीङ् प्रकृतिगत-ङित्त्वेन गुणवृद्ध्योरभावसिद्धौ "दीधीवेवीटामि" तिगुणनिषेधश्चास्यां ज्ञापकः । शीङो ङित्त्वेन सिद्धौ "निष्ठा शीङ्स्विदिमिदी" ति कित्त्वाऽभावविधानमपि ज्ञापकम् । अरिरिषतीति फलम् इस इत्यस्य द्वित्वेऽरीषतीति स्यात् । यदितु द्वि-त्वनिमित्ततापर्याप्त्यधिकरणाज्निमित्तककार्यस्यैव निषेधविधानमिह तु इकारस्य द्वित्वनिमित्ततापर्याप्त्यनधिकरणत्वेनाक्षतिरिति तथाच नैतत्फलम् । नच दुद्यूषती-ति फलम् द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटकाच्पर्याप्तनिमित्तताकादेशो नेति ऊकारस्य प्रत्ययघटकत्वाऽभावात् । नचैवन्निवेशे भवनमिच्छति भवनीयति भवनीयितुमिच्छति विभवनीयिषतीत्यादौ प्रत्ययघटकाचस्सत्वात् निषेधप्रवृत्त्याऽ-भ्यासे इकारश्रवणानापत्तिरिति वाच्यम् ? द्वित्वनिमित्तत्वम्प्रत्ययघटकत्वञ्चेति वि-शेषणद्वयनिवेशाद् द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटकाच्पर्याप्तनिमित्तताका-देशो नेत्यर्थे फलाऽभावात् "द्विर्वचन" इति प्रत्ययविशेषणमिति भाष्यात् । अच्य-जीगपदित्यपि न फलम्, द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटकाज्विशिष्टङ्का-र्यन्नेति सूत्रार्थः । वैशिष्ट्यञ्च स्वपर्याप्तनिमित्तताकत्व स्वाऽव्यवहितपूर्वपर्याप्तनिमि-त्तत्वाऽनिरूपकत्वोभयसम्बन्धेन । अत्र द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटकोऽच्

चडोऽकारस्तद्विशिष्टत्वन्न चङादेशस्य, स्वपर्याप्तनिमित्तताकत्वेऽपि स्वाव्यवहितद्-र्दणिचूनिष्ठनिमित्तताकत्वात् लक्षणाऽसंघटनेनाऽदोषादिदमपि परिभाषाया न फलम् ।

सिंहावलोकनन्यायेनावशिष्टं किञ्चिद् विचार्य्यते ।

ननु "क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्त्तव्यमि"ति वार्त्तिकेन कार्य्यम्परस-सप्तम्याश्रयणमेवास्तु क्ङिदव्यवहितपूर्वत्वविशिष्टस्येको गुणवृद्धी न स्त इति सूत्रार्था-त् । परिभाषाऽपि न कार्य्या । भिन्नमित्यादौ तु न दोषः "रसिगृधिधृषिक्षिपेः-क्नुरि"ति कित्त्वविधानसामर्थ्याद्वर्णैकव्यवधानं सह्यते । न च भवत इत्यादौ गुण-निषेधस्स्यादिति वाच्यम् ? ज्ञापकस्य सजातीयापेक्षत्वेन हल्वर्णव्यवधानस्यैव सह-नीयत्वात् । नच अक्षैष्टामित्यादौ सकारव्यवधानसहनाद्वृद्धिनिषेधस्स्यादिति वा-च्यम् ? साक्षाद्धातुघटकवर्णव्यवधानस्यैव सहनीयत्वात् । ज्ञापकसाजात्यात् । नच गुतेत्यादौ ङानिमित्तकनिषेधो न स्यात तकारस्य धात्वघटकत्वात , एवमगुषीदि-त्याद्यवपीति वाच्यम् ? ज्ञापकसाजात्यात निषेधशास्त्रे स्वघटकसप्तम्यन्तपदप्रयो-ज्यविषयत्वाऽभावविशिष्टं यन्निषेध्यशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयत्वं तदभाव-वान् यो वर्णस्तद्व्यवधानमेव सह्यत इति कल्पनेन अक्षैष्टामित्यादौ निषेधाऽभावः, गुता अगुषीदित्यादौ "गाङ्कुटादिभ्य" इति कुटादित्वान्ङित्त्वे गुणनिषेध इति वर्णनात् ।

केचित्तु—कुटादौ कुङ्धातोः पाठात "दीधीवेवीटामि"तिसूत्रसामर्थ्याच्च "निष्ठाशीङ्स्विदिमिदि" इति कित्वाऽभावविधानसामर्थ्याच्च प्रकृतिनिष्ठङित्त्वा-दिकमादाय सार्वधातुकार्द्धधातुकप्रत्यययोर्गुणनिषेधो नेति कल्पने तु नावतरणं सा-धुतरन्नागेशीयम् । असति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायेन कित्वांशेऽपि निषेधविधानेन इक् स्मरणे अध्येतीत्यपि नावतरणम् ।

यद्यपि निरुक्तरीत्या परिभाषायाः फलन्नास्ति तथापि लोकानुरोधेन "नहि कार्यी निमित्ततयाश्रीयत"इति स्वीकार्य्यम् । लोके कार्यिणो निमित्तत्वेनाश्रयणन्न भवति, निमित्तस्य च कार्यित्वेनाऽश्रयणन्नभवतीतिलोकप्रत्यक्षप्रतीतिसिद्धो व्य-वहारः ।

### यदागमा इति—

"तदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इत्येव परिभाषाऽकारो भा-ष्यसिद्धो नतु यदागमा इति ।

यस्य य आगमस्स तद्ग्रहणेन गृह्यत इतिभावः। यथा सर्वेषामित्यादौ सुडागमस्य सुब्ग्रहणेन ग्रहणाद् "बहुवचने झल्ये" दित्येत्वम्। नच कुर्वंश्छेत इत्यादौ "ङ्णि तुगिति" तुकि नकारस्य तुकः पूर्वग्रहणेन ग्रहणात् नकारस्याऽपदान्तत्वात्पदान्तस्येत्यस्याऽप्रवृत्त्या णत्वं स्यादिति वाच्यम्? "स्तोःश्चुने" तियोगविभागेन स्तोःश्चुना योगे णत्वन्नेति व्याख्यानात् तदागमपरिभाषाया अनित्यत्वस्य वक्ष्यमाणत्वाच्च। नच चच्छाविरयादौ "छेचे" तितुकि छछा इतिदशायामेवानया परिभाषया तुकोऽप्यभ्यासग्रहणेन ग्रहणात्तुको निवृत्तिस्स्यादिति वाच्यम्? ह्रस्वग्रहणेऽनुवर्त्तमाने सत्येव कार्यसिद्धौ स्वरितत्वप्रतिज्ञया ह्रस्वानुकर्षणार्थकचकारेणेदं कल्प्यते ह्रस्व एवागमी नतु ह्रस्वान्त इति। सच समुदायग्रहणेन नैव गृह्येतेत्यभ्यासग्रहणेनाऽग्रहणाददोषात्। नच अग्निचितस्सोमसुत इत्यादौ तदागमपरिभाषया तुग्विशिष्टस्य ह्रस्वान्तत्वाज् "जसि चे" तिगुणापत्तिरिति वाच्यम्? "ब्रुवः पञ्चानामि" तिनिर्देशाद्वर्णप्रयुक्तकार्य्याऽभावज्ञापनेन तादृशलक्ष्येषु दोषाऽभावात्। नच दधिच्छादयतीत्यादौ तुकि पदान्तत्वाऽभावेन "तिङ तिङ" इति 'अतिङन्तात्पदात्परं तिङन्तन्निहन्यत इत्यर्थकेन निघातो न स्यादिति वाच्यम्? "स्वरविधौ व्यञ्जनमविद्यमानवदिति" परिभाषासञ्चारेणाक्षतेः। "आने मुगि" तिभाष्यात् "ङमो ह्रस्वादि" तिभाष्यात् "ऋकारस्य गुणवृद्धी अरारावेवे" ति "रषाभ्यामि" तिभाष्याच्च वर्णग्रहणेऽपि तदागमपरिभाषा प्रवर्त्तत इतिशेखरकारास्तन्न? अयधातोः क्विपि यलोपे तुकि अतौ इत्यत्र वृद्धिप्रसङ्गात्। नच तदागमपरिभाषाया अनित्यत्वान्न वृद्धिरिति वाच्यम्? दोषाः खल्वपि साकल्येन परिगणिता इति "कृन्मेजन्त" इतिभाष्यात वर्णग्रहणे प्रवृत्तिस्वीकारे शेखरोक्तप्रयोजनत्रयमेव दोषाश्चानेके। तथाचानेकस्थलेऽनित्यत्वेन वारणन्न सलाघवम्। किञ्च "तास्यनुदात्तेदि" ति सूत्रेऽदुपदेशादित्युपदेशग्रहणसामर्थ्यात् शप्प्रवृत्तिकालेऽतः परत्वेन स्वरसिद्धेर्न

---

स्वरविधौ इति-परिभाषेयं "नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" इति सूत्रे अपृथिव्यादिग्रहणेन ज्ञाप्यते। अन्यथा परिभाषाभावे "नोत्तरपदेऽनुदात्तादौ" इत्येव सूत्रयितव्ये पृथिव्यादेश्च अनुदात्तादित्वाभावात् प्रकृतिस्वरस्य न प्रवृत्त्यापत्तिरस्त्वादिति व्यर्थो निषेधांशो ज्ञापयति परिभाषाम्। ज्ञापितायान्तु व्यञ्जनस्य स्वरविधानकालेऽविद्यमानत्वेन सूत्रप्रवृत्त्यापत्तिवारणाय निषेधस्स्वांशे चरितार्थः। फलन्तु अग्निमीले इत्यादिषु स्वरितादेस्सिद्धिरेव।

वर्णग्रहणे तत्प्रवृत्तिफलम् । "स्वरविधौ व्यञ्जनमविद्यमानवदि"तिपरिभाषया सुट्यपि स्वरसिद्ध्या वर्णग्रहणे प्रवृत्तिस्वीकारे फलाऽभावाच्च । ङमुट्सूत्रभाष्यसंरक्षणमपि न फलम् ? आगमरहितस्य कार्यं सागमे परिभाषया विधीयते नत्वागमिधर्म आगमेऽप्यानीयतेऽन्यथा भूयासम् भूयास्व भूयास्म इत्यादौ याडटि तिङ्त्वातिदेशात्पदसंज्ञायां इत्त्वादिदोषाऽपत्तेः । तथा च कुर्वन्नास्त इत्यादौ ङमुटि नकारद्वयसमुदायस्य पदान्तत्वलाभेऽपि पूर्वनकारस्य पदान्तत्वाऽभावेनोक्तभाष्यैकदेशयुक्तिरवध्वननात् । अत एव "तस्मिन्नि"तिसूत्रे ङमुटि पदस्य चको नकारोऽन्तेऽ नतु द्वाविति"पदान्तस्ये"तिणत्वप्रतिषेधो नास्तीति वदता कैयटेनाऽप्येकदेशयुक्तित्वमभिहितम् । मरारौ गुणवृद्धी इत्यपि न वर्णग्रहणे तदागमपरिभाषाप्रवृत्तिफलम् । "अनान्तर्यमेवैतयोरान्तर्य्यम् सम्प्रयोगो वा नष्टाश्वदग्धरथवत्" इतिभाष्यवार्त्तिकाभ्यां दोषस्य परिहृतत्वात् । एवञ्च वर्णग्रहणे तदागमपरिभाषा न प्रवर्त्तत इत्येव कल्पनं लघीयः । "आने मुगि"ति मुग्विधानात्सवर्णदीर्घबाधनम्विनाऽनुपपद्यमानादियमनित्येति सर्वथैवायुक्तम् । सवर्णदीर्घस्य प्राप्तिर्न किन्तु "आतो ङित" इतीयादेशस्यैव । किञ्च "अनागमकानां सागमका आदेशा" इतिभाष्यविरोधश्च । शब्दस्य नित्यत्वसमर्थनाय भाष्यम्प्रवृत्ते नतु स्थान्यादेशभावाऽभिप्रायेणेत्यपि शेखरकृतान्दुराग्रह एव । स्थान्यादेशभावाभिप्रायकत्वस्वीकारे न लक्ष्यासिद्धिदोषः न भाष्यान्तरविरोधः न युक्तिविरोधश्च । स्थानिवत्सूत्रीयादेशपदेनानेकविधानामादेशानां ग्रहणम् । अत्र प्रमाणन्तु "नेदमदसोरकोः"णेरनिटि" आड्यजभगस्युल" इतिपाणिनीयम् । एवञ्च "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" एकदेशविकृतमनन्यवत्" तदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त" इतिपरिभाषात्रयन्न कर्त्तव्यम्म हल्लाघवम् । श्रौतानुमानिकादेशयोस्सर्वेषामन्तर्भावात् । अत एव स्थानिवत्सूत्रे "एकदेशविकृतस्योपसंख्यानम्" इतिवार्त्तिकेन एकदेशविकृते स्थान्यादेशभावस्य विस्पष्टत्वात् । अत्र विकारशब्देन लोपस्य वर्णान्तरस्य आगमस्य च ग्रहणम् ।

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वन्नोपपद्यते ॥

इतिभाष्यश्लोके विकारपदेनोक्तानां त्रयाणामेव ग्रहणम् । नच "कूटस्थैर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः" उपजन आगमस्तत्रागमार्थकात्पृथक् विकारपदोपादानेन कथमत्र विकारपदेनागमस्याऽपि ग्रहणमिति वाच्यम् ? परिभाषात्रयाऽकरण-

लाघवेनात्र भाष्यबलाच्चागमस्याऽपि विकारपदेन ग्रहणात् ।

नच स्थानिवद्भावेनैव परिभाषात्रयखण्डने अपिवदित्यत्राडागमे तद्विशिष्टसमुदायस्य स्थानिवद्भावेन विशिष्टे पादुद्धया पित्वादेशस्स्यादिति वाच्यम् ? "निर्दिश्यमानपरिभाषया" दोषवारणसम्भवात् । नच "निर्दिश्यमान"परिभाषया वारणे पाशब्दस्य स्थाने अपादेश इतिविषये तिसृणामित्यत्र निर्दिश्यमानत्रिशब्दाऽभावात्त्रयादेशाऽप्राप्तौ "त्रयादेशे स्त्रन्तस्य प्रतिषेधो वक्तव्य" इतिवार्त्तिकन्तद्भाष्यञ्च विगतं स्यादिति वाच्यम् ? यत्र निर्दिश्यमानबुद्धिविषयाऽवटित एवाऽऽदेशस्तत्र स्थानिवद्भावेन कार्यप्रवृत्तौ निर्दिश्यमानपरिभाषायाश्चर्चैव नास्ति । यत्र निर्दिश्यमानबुद्ध्यविरोधेन आदेशप्रवृत्तिस्तत्रैव निर्दिश्यमानपरिभाषाप्रवृत्तिरयमेव भाष्यवार्त्तिकाऽभिप्रायोऽत एव "त्रयादेशे स्त्रन्तस्य प्रतिषेध" इतिभाष्यवार्त्तिकास्यान्न विरोधः । अत एव यस्यै तस्यै इत्यादौ सस्याट्कस्य स्मै आदेशो निर्दिश्यमानपरिभाषया नेत्यलम् । दाधेतिविशिष्टरूपसत्त्वेनार्थवद्ग्रहणपरिभाषयाऽर्थवतो दाधोर्ग्रहणेन दाब्घटकदारूपस्याऽनर्थकत्वेन घुत्वाऽप्राप्तिरित्याशयेन यदागमपरिभाषा "अपदान्तात्किकोऽस्वा का उखा अपदान्तादिति शक्यमकर्तुं कस्मान्न भवति का उखा कोस्वा अर्थवद्ग्रहणेनाऽनर्थकस्येति नैषा परिभाषेह शक्या विज्ञातुम् इह हि दोषस्स्याद्भिन्धुरिति" इत्यपदान्ता"दितिभाष्यमागसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्व"मित्यत्र प्रमाणम् । "स्यसिच्सीयुडि"तिसूत्रस्थ ,'सीयुडविशेषित" इतिभाष्यमपि प्रमाणम् । "नैतौ दाधावर्थवन्तौ किन्तर्हि दापधापाविति"दाधाघ्वदाबि"ति भाष्यञ्च प्रमाणम् । बहुकुमारीक इति फलन्तत्र समासे कपि अनर्थकत्वेन कप⌒प्राक् बहुकुमारीत्यस्याऽप्रातिपदिकत्वाद् ह्रस्वाऽभावो "गोस्त्रियोरुपसर्जनस्ये"ति अकचो यथाऽगमत्वम् प्रत्यङ्कैदित्यत्र "तिङ्ङतिङ" इति निघातस्तथा कपोऽप्यागमत्वम् । ऐधिष्टेत्यत्रागमसमभिव्याहारन्यायेन "ह्रस्वादङ्गादि"ति सिचो लोपो नेतिविशिष्टम्फलम् । निपातयो⌒प्रामाणिकप्रयोगे समासाऽदर्शनेन अन्वत्रेति न फलमिति केचित्तन्न ? "विपराभ्यांजे"रिति प्रामाणिकप्रयोगे निपातयोस्समासदर्शनेन कथञ्चिदन्वत्रेत्यपि फलम् । नच प्रणिदापयतीत्यादौ विशिष्टार्थवत्त्वस्य दापि सत्त्वेऽपर्याप्त्या दाशब्देऽपि सत्वाद् घुत्वेन नावतरणं शेखरकृतां युक्तमिति वाच्यम् ? पर्याप्तिसम्बन्धेनार्थवत्त्वस्य विवक्षितत्वात् । नच नह्यवयवाऽपर्याप्तन्यायेन केवलदाब्घटकदापर्याप्तमप्यर्थवत्त्वमिति घुत्वन्नि-

धमिति वाच्यम् ? दावृत्तित्वविशिष्टार्थवत्त्ववान् दाशब्द इतिस्वरूपप्रकारः दावृत्तित्वविशिष्टार्थवत्त्वावच्छिन्ना या पर्याप्तिसम्बन्धावच्छिन्नाऽऽधेयता ताहशाधेयतानिरूपिताधिकरणतावच्छेदकधर्मावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगित्वमर्थवत्त्वमिति लक्षणेन शुद्धदात्वत्वावच्छिन्नाधेयतानिरूपिताधिकरणताऽश्रयत्वम्प्रणिददातीत्यादावेव ननु दाप्घटकदाशब्दे एवेति "दाधाध्वदाबित्यस्य दात्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगिभूतदात्वाश्रयस्य घुसंज्ञेति सूत्रार्थे पूर्वोक्तार्थवत्त्वलक्षणम्प्रदेयमिति । ताहशाधिकरणतावच्छेदकञ्च दाप्गतत्रित्वमेवेति न तु दागतं द्वित्वमिति न क्वापि दोषः । ननु प्रणिदापयतीति नावतरणसङ्गतिः "अर्त्तिह्रीव्ले ⁀ पुङि" तिन्यासे दागतमर्थवत्त्वमिति घुसंज्ञया सिद्धिरिति चेन्न ? अदीदपदित्यादौ "णौ चङ्युपधाया ह्रस्वः" इत्यनेन ह्रस्वानापत्तेः क्नोपयतीत्यादाविडागमापत्तेश्च । यदागमपरिभाषाफलितार्थश्च स्वविशिष्टे समुदाये स्ववृत्तिधर्मारोप इति वैशिष्ट्यञ्च, स्वघटितत्त्व स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयघटितत्व स्वविशिष्टाऽघटितत्वैतत्त्रितयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वेतरत्व स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वोभयसम्बन्धेन समन्वयस्त्वयमूह्यः ।

"आने मुगि"तिमुग्विधानसामर्थ्यादनित्येति । ननु "अकृत्सवर्ण" इतिसूत्रेण सानुनासिक आकारो निरनुनासिकश्चाकारः सानुनासिकश्चोकारो निरनुनासिकश्चोकार औकार इतिप्राप्याः मुकोऽभावे आकार इतिवैषम्यात्कथं ज्ञापक इति चेन्न ? "उदानस्येति" ओदानस्येति" वा न्यासात् पादमात्रिकमकारविधानेनेष्टसिद्धावर्द्धमात्रिकमकारोच्चारणस्य ज्ञापकत्वाच्च । सिद्धान्ते तु पादमात्रिकस्य श्रवणानर्हत्वान्न तत्कृतमिति दिक् ।

## पूज्यचरणास्तु—

यदागमपरिभाषा न कार्य्या स्थानिवत्सूत्रे सर्वेषामादेशानां ग्रहणम् । यस्य निर्दिश्यमानत्वन्तस्याऽऽदेशो यस्य न निर्दिश्यमानत्वन्तस्य नादेश इति सिद्धान्तः । निर्दिश्यमानत्वञ्च षष्ठीप्रकृतिविशिष्टत्वम् , वैशिष्ट्यञ्च स्वप्रयोज्यशाब्दबोधीयविषयताश्रयत्व स्वप्रयोज्यशाब्दबोधीयविषयताविशिष्टवर्णाऽघटितत्व स्वजन्योपस्थितीयविषयताश्रयनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयाऽघटितत्व स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाऽघटितत्वैतच्चतुष्टयसम्बन्धेन । सम्बन्ध-

घटकप्रथमवैशिष्टयञ्च वर्णे स्वानाश्रयत्व स्वाश्रयसमभिव्याहृतत्वोभयसम्बन्धेन सम्बन्धघटकद्वितीयवैशिष्टयञ्च वर्णे स्वसमभिव्याहृतत्व स्वनिष्ठोद्देश्यतानिरुपितावयवत्वावच्छिन्नविधेयताश्रयत्वोभयसम्बन्धेन जराया जरा जराजरा ते जराजरसौ व्याघ्रपात्पदः अजादिविभक्त्यव्यवहितपूर्वत्वाऽभावान्न पुर्वजराशब्दस्यादेश इत्यपि पदादेशेऽप्येवम् । स्थाने द्विर्वचने पदद्वित्वस्थले जराजरसाविति समुदायस्यैष्ट एव जरसादेशो जरसावित्येव रुपम् । "जराया अइडिति" भाष्यन्यासस्तु पदद्वित्वस्थलानवलोकनेनैव प्रवृत्त इतितात्पर्यम् । पदद्वित्वानन्तरमतिजरा जरसावित्येव । "अशवचनं साकच्कार्थम् इमोऽःइत्येव सिद्धे कादेशस्साकच्कार्थ" इतिभाष्यमपदद्वित्वस्थलीयदोषेण निरस्तमिति न वाच्यमपदद्वित्त्वस्याऽप्युपलक्षकत्वादधिकलाभे न ह्यनिरिति न्यायात् । "पाद॑पदिति"सूत्रभाष्ये उपधाया ह्रस्वत्त्वम्वाच्यम् ? अन्यथा द्विपद॑पश्येत्त्यादौ समुदायस्याऽदेशापत्तिर्न वक्तव्यन्निर्दिश्यमानस्यैवादेशादित्त्यर्थकभाष्यविरोधस्तु न?तस्य वार्त्तिकस्य द्विपद इत्यादौ समुदायादेशाऽभावरुपं यत् प्रयोजनं तस्य निर्दिश्यमानपरिभाषयाऽन्यासिद्धिप्रतिपादनमात्रपरं हि तद्भाष्यम नतु ह्रस्वकरणे दोषो नास्तीत्त्यत्र तात्पर्य्यन्तद्भाष्यस्येत्त्यभिधानात् पदद्वित्त्वस्थले निर्जरसावित्त्यत्र स्थानिवद्भावेन जरात्त्वधर्मानयनविशिष्टस्यादेश इति सिद्धान्तः । "स्नात्त्वाकालकादीनाम्प्रतिषेधो वक्तव्यः" स्नात्त्वाकालकः स्नात्त्वा–कालकीकृत्त्येति "अन्त्यवाधेऽन्त्यसदेशस्ये"तिवारणम्वा । वार्त्तिकन्तु भाष्ये प्रत्त्याख्यातम् अनञ् पूर्वपदकस्य क्त्वान्तसमासस्य ल्यब्वित्त्यर्थः । प्रतिषेधो न वक्तव्यः "तदन्तनिर्देशात्सिद्धमि"ति भाष्यम् । मयूरव्यंसकादौ स्नात्त्वाकालकेत्यस्य पाठो निपातनाल्ल्यवभाव इति केचित् । प्रतिपिद्धति सजूस्सजूर्भ्यामित्यादावपि न दोष इत्याहुः ।

निर्दिश्यमानस्येति—

---

निर्दिश्यमानस्यादेशा इति–र्निर्दिश्यते इति निर्दिश्यमानन्तस्य स्थान आदेशा भवन्ति । निर्दिश्यमानत्वञ्च षष्ठीप्रकृतिविशिष्टत्वम् वैः स्वजन्योपस्थितिविषयताश्रयत्व स्वजन्योपस्थितीयविषयताश्रयसमभिव्याहृतवर्णाघटितत्वोभयसम्बन्धेनेति केचित् । अपरे तु–स्वशक्यत्व स्वविशिष्टवर्णाघटितत्वोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वन्निर्दिश्यमानत्वम् । वै० स्वोपस्थाप्यघटितो यः स्ववोध्यस्तद्घटकत्व स्वोपस्थाप्यावधिकपूर्वत्वोभयसम्बन्धेन । पूर्वत्वञ्च व्यवहिताव्यवहितसाधारणन्तेन स्नात्त्वाकालकीकृत्येत्यादौ न दोष इति वदन्ति ।

अनुकार्यानुकरणयोरभेदपक्षे सूत्रघटकीभूतयत्पदाऽव्यवहितोत्तरकालावच्छेदेन षष्ठ्या उच्चारणन्तस्यैव पदस्याऽदेश इत्यर्थो न तु तदन्ततदा द्योरिति। अनुकार्यानुकरणयोर्भेदपक्षे तु यदनुकरणपदाऽव्यवहितोत्तरकालावच्छेदेन षष्ठ्या उच्चारणन्तदनुकार्यस्याऽदेश इति तत्त्वम्। यत्र निर्दिश्यमानरूपाऽविरोधी आदेशस्तत्रैवेयम्परिभाषा ककिंशब्देऽतिजरशब्दे च निर्दिश्यमानरूपविरोधित्वादादेशयो "हलर्णो सर्वपदादेशा दाक्षीपुत्रस्य पाणिने"रितिपक्षेऽपि एतत्परिभाषाया अप्रवृत्तेः। स्थानिवद्भावविषये नास्या प्रवृत्तिस्स्थानिवुद्ध्यैव कार्यप्रवृत्तेरिति शेखरप्रबन्धोऽप्रबन्धस्तथाहि—आदेशे स्थानिवुद्धया कार्यम्प्रवर्त्तत इति महत्तुच्छम्। स्थानिकार्यं ह्यादेशेऽतिदिश्यत इति स्थानिवत्सूत्रार्थो न तु स्थानिवुद्धिरादेशे कर्त्तव्येति। तथा च भाष्यम् "स्थानिकार्यमादेशेऽतिदिश्यते शास्त्राद्यतिदेशानां कार्यार्थत्वात्प्राधान्यात्कार्यातिदेश" इति कैयटः।

अकच्विषये नायन्न्याय इति। अणुदित्सूत्रविषयातिरिक्तत्वे सति तन्मध्यपतितन्यायातिरिक्तत्वे सति षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वन्निर्दिश्यमानत्वम्। प्राथमिकोपस्थितित्वञ्च शास्त्रान्तराऽसहकृतत्वम्। शास्त्रान्तरपदेनाणुदित्सूत्रतन्मध्यपतितन्यायग्रहणम्। अत्र ज्ञापक "मनाप्यक" इत्यत्राकग्रहणम्। धर्मिग्राहकमानात्साकच्काऽनपहारके आदेशे नायन्न्याय इति कल्पना, भिन्धकीत्यत्र धित्वस्य ककिमित्यत्र कादेशस्य च साकच्कापहारकत्वेन तत्र निर्दिश्यमानपरिभाषाप्रवृत्त्या भाष्यशेखरयोस्सम्पन्नत्वात्।

अर्थवद्ग्रहणे नानर्थकस्य।

---

अर्थवद्ग्रहण इति—अर्थाऽस्यास्तीत्यर्थवत्, अर्थशब्दात् मतुप "मादुपधायाश्च" इतिवत्त्वम्। अदन्तादिनिस्तु न? "अर्थाच्चासन्निहिते"विधानात। सानुनासिकस्तु वकारोऽपि न, विधीयमानत्वात् "भाव्यमानेन" इति निषेधात। परिभाषायां सम्भवतीति च पारिशेषिकं ग्राह्यम् तथा च अर्थवद्ग्रहणे सम्भवति सति अनर्थकग्रहणन्नेति तात्पर्य्यम्। अत एव "अत्वसन्तस्य च"इत्यत्र अर्थवतोऽतोरसम्भवादनर्थकस्यापि ग्रहणन्न परिभाषया वार्य्यत इति भावः। ज्ञापकञ्च मूलेऽपि वहुशः स्पष्टम्। केचित्तु व्रश्चादिसूत्रे राजेः पृथग् भ्राज्ग्रहणेन ज्ञाप्यत एषा (राज्ग्रहणमस्तु तेनैव स्वतन्त्रराजेरपि, भ्राजेरपि तद्घटितत्वेन स्यादेवेति) वदन्ति तेषाम् मतन्न युक्तम्। साहचर्य्यपरिभाषया व्रश्चादिवत् धातुसंज्ञकराजेरेव ग्रहणापत्तौ भ्राज्घटकराजो धातुत्वाभावेन लक्ष्यासिद्धेरिति मूलोक्त एव प्रकार आश्रयणीयः।

विशिष्टरूपोपादानविषयेति । विशिष्टरूपत्वञ्च आनुपूर्व्यासाक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम् । मुख्यत्वञ्च प्रकारत्वानवच्छिन्नत्वम् । प्रकारत्वाऽसामानाधिकरण्यम्वा । अत्रार्थं ⌒ कल्पितान्वयव्यतिरेककल्पितशास्त्रीयोऽपि गृह्यत इति नवीनोक्तन्न साधुतरम् । यदि शास्त्रीयपदेन पारमार्थिकत्वं गृह्यते तदाऽसम्भव एव । कप्रत्ययान्तोढशब्दस्याऽपि पारमार्थिकत्वन्नास्ति । यदि शास्त्रे प्रकृत्यादिकल्पनायां कल्पितत्वं शास्त्रीयत्वन्तर्हि तस्य पृथगुपादानमनर्थकम् । एवञ्चान्वयव्यतिरेककल्पित एवार्थो गृह्यत इति सिद्धान्तः ।

अत्र ज्ञापकम् राजे ⌒ पृथग्भ्राजिग्रहणम् । नच परत्वविधौ राजिसाहचर्यात्फणादेरेव ग्रहणमिति कौमुदीग्रन्थोऽनुपपन्न इति वाच्यम् ? फणादौ टुभ्राज् इति पठ्यताम्, एजृ भ्रेजृ इत्यत्र ऋभ्राज इतिपाठः । परत्वविधौ राजृइति पाठः । एवञ्च ऋभ्राज इत्यस्य ग्रहणाऽभावः । किञ्च ऋभ्राज इत्येवमपि न कार्यः भ्राजेरत्यकारोऽनुदात्त आत्मनेपदार्थं ⌒ पठ्यताम् । एवञ्च पृथग्भ्राजिग्रहणं ज्ञापकमिति तत्त्वम् ।

### गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।

अत्र अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुद्धयत इति । जातस्य पुत्रस्य कृष्णरामगतगुणारोपेण रामेति कृष्णेति वा नाम कश्चित्करोति । तत्र गौणत्वञ्च गुणप्रतिसन्धानप्रयोज्यशक्यतावच्छेदकप्रकारकबोधविषयत्वम् । नच संज्ञापदेन शब्दग्रहणं गौणपदेनार्थग्रहणं संज्ञादिरपीति शेखरप्रयोगोऽनर्थक इति वाच्यम् ? संज्ञ्यादीतिपाठस्य न्यायत्वात् । संज्ञा आदि ⌒ प्रथमो बोधको यस्येति, सम्यक् ज्ञायते बोध्यते इति कथनेनार्थस्यैव लाभाच्च । तत्र तद्गुणारोपादेवेत्यत्यन्ताऽयुक्तम्'लोके गोपालकगुणारोपेण नहि गोपाल इति संज्ञा प्रवर्त्तते, किन्तु गोपालसंज्ञक ⌒ कश्चिदित्येव ततो बोधात् । अत एव महद्भूतश्चन्द्रमा अमहति महच्छब्दस्य गौणस्य "आन्महत"इत्यात्वन्न भवति । अग्निसोमौ माणवकावित्यत्र संज्ञात्वादीत्वषत्वयोरभावः । इयम्पदकार्येष्वेव प्रवर्त्तते न तु प्रातिपदिककार्येष्विति । इयम्प्रातिपदिककार्य्येऽपि प्रवर्त्तते । अत एव "ओत"सूत्रे भाष्ये गो-

---

गौणमुख्ययोरिति–लोकसिद्धा चेयं सर्वथैव मान्या न हि कश्चित् लौकिकोऽपि मुख्यं कार्यं विहाय गौणेअप्रधाने प्रवर्त्तत इति । अत एव रीतिरियं शास्त्रेऽपि समादरणीया न परित्याज्येति ।

भवदित्यादावनेन न्यायेन प्रगृह्यसंज्ञावारणपरं भाष्यं छ्योज्यम् । अत एव च "ए. ङाच्च प्राचामि"त्यादौ प्रातिपदिककार्येऽव्ययन्न्यायः । किञ्च उपात्तम्विशिष्यार्थोपस्थापकम्, स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नबोधकम्विशिष्टरूपं यत्रेति सर्वथाऽयुक्तो ग्रन्थः । ओत्सूत्रे भाष्ये विशिष्टरूपाऽभावेऽपि गौणमुख्यन्यायस्य भाष्यादावुपन्यस्तत्वात् । अत एव—

अभिव्यक्तपदार्था ये स्वतन्त्रा लोक विश्रुताः ।
शास्त्रार्थस्तेषु कर्त्तव्यश्शब्देषु न तदुक्तिषु ॥

इति पृथक् पठ्यते । अत एव च सर्वादिसूत्रे "संज्ञाप्रतिषेधो न वक्तव्यः" अभिव्यक्तपदार्था ये इति न्यायेन वारणात् । तथा च शुद्धगौणत्वे पदकार्ये तथासंज्ञारूपत्वे प्रातिपदिककार्ये चोभयत्रायन्न्याय प्रवर्त्तते इत्येव युक्तिवद्धसिद्धान्तः । श्वशुरसदृशस्याऽपत्यमित्यर्थके एतया परिभाषया इञ् निषेधस्तु न ? गौणमुख्यन्यायस्यानित्यत्वेन श्वाशुरिरिति रूपसिद्धेः । अर्थवद्ग्रहणपरिभाषा यथा विशिष्टरूपानुपादानेऽपि प्रवर्त्तते तथा तन्मूलभूतगौणमुख्यन्यायोऽपि विशिष्टरूपाऽनुपादानेऽपि प्रवर्त्तते इत्योत्सूत्रस्थभाष्यसम्मतिः । अर्थवद्ग्रहणेनानर्थकस्येति परिभाषाया अनित्यत्वे प्रमाणन्तु प्रवापानीत्यत्र णत्ववारणार्थं "मानि लोडि"त्यत्र लोड्ग्रहणम् । तन्मूलकगौणमुख्यन्यायानित्यत्वेऽपि तदेव प्रमाणम् । अनित्यत्वादेव स्वऋवतोत्यादौ स्वाद्यादेशः । महद्भूता ब्राह्मणीत्यत्र पुम्वद्भावश्चेति । एवञ्च नागेशप्रकारोऽयुक्तोऽशुद्धश्च । आनुपूर्व्या साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम्विशिष्टरूपत्वमित्यत्र साक्षादवच्छिन्नत्वञ्च स्वविशिष्टत्वम् । वैशिष्ट्यञ्च० स्वावच्छिन्नत्व स्वावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाऽभाववत्त्वोभयसम्बन्धेन । मुख्यत्वञ्च विशेष्यतायां प्रकारत्वाऽसामानाधिकरण्यम् । शेखरमते ओत्सूत्रस्थभाष्यान्निपातपदस्य स्वाश्रयनिरूपितसङ्केतवत्त्वसम्बन्धेन निपातत्वरूपानुपूर्व्यवच्छिन्ने शक्तिः । एवञ्च निपातपदप्रयोज्यमुख्यविशेष्यतानिरूपिता स्वाश्रयसङ्केतवत्त्वसम्बन्धावच्छिन्ना साक्षादवच्छेदकता निपातत्वरूपानुपूर्वीनिष्ठेति विशिष्टरूपोपादानत्वमुपपन्नम् ।

पदकार्यत्वञ्च परिभाषायाम् विभक्त्यनिमित्तकत्वे सति स्त्रीत्वाऽऽनिमित्तकत्वम् । "गोतो णित्" औतोऽम्शसो"रित्यादीनाम्विभक्तिनिमित्तकत्वम् । "जानपदे"ति सूत्रे गजवाची नागशब्दः स्त्रीत्वाऽनिमित्तकत्वमित्यत्र प्रमाणम् ।

अनिनस्मन्ग्रहणानीति ।

"कार्मस्ताच्छील्य"इतिनिपात एकदेशानुमत्त्याऽस्यां ज्ञापकस्तथाहि, एतत्परिभाषाऽभावेऽर्थवद्ग्रहणपरिभाषया "अनि"तिसूत्रस्य कार्म इत्यत्राऽप्राप्त्या "नस्तद्धित"इतिटिलोपेन रूपसिद्धौ तस्य ज्ञापकत्वसम्भवात् ।

एकयोगनिर्दिष्टानामिति ।

अत्र ज्ञापकं "हनसिसिजि"तिसिज्ग्रहणम् । अन्यथा "लिङ्सिचावात्मनेपदेष्वि"त्यतः केवलसिचोऽनुवृत्त्या सिद्धौ तस्य ज्ञापकत्वात् । "अदसो मादि"ति माद्ग्रहणञ्च ज्ञापकम् । अन्यथेदूतोस्सम्बन्धेन सिद्धया तस्य वैयर्थ्यात् ।

एकयोगनिर्दिष्टानां परस्परान्वितार्थकपदानां स्वप्रयोज्यविषयतया तत्प्रयोजकानामित्यर्थः । किञ्च "तोःषि"तोर्लि"इत्युभयत्र "स्तोःश्चुने"तितोरनुवृत्त्या रूपसिद्धौ तोर्द्वयग्रहणस्य ज्ञापकत्वादिति ज्ञापकचतुष्टयम् ।

क्वचिदेकदेशोऽप्यनुवर्त्तते ।

उद्दामा वडवेति सिद्धये "दामहायनान्ताच्चे"त्यत्र "संख्यादेरितिवक्तव्यमि"तिवार्त्तिकप्रत्याख्यानाय "संख्याऽव्ययादेर्ङीबि"त्यत एकदेशसंख्यादेरित्यनुवृत्तिः कृता । एतत्परिभाषाऽभावे भाष्याऽसङ्गतिरिति । "औतोऽम्शसो"रित्यचिनवमित्यत्राऽप्रवृत्तये "वाछपी"तिसूत्रतो वेतिनिवृत्तं छपीत्यनुवर्त्तत इति भाष्यञ्च

---

अनिनस्मन्निति–अन् इन् अस् मन् गृह्यन्ते यस्तानि अनिनस्मन्ग्रहणानि (अनर्थकानि च) तदन्तविधिम् प्रयोजयन्तीत्यर्थः । तदन्तविधिविधायके "येन विधिस्तदन्तस्य" इति सूत्रभाष्ये वचनरूपेण पठितत्वाद् वाचनिकी एवेति भावः । ज्ञाप्यमपि "न मपूर्वो ऽपत्येऽवर्मणः" इतिसूत्रे अवर्मण इतिप्रतिषेधो व्यर्थी भूय ज्ञापयति । अन्यथा वर्मन्शब्दघटकस्य अनोऽनर्थकत्वेन अर्थवत्परिभाषयैव तद्विषये "न मपूर्वोऽपत्ये" इतिसूत्राप्रवृत्त्या निषेधो व्यर्थ एव स्यात् । ज्ञापिते तु निरुक्तार्थे तत्र अनर्थकान्तस्यापि ग्रहणे प्रवृत्तौ निषेधस्स्वांशे चरितार्थ इति । फलन्तु सुशर्मादिकं शेखरे मूल एव स्पष्टम् ।

एकयोगनिर्दिष्टानां सहेति–इयमपि परिभाषा लोकसिद्धैव प्रायशः । यथा हि लोके एकत्र (मील्सादौ) कार्ये नियुक्तानां सहैव षड्वादनकाले कार्य्यकरणाय उपस्थितिः (हाजिरी) सहैव च द्वादशवादनकालेऽवकाशो दृश्यत इत्यादि । नियमश्चायं न सार्वत्रिकःलोकेऽपि एकत्र कार्ये सहैव नियुक्तानाम् मध्ये कश्चित् स्वल्पमेव कृत्यं विधायावकाशमादत्ते कश्चिच्च तदनन्तरमिति व्यभिचारदर्शनात् इत्यत एव"क्वचिदेकदेशोऽपि"इति परिभाषान्तरारम्भो द्रष्टव्यः ।

प्रमाणम् । पूर्वपरिभाषायाञ्शेखरे "आर्द्धधातुकस्येडि"ति सूत्रस्थेड्ग्रहणं"नेड्वशि कृती"ति सूत्रभाष्ये प्रत्याख्यातमिति न युक्तम् । "नेड्वशि कृति" इतिसूत्रे यदि खल्वयमेषोऽभिप्रायःद्विरिड्ग्रहणन्न क्रियेतेति पुरस्तादपि प्रतिषेधे सति तन्न करिष्यते कथम् इदमस्ति नेड्वशिकृतीति ततो वक्ष्यामि आर्द्धधातुकस्य वलादेरिति इड्ग्रहणम- नुवर्त्तते नेति निवृत्तम्" इति वदन्भाष्यकार इड्विधानार्थं तत्रेड्ग्रहणं न कर्त्तव्यमि- त्याह न तु विकारान्तरनिवृत्यर्थमिति । अन्यथा "दीधीवेवीटामि"ति भाष्य- विरोधात् । भाष्यं द्रष्टव्यम् नान्यथा भाषणम् ।

भाव्यमानेन सवर्णानां ग्रहणन्न—

आदेशे सवर्णग्रहणन्न भवति 'ज्यादादीयस'"इति दार्वोच्चारणात् । आगमे सवर्णग्रहणन्न भवति "वृतो वे"तिसूत्रारम्भसामर्थ्यात् । प्रत्यये सवर्णग्रहणन्न भवति अनभिधानात् । तथाचाऽप्रत्ययग्रहणमेकदेशानुमत्या परिभाषा ज्ञापयति ।

अर्थः—नच वोध्यबोधकयोरभेदाध्यवसायाद् भाव्यमानपदेन विधेयताप्रयोजक- पदग्रहणात् विधेयताप्रयोजकम्पदं स्वसवर्णग्राहकन्नेत्यर्थ इतिवाच्यम् ? "त्यदादी- नाम" इत्यत्र विधेयताप्रयोजकम्पदम् "अ" इति तत्स्वसवर्णस्य शुद्धह्स्वाकार- स्याऽपि ग्रहणेऽसमर्थं स्यात । सूत्रवैयर्थ्यापत्तेः ।

वस्तुतस्तु स्वविशिष्टो यस्तद्विशिष्टस्य ग्राहकम्विधेयताप्रयोजकं पदन्न भवति । पूर्ववैशिष्ट्यञ्च स्वतादात्म्य स्वनिष्ठशक्तिनिरूपकतावच्छेदकसमुदायघटकत्वत्वैतद- न्यतरसम्बन्धेन । अन्त्यवैशिष्ट्यञ्च स्वसवर्णत्व० स्वाऽवृत्तिधर्मवत्त्वैतदुभयसम्बन्धेन । तादात्म्यनिवेशफलन्तु "त्यादादीनाम" इति। द्वितीयसम्बन्धफलम् "इकोयणचो"ति, स्वपदेन विधेयताप्रयोजकपदग्रहणम् । तत्कालिकत्व तद्व्यक्तित्व तत्पुरुषीयत्वसा- नुनासिकदीर्घप्लुतादीनाञ्च व्यावृत्तिः । एतेन विधेयताप्रयोजकं यणपदं तत्सवर्णा

---

भाव्यमानेनेति–परिभाषा चैषा"अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रघटकी- भूताप्रत्ययग्रहणपदार्थानुवादिकैवेति केचित् । अर्थश्च भाव्यमानेन कोऽर्थो विधेयता- प्रयोजकेन पदेन सवर्णानां स्ववृत्तिधर्मविशेषवताम् ( स्ववृत्तिश्रावणप्रत्यक्षविषयता- वच्छेदकधर्मवताम् ) ग्रहणन्न भवति इति । ज्ञापनन्तु परिभाषायामस्यां "ई हल्यघोः" इतिसूत्रे दीर्घंकारविधानमेव । तथा हि,तत्र सूत्रे इकारमात्रं निर्दिश्यताम् स च इका- रःश्नाप्रत्ययस्य अभ्यस्तसंज्ञकधातोश्चाकारस्य स्थान एव विधीयत इति "स्थानेऽन्त- रतमः" इतिपरिभाषया दार्घाकारस्य स्थाने दीर्घ एव आदेशो भविष्यतीति दीर्घकारे सिद्धे पाणिनेस्वतो दीर्घोच्चारणस्य वैयर्थ्यंपुरस्सरं ज्ञापकत्वात ।

ऽप्रसिद्ध्या विशिष्टस्याऽप्रसिद्धत्वेन परिभाषाया अप्रवृत्त्या सानुनासिकयकारव-कारयोरपि विधानं स्यादित्यपास्तम् । गुणानामभेदकत्वेन प्राप्तन्निषिध्यत एनयेतिशेखरस्तन्न ? वृद्धिसूत्रे "अस्थिदधिसक्थ्यक्ष्णामनङुदात्त" इतिविधीय-मानस्यैव अनङवयवाऽकारस्य गुणानामभेदकत्वपक्षे अनुदात्तग्राहकतानिवृत्तये उदात्तग्रहणमिति भाष्यविरोधात् यत्र स्वतन्त्रोऽण् तत्रैव सवर्णग्रहणम्भवति । गुणानामभेदकत्वन्तु स्वतन्त्राऽस्वतन्त्रसाधारणम् पूर्वोक्तभाष्यानुरोधात् अत एव "लुङ्लङ्लृङ्क्ष्वडुदात्त" इतिसूत्रे "चतुरनडुहोरामिति" सूत्रे चोदत्तग्रहणं सङ्गच्छेते । तस्माद् गुणानामभेदकत्वेन प्राप्तस्य नास्त्येतया निषेधः । इदम्शब्दात्त सिलि इत इत्यत्र नानुनासिकेकारो ? भाव्यमानपरिभाषया निषेधादित्यपि न युक्तम् । गुणा भेदका इति पक्षाऽश्रयणात नानुनासिक इत्येव सिद्धान्तः ।

भाव्यमानोऽप्युकारस्सवर्णान् गृह्णाति—

इति न परिभाषाऽकारः किन्तु "क्वचिद् भाव्यमानोऽप्यण् सवर्णान् गृह्णाती"-त्येव। नच "तित्स्वरितमिति" सूत्रे भाष्ये भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहण-मितिपठ्यते कथमण्विशिष्टपाठ इति वाच्यम्? "स्थाघ्वोरिच्चेति" सूत्रे इच्च कस्य तका-रेत्वं दीर्घो माभूत् इतिवार्त्तिकग्रन्थोपपत्तये सामान्येनाण उपादानात् । किञ्च भा-व्यमानोऽण् सवर्णान् गृह्णातीत्येष परिहारोऽनित्यत्वान्नोक्त इति । तत्रकैयट इति ग्रन्थाच्च शेखरोक्त॑प्रयासो विफलः । अत्र ज्ञापकम् "ॠत उदि"तितपरकरण-म् । "अदसोऽसेर्दादुदोम" इत्यत्र उ इति ह्रस्वदीर्घयोस्समाहारद्वन्द्व इति फलम् । उ इत्यत्र तन्त्रेण ह्रस्वदीर्घयोर्विधानसिद्धे॑परिभाषा न कार्येति ।

वर्णाश्रये नास्ति प्रत्ययलक्षणम्—

ननु "नलुमताङ्गस्ये" त्यनेन गोहितमित्यादौ निषेधान्न दोष इति चेन्न ? अङ्गत्वावच्छिन्नोद्देश्यताककार्यस्यैव तेन निषेधात अवादेशस्याङ्गत्वावच्छि-न्नोद्देश्यकत्वाऽभावात्परिभाषावश्यकत्वात । नच उत्क्रामेत्यत्रा "तोहे"रितिहे-लुकि "क्रम॑परस्मैपदेष्वि"तिदीर्घो न स्यात । प्रत्ययलक्षणस्य "नलुमतेति" निषेधादिति वाच्यम् ? अङ्गवृत्तिर्या षष्ठ्यन्तपदप्रयोज्या विषयता लुप्तप्रत्ययाऽ-व्यवहितपूर्वत्वेन साक्षादवच्छिन्ना तन्निरूपकं कार्यन्नेत्यर्थः । उत्क्रामेत्यत्र पर-स्मैपदेन साक्षादवच्छिन्नायास्सप्तम्यन्तघटितपदप्रयोज्यविषयतायाः षष्ठ्यन्तपदप्रयो-ज्यत्वाऽभावेन निषेधाऽप्रवृत्तेः । नचैवमपि गोहितमित्यादावेत्पदप्रयोज्याया वि-

यवताया: षष्ठ्यन्तपदप्रयोज्यत्वस्य लुप्तप्रत्ययाऽव्यवहितपूर्वत्वेन साक्षादवच्छिन्नत्वस्य च सत्त्वेन निषेधप्रवृत्त्याऽवतरणमलङ्कृतमिति वाच्यम् ? चित्रायां जाता चित्रेत्यस्यैवावतरणत्वात अङ्गपर्याप्तधर्मं साक्षात् परम्परया वाऽवच्छिन्ना या लुप्तप्रत्ययाऽव्यवहितपूर्वत्वेन साक्षादवच्छिन्नोद्देश्यता तन्निरूपककार्यन्नेत्यर्थान्निर्जरपुत्र इत्यादावदोष इत्यभिधानाच्चेति । गवे हितमितिवत गोहितमित्यादावपि अवादेशापत्तिः । गावौ हितौ यस्य तद् गोहितमिति समास इति साधुप्रकारः । यत्र वर्णस्य प्राधान्येनाश्रयणन्तत्रैनया निषेधस्तेन अतृणेडित्यत्र "तृणह इमि"ति प्रत्ययलक्षणेनेमागमस्सिद्धयति । परिभाषया निषेधस्तु न ? हलादौ पिति सार्वधातुक इति वर्णस्य प्रत्ययविशेषणत्वात् अप्राप्तेः । इयम्परिभाषा "प्रत्ययलोपे प्रत्ययलक्षणमि"तिसूत्रे "प्रत्ययलोपे तल्लक्षणमि"ति वाच्ये द्वितीयप्रत्ययग्रहणं प्रत्ययस्य कार्ये यत्र निमित्तभावः प्रत्ययस्वरूपाश्रयेण वर्णरूपाश्रयेण वा तत्सर्वं स्यात । सर्वनाम्नस्तच्छब्दस्यात्र वस्तुमात्रपरामर्शकत्वात् । प्रत्ययग्रहणे तु तत्सामर्थ्यात्प्रत्ययमात्रनिमित्तकमेव कार्य्यं प्रत्ययलोपे भवति न वर्णतानिमित्तमिति कैयटः । तथाच सूत्रार्थफलिका परिभाषेति सूक्ष्मदर्शिनः । शेखरे तु स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणमिति प्रकारान्तरेण व्याख्यातमस्ति । तन्न ? लोपेऽप्यादेशत्वेनानुवृत्तिम्विनैव स्थानिवद्भावस्य सिद्धत्वात । "अदर्शनं लोप" इत्यादौ विच्छिन्नस्य स्थानिवत्पदस्यानुवृत्त्यनर्हत्वात् कथङ्कारमनुवृत्तिरिति । किञ्च मण्डूकानुवृत्तौ प्रमाणाऽभावाच्च । पूर्वोक्तकैयटग्रन्थवलेन भाष्यग्रन्थस्य संयोजितत्वाच्च । वर्णप्राधान्यञ्च वर्णस्येतराऽविशेषणत्वरूपं प्रत्ययनिरूपितविशेष्यतारूपमित्यपि शेखरोक्तमयुक्तम् । वर्णस्य प्रत्ययनिरूपितविशेष्यतासत्त्वे इतराऽविशेषणत्वेनैव सिद्धे प्रत्ययनिरूपितविशेष्यताया ऽपृथक् ग्रहणवैयर्थ्यसङ्गात । नच विधेयङीबादिप्रत्यये तस्य विशेषणत्वादितराविशेषणत्वमसिद्धमिति वाच्यम् ? "एचोऽयवायाव" इत्यादावचीत्यस्य विधेयमायादिकम्प्रति विशेषणत्वेनेतराविशेषणत्वप्रत्ययनिरूपितविशेष्यत्वान्यतराऽभावेन वर्णप्राधान्याऽसिद्धेः, तस्माच्छेखरो न युक्तः ।

वस्तुतस्तु समानाधिकरण्यसम्बन्धेन इतराऽविशेषणत्वम्वर्णस्य प्राधान्यमिति सर्वमवदातम्

उणादयोऽव्युत्पन्नानि प्रातिपदिकानि—

---

उणादयोऽव्युत्पन्नानीति—"अतः कृकमि"इतिसूत्रे कमिग्रहणेनैव यथा अयस्काम

उणादिप्रत्ययमात्रस्य प्रातिपदिकत्वाऽभावादुणाद्यन्ततदादीनीत्यर्थः। प्रकृति-प्रत्ययविभागशून्यानीत्यर्थः। प्रकृतिप्रत्ययविभागशून्यत्वमव्युत्पन्नत्वम्। प्रकृति-प्रत्ययविभागसम्वलितत्वं व्युत्पन्नत्वम्। नचोणाद्यन्तसर्पिश्शब्दस्य यजुश्शब्द-स्याऽव्युत्पन्नत्वे सर्पिषा यजुषेत्यादौ प्रत्ययावयवत्त्वाऽभावेन षत्वन्न स्यादिति वाच्यम्? उणाद्यन्तत्वेन पराभिमतानि बहुलं साधूनीत्यर्थकेनो"णादयो बहुल"मित्यनेन षत्वोपपत्तेः। शमेः खः शंखः षण्ढ इत्यादावीनाद्यादेशमाशङ्क्य प्रातिपदि-कविज्ञानाच्च भगवत्पाणिनेस्सिद्धमिति प्रातिपदिकविज्ञानादित्यस्य प्रकृतिप्रत्य-यविभागशून्यप्रातिपदिकविज्ञानादित्यर्थः।

**प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्।**

इयञ्च परिभाषा "यस्मात्प्रत्ययविधि"रिति सूत्रे तदादिप्रत्यय इति योगवि-भागेन प्रत्यये गृह्यमाणे यस्मात्प्रत्ययस्तदादि गृह्यत इत्यर्थमाश्रित्य व्याख्याता भाष्ये। फलञ्च देवदत्तश्चिकीर्षतीत्यपि फलम् कटं चिकीर्षुरित्यादौ कटादिविशिष्टस्य सन्नन्तत्वेन न धातुसंज्ञाऽन्यथा "सुपो धातुप्रातिपदिकयो"रितिसुब्लुगापत्तिः। ल-ङादौ समुत्पन्ने "लुङ्लङ्"ित्यडागमो न कटशब्दस्य द्वित्वञ्च न। एवम्प्रकारेण तदाद्यंशलाभः तदन्तांशलाभस्तु वचनादेव सिद्धः। ननु शेखरकृतोक्तम् विशेष्यान्त-रासत्वे शब्दरूपम्विशेष्यमादाय "येन विधि"रितितदन्तविधिस्सिद्ध इति, तत्स-र्वथा विचाररहितम्। "इको यणची"त्यादौ तदन्तविधिप्रतिक्षेपपरक "येन वि-धि"रिति सूत्रभाष्यविरोधात्। यत्र प्रत्ययो निमित्तत्वेनाश्रीयते तत्र तदाद्यंशमा-त्रोपस्थितिरिति "अङ्गस्ये"ति सूत्रे भाष्यकैयटयोः।

प्रत्ययमात्रग्रहणे एषा ननु प्रत्ययाऽप्रत्ययग्रहण इति। प्रत्ययविशिष्ट एवे-त्यर्थः। वैशिष्ट्यञ्च स्वबोधकत्व स्वविशिष्टाऽबोधकत्वोभयसम्बन्धेन। सम्बन्धघ-टकवैशिष्ट्यञ्च स्वेतरत्व स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वोभयसम्बन्धेन। सर्वादिगणपठितभवतु इति उगित्प्रातिपदिकस्य सत्वात्प्रत्ययमात्रग्रहणाऽभावात्परि-भाषाया अस्या अप्रवृत्त्या निर्यवमतीत्यादौ ङीप्सिद्ध्यति।

**प्रत्ययग्रहणपरिभाषाघटकतदन्तांशापवादः।**

---

इत्यादौ सत्वन्तथा अयस्कंस इत्यत्रापि कंसशब्दे कमेस्सत्वेन सत्वे सिद्धे पृथक् कंसग्रहणम् ज्ञापकमस्यामिति बोध्यम्। विशिष्टं स्पष्टम् मूले ततोऽपि "प्रत्ययस्य लु-कः" इतिसूत्रभाष्ये।

उणादिप्रत्ययमात्रस्य प्रातिपदिकत्वाऽभावादुणाद्यन्ततदादीनीत्यर्थः । प्रकृतिप्रत्ययविभागशून्यानीत्यर्थः । प्रकृतिप्रत्ययविभागशून्यत्वमव्युत्पन्नत्वम् । प्रकृतिप्रत्ययविभागसम्वलितत्वं व्युत्पन्नत्वम् । नचोणाद्यन्तसर्पिश्शब्दस्य यजुश्शब्दस्याऽव्युत्पन्नत्वे सर्पिषा यजुषेत्यादौ प्रत्ययावयवत्वाऽभावेन षत्वन्न स्यादिति वाच्यम् ? उणाद्यन्तत्वेन पराभिमतानि बहुलं साधूनीत्यर्थकेनो"णादयो बहुल"मित्यनेन षत्वोपपत्तेः । शमेः खःशंखः शण्ढ इत्यादावीनाद्यादेशमाशङ्क्य प्रातिपदिकविज्ञानाच्च भगवᳶपाणिनेस्सिद्धमिति प्रातिपदिकविज्ञानादित्यस्य प्रकृतिप्रत्ययविभागशून्यप्रातिपदिकविज्ञानादित्यर्थः ।

प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ।

इयञ्च परिभाषा "यस्मात्प्रत्ययविधि"रिति सूत्रे तदादिप्रत्यय इति योगविभागेन प्रत्यये गृह्यमाणे यस्मात्प्रत्ययस्तदादि गृह्यत इत्यर्थमाश्रित्य व्याख्याता भाष्ये । फलञ्च देवदत्तश्चिकीर्षतीत्यपि फलम् कटं चिकीर्षुरित्यादौ कटादिविशिष्टस्य सन्नन्तत्वेन न धातुसंज्ञाऽन्यथा "सुपो धातुप्रातिपदिकयो"रितिसुब्लुगापत्तिः । लङादौ समुत्पन्ने "लुङ्लङि"त्यडागमो न कटशब्दस्य द्वित्वञ्च न । एवम्प्रकारेण तदाद्यंशलाभः तदन्तांशलाभस्तु वचनादेव सिद्धः । ननु शेखरकृतोक्तम् विशेष्यान्तशास्त्रे शब्दरूपम्विशेष्यमादाय "येन विधि"रितितदन्तविधिस्सिद्ध इति, तत्सर्वथा विचाररहितम् । "इको यणची"त्यादौ तदन्तविधिप्रतिक्षेपपरक "येन विधि"रिति सूत्रभाष्यविरोधात् । यत्र प्रत्ययो निमित्तत्वेनाश्रीयते तत्र तदाद्यंशमात्रोपस्थितिरिति "अङ्गस्ये"ति सूत्रे भाष्यकैयटयोः ।

प्रत्ययमात्रग्रहणे एषा नतु प्रत्ययाऽप्रत्ययग्रहण इति । प्रत्ययविशिष्ट एषेत्यर्थः । वैशिष्ट्यञ्च स्वबोधकत्व स्वविशिष्टाऽबोधकत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वेतरत्व स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वोभयसम्बन्धेन । सर्वादिगणपठितभवतु इति उगित्प्रातिपदिकस्य सत्त्वात्प्रत्ययमात्रग्रहणाऽभावात्परिभाषाया अस्या अप्रवृत्त्या निर्यवमतीत्यादौ ङीप्सिद्ध्यति ।

प्रत्ययग्रहणपरिभाषाघटकतदन्तांशापवादः ।

---

इत्यादौ सत्त्वन्तथा अयस्कंस इत्यत्रापि कंसशब्दे कमेस्सत्वेन सत्त्वे सिद्धे पृथक् कंसग्रहणम् ज्ञापकमस्यामिति बोध्यम् । विशिष्टं स्पष्टम् मूले ततोऽपि"प्रत्ययस्य लुक्" इतिसूत्रभाष्ये ।



प्रत्ययग्रहणे चापञ्चम्याः ।

पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकम्पदन्तदन्तबोधकन्नेत्यर्थः । ननु "रदाभ्या"मित्यस्य तकारविशेषणत्वेन पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताया अभाव इति वाच्यम् ? प्रत्ययावयवे प्रत्ययत्वव्यवहारेण निष्ठावयवतत्त्वस्य प्रत्ययत्वव्याप्यत्वात् । नच तपदमेव तदवच्छिन्नविषयताप्रयोजकन्न निष्ठापदमिति वाच्यम् ? तादृशविषयताप्रयोजकपदघटकमित्यर्थाश्रयणात् ।

नच हषत्तीर्ण इत्यादौ "अन्त्यबाधेऽन्त्यसदेशस्ये"तिपरिभाषया धातुतकारस्य नत्वाऽप्राप्तिरिति वाच्यम् ? हषत्तीर्णवानित्यस्योपलक्षकत्वात् । अन प्राणन इति धातुस्तस्मात्क्विपि "डाबुभ्यामि"तिडापि टिलोपे "सुप्पितावनुदात्तावि"ति अनुदात्तत्वे आशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि नपुंसकह्रस्वत्वे 'अ' इत्यनुदात्तस्तस्मादाचारक्विबन्तात् क्तप्रत्यये "एकाच उपदेश" इत्यनिटि अतो लोपे त इति तस्य हषदित्यनेन समासे हषत्त इत्यत्र नत्वाऽऽपत्तिरिति परिभाषायाः प्रधानम्फलम् । एतेनावयवषष्ठीविषयेऽपि निर्दिश्यमानपरिभाषाप्रवृत्त्या निष्ठान्ततदाद्यवयवो यो निष्ठापदीयनिर्दिश्यमानस्तदवयवस्य रदाभ्याम्परस्य तकारस्य नत्वमित्यर्थे धातुतकारस्य निर्दिश्यमानावयवत्वाऽभावेन परिभाषाम्विनापि दोषाऽभाव इत्यपास्तम् ।

उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ।

श्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकं यत्पदन्तदुत्तरपदम्विशेष्यीकृत्य तदन्तबोधकन्नेति परिभाषार्थः । धर्मिग्राहकमानादियमादेशविधायक एव प्रवर्त्ततेऽत एव"रात्रेᳵकृती"त्यादौ न दोषः । परिभाषायाᳶफलञ्च कुमारीब्राह्मणिरूपेत्यादौ "घरूपे"तिन ह्रस्वः । नन्वस्मिन्प्रयोगे बहुव्रीहिᳵकर्मधारयो वा तत्पुरुषो वा आद्ययोᳶपुम्वद्भावापत्तिः । अन्त्ये "नद्यीतरे प्रतिषेधो वक्तव्यो न वक्तव्यस्समानाधिकरण इतिवर्त्तते इति समानाधिकरण एव ह्रस्वविधानम् इति"भाष्यविरोधः । वयोवाचकेऽपि जातिकार्यस्येष्टतया "जातेश्चे"तिपुम्व-

---

प्रत्ययग्रहणे चापञ्चेति—परिभाषेयं वाचनिकी इति केचित् । परेतु "येन विधिः" इत्यत्र "तस्मादित्युत्तरस्य" इत्यतः तस्मादिति "अणुदित्सवर्णस्य"इतिसूत्रादप्रत्यय इति चानुवर्त्तते, प्रत्ययग्रहणपरिभाषया तदादीत्यंशश्च उपतिष्ठते इति तदर्थं जातेयमिति वदन्ति । अन्ये तु वार्त्तिकमेवैतदिति ।

द्भावनिषेधात् बहुव्रीहौ दोषाऽभावात् । केवलब्राह्मणिरूपेत्यस्योपलक्षणत्वाद्वा । "हृदयस्य हृल्लेखयदणि"तिसूत्रे लेखग्रहणं ज्ञापकम् । अन्यथाऽणन्तत्वादेव सिद्धे तस्य वैयर्थ्यापातात् । नच लेखशब्दो घञ्प्रत्ययान्त इति नाणन्तत्वात्सिद्धिरिति वाच्यम् । भाष्यप्रामाण्येन घञन्तलेखशब्दाऽनभिधानात् ।

स्त्रीप्रत्यये चानुपसर्जने न ।

अस्याम्परिभाषायामुपसर्जनत्वन्न शास्त्रीयम्प्रत्ययमात्रे तस्याऽसम्भवात् । नच इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वमुपसर्जनत्वमिति वाच्यम् ? परमकारीषगन्धीपुत्र इत्यत्रापि ष्यङ उपसर्जनत्वापत्तेः ।

वस्तुतस्तु—अत्र स्वान्तसमुदायपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकत्वमुपसर्जनत्वम् । यस्योपसर्जनत्वमिष्टन्तत्स्वपदग्राह्यम् । कन्लुवन्तष्यङन्तसमुदायपर्याप्तशक्तिनिरूपकोऽर्थः कारीषगन्ध्यासदृशः अतिकारीषगन्ध्यापुत्र इत्यत्र कारीषगन्ध्याकर्मकातिक्रमणकर्त्ता तन्निष्ठविशेष्यतानिरूपितप्रकारता कारीषगन्ध्यापदार्थे करीषगन्धसदृशगन्धविशिष्टसम्बन्धिस्त्रीत्वविशिष्टापत्यरूपे तदवच्छेदकता स्त्रीत्वे तत्प्रयोजकत्वं ष्यङ इति लक्षणसमन्वयप्रकारः । परमकारीषगन्धीपुत्र इत्यत्र च परमाभिन्नकरीषगन्धसदृशगन्धवत्सम्बन्धिस्त्रीत्वविशिष्टापत्यरूपस्तन्निष्ठविशेष्यतानिरूपितप्रकारता परमपदार्थो तदवच्छेदकता टाबर्थस्त्रीत्वे तत्प्रयोजकत्वं टापो नतु ष्यङ इति तस्याऽनुपसर्जनत्वेन सम्प्रसारणम् । तदादिनियमापवादः । अनुपसर्जनस्त्रीप्रत्यये गृह्यमाणे यस्मात्स विहितस्तदादि गृह्यत इति नियमो नास्ति किन्तु तदन्तमात्रं गृह्यते इति परिभाषार्थः । उपसर्जनस्त्रीप्रत्यये तदादिनियम ऽफलति स्त्रीप्रत्ययसामान्यग्रहणेति । स्त्रीप्रत्ययत्वावच्छिन्नबोधक इत्यर्थः । "गोस्त्रियोरुपसर्जनस्ये"ति यथा विशेषग्रहणेति स्त्रीप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकपदे इत्यर्थः । "ष्यङःसम्प्रसारणमि"त्यादौ यथा । वाचनिक्येवेति भाष्ये ज्ञापकप्रदर्शनन्नास्ति । अत्र ज्ञापकन्तु "नेयङुवङ्स्थानावस्त्री" त्यतोऽस्त्रीत्यस्याङ्गसंज्ञासूत्रे सम्बन्धः । स्त्रीबोधकभिन्नोऽर्थ ऽप्रत्यये तस्यान्वयः । स्त्रीबोधकश्च प्रधानन्यायेनानुपसर्जन एव । एवञ्च अनुपसर्जनस्त्रीबोधकभिन्नप्रत्यये गृह्यमाणे तदादिरित्युपतिष्ठत इत्यर्थादनुपसर्जनस्त्रीप्रत्यये तदादिनियमलाभाऽभावात्परिभाषा फलति । एवं ज्ञापनप्रकारः ।

संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणन्नास्ति ।

संज्ञाविधायकशास्त्रघटकं प्रत्ययबोधकं पदन्तदन्तबोधकन्नेति तु नार्थः अर्थवत्सूत्रम्प्रातिपदिकसंज्ञाविधायकन्तच्छास्त्रघटकम्प्रत्ययबोधकम्पदमस्तीति तत्तदन्तबोधकञ्च स्यात्। नच संज्ञानिष्ठविधेयतया साक्षान्निरूपिता योद्देश्यता तत्प्रयोजकं प्रत्ययबोधकम्पदन्तबोधकन्नेत्यर्थोऽर्थवत्सूत्रे साक्षादुद्देश्यता प्रत्ययपदे नास्ति किन्तु शब्दस्वरूपपदे तथाच निषेधस्तदन्यविधेर्न भविष्यतीति वाच्यम् ? "कृदतिङि"त्यादौ कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितोद्देश्यताप्रयोजकत्वाभावादेतत्परिभाषाऽप्रवृत्त्या तिङ्पदे तदन्तबोधकत्वापत्तेः।

वस्तुतस्तु संज्ञानिष्ठविधेयतया साक्षान्निरूपिता प्रत्ययत्वव्याप्यधर्मेण साक्षादवच्छिन्ना योद्देश्यता तत्प्रयोजकशास्त्रघटकं प्रत्ययबोधकम्पदन्तदन्तबोधकन्न भवतीत्यर्थः। अर्थवत्सूत्रे प्रातिपदिकनिष्ठविधेयतया साक्षान्निरूपिताया प्रत्ययत्वेन साक्षादवच्छिन्नत्वाऽभावान्न निषेधः। "कृदतिङि"त्यादौ तु कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितायास्तयाःप्रत्ययत्वेन साक्षादवच्छिन्नतया तत्प्रयोजकशास्त्रघटकत्वेनातिङ्पदे निषेधः। अतिङ्ग्रहणसामर्थ्यात्तदन्तनिषेधप्रवृत्तिरिति व्याख्यानाच्च। किञ्च तदन्तविधौ तिङन्ततदादिभिन्न इत्यर्थे प्रत्ययमात्रस्य कृत्संज्ञापत्तौ "अकृत्सार्वधातुकयोर्दीर्घ" इत्यत्र कृद्ग्रहणेनैव सिद्धौ सार्वधातुकग्रहणसामर्थ्यात्तदन्तविध्यभावकथनाच्च। ज्ञापकं "छसिङन्तमि"त्यन्तग्रहणमधिकं शेखरे।

अत्र केचित्–इयम्परिभाषा न कार्या लाघवात्। तथाहि प्रत्ययग्रहणपरिभाषया तदादीतिप्रातिपदिकमात्रस्योपस्थितिस्तस्यै "ङ्याप्स्वादि"त्यत्र अन्वयानुरोधेन यथा पञ्चम्यन्तत्वन्तथैव यत्र यत्र इयम्परिभाषा वस्तुत प्रवर्त्तते तत्र तत्र पञ्चम्यन्तत्वमेव कल्पनीयमेवञ्च तदन्तविधे प्राप्तिरेव नास्ति। परिभाषार्थविचारे बहुत्र क्लिष्टकल्पनापेक्षया विशिष्टलाघवात्परिभाषा निष्प्रयोजना इति गुरवः। फलञ्च स्वीकारपक्षे परिभाषाया "तरप्तमपौ घ"इतिघसंज्ञा केवलप्रत्यययोरेवेति तेन गौरितरेत्यादौ "तसिलादिष्वि"ति पुम्वद्भावम्बाधित्वा "घरूपे"तिह्रस्वः। कुमारगौरितरेत्यत्र कुमारीशब्दस्य "पुम्वत्कर्मधारये"ति पुम्वद्भावम्बाधित्वा"घरूपे"ति न ह्रस्वः। "कृत्तद्धितसमासाश्चे"ति सूत्रे तु तदन्तविधिर्भवत्येव। अर्थवद्ग्रहणमनुवृत्तिसामर्थ्यात्प्रशंसायाम्मतुप्। एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वं हि प्रशंसामूलम् इति भाष्यप्रामाण्यात्। किञ्च "युजेरसमासे" इत्याद्यनेकशास्त्रारम्भसामर्थ्यात्कृदंशे तदन्तविधिः। "घकालतनेषु कालनाम्न" इत्यारम्भ-

सामर्थ्यात्तद्धितांशे तदन्तविधिरिति वर्णनाच्च । समासांशे तु "समर्थः पदविधि"-रितिशास्त्रसहायतया तदन्तविधानम् । "सामन्त्रितमि"त्यादौ तु आमन्त्रितमिति-महासंज्ञाकरणात्तदन्तविधिसिद्धेरित्यलम् ।

### कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणम्—

"क्षेपे" इतिसूत्रे प्रत्ययग्रहणपरिभाषया क्तान्ततदादिप्रकृतिकसुबन्तेन सह सप्तम्यन्तं समस्यत इति फलितार्थे स्थितशब्दस्यैव क्तान्ततदादिप्रकृतिकत्वेन नकुलस्थितशब्दस्य क्तान्ततदादित्वाऽभावात्समासो न स्यादित्येतदर्थं कृद्ग्रहणपरिभाषावतारः ।

परिभाषार्थश्च लक्षणाशक्तिसम्पन्नः । नच वैयाकरणैर्लक्षणाशक्तिः खण्डितेति वाच्यम् ? तावताऽपि तत्राऽप्रसिद्धाख्यशक्तिसम्वर्णनात् तथाहि—कृन्मात्रनिष्ठविषयताप्रयोजकम्पदं कृद्विशिष्टे लाक्षणिकम् । वैशिष्ट्यञ्च स्वनिष्ठचरमावयवतानिरूपकत्व स्वविशिष्टाऽघटितत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वेतरत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाऽव्यवहितपूर्वत्वविशिष्टगतिकारकान्यतरेतरत्वैतत्त्रितयसम्बन्धेन । समन्वयश्च स्थं कृदिति तन्निष्ठेत्याहुः । किञ्च कृद्विशिष्टे कृदन्ततदादित्वाऽऽरोपः, वैशिष्ट्यानि पूर्वोक्तान्येव ।

पदात्परत्वाऽभावेन चेतिशेखरोऽनुपपन्नः, कुत्सने च सुपीत्यत प्रागेव पदादित्यस्य निवृत्तेः "गतिर्गता" वित्यस्य ततः परत्वात् । अत्र ज्ञापकञ्च "गतिरनन्तर" इतिसूत्रेऽनन्तरग्रहणम् अपिशब्दात्तदसमभिव्याहृतस्य केवलस्यापीति । नच घटमानय पटमप्यानयेति प्रतीतौ घटसत्वेनैव पटाऽनयनं नतु केवलपटानयनमिति कथङ्कारम्परिभाषास्थापिशब्देन केवलस्य ग्रहणमिति वाच्यम् ? भाष्यप्रामाण्यात्तथाभिप्रायवर्णनात् । अधिकप्रकारश्शेखरः ।

### पदाङ्गाधिकारे तस्य च तदन्तस्य च—

"येन विधि" रितिसूत्रे कैयट आह विशेष्यविशेषणभावव्यवस्थार्थमोदशवार्त्तिकारम्प्रवृत्तिरिति जरसौ निर्जरसाविति फलम् अङ्गाधिकारस्य । पदाधिकारस्य तु इष्टकचितम् पक्वेष्टकचितम् "इष्टकेषीकामालानामि"तिह्रस्वः, "पदस्य पदाज्यातिगोपहते"ष्वितिसूत्रे तु न ? तदन्तविधिर्लक्ष्यानुसाराद् भाष्यप्रामाण्यादित्यलम् ।

### व्यपदेशिवदेकस्मिन्—

एकपदा ऋगित्यत्रार्थेन युक्तो व्यपदेश इतिभाष्योक्तरीत्या मुख्यव्यवहारसत्त्वादिति शेखरोऽयुक्तस्तथाहि, न नहि पदादिशब्दा अर्थविशिष्टशब्दस्य वाचका किन्तु शब्दमात्रस्य अत एव "अर्थेन व्यपदेश" इतिभाष्यम् । अत्र कैयटः अभेदोपचारादर्थ एव पदादिशब्दैरभिधीयते इति तस्य व्यपदेशस्य गौणत्वम्भाष्यस्यैकदेशयुक्तिरवश्चाऽध्वनयत् । अत एव चाणुदित्सूत्रे "ह्रस्वसम्प्रत्ययादि"ति भाष्यवार्तिकव्याख्यानावसरे भाष्ये ऋगित्युक्ते संपाठमात्रं गम्यते नास्यार्थो गम्यत इत्युक्तम् । यदपि शेखरकृतोक्तमियानित्यत्र व्यपदेशिवद्भावेन तद्धितान्तत्वात्प्रातिपदिकसंज्ञा सिद्धयति इति तदपि न ? तस्य हि तदन्तत्वम्व्यपदेशिवद्भावेन भवति नतु यस्मात्स विहितस्तदादित्वविशिष्टतदन्तत्वम्प्रमाणाऽभावात् । प्रातिपदिकसंज्ञा च स्थानिवद्भावेन भवति स्थानिवत्सूत्रे च एकदेशविकृतस्योपसंख्यानमित्युक्तम्, आदिश्यत इत्यादेश इत्यर्थंग्रहणादयमर्थस्सिद्ध इतिभाष्यादावुक्तम् । तस्मात् व्यपदेशिवद्भावेन तद्धितान्तत्वमितिभाष्यानवलोकित्वेन भ्रान्तम् ।

यदपि शेखरकृतोक्तन्निजौ चत्वार एकाच इतिभाष्यमनवलोक्य प्रवृत्तमिति तदत्यन्तमसमञ्जसम् ? विशिष्टस्यैकाज्व्यपदेशे कर्त्तव्ये ससहायत्वसत्त्वेऽपि इकारमात्रस्यैकाज्व्यपदेशेऽसहायत्वं सुतराम् । अत एव कुरुत इत्यादौ तकारेण ससहायस्याऽपि अकारस्य अकारादिव्यपदेशे कर्त्तव्येऽसहायत्वमिति तत्रैव तत्र २ मतम् । तस्माद् व्यपदेशिवद्भावन्निरीक्ष्यैव निजौ चत्वार एकाच इतिभाष्यप्रवृत्तिरिति सिद्धान्तः । असहायत्वञ्च अतिदिश्यमानधर्मवद्घटकत्वे सति अतिदिश्यमानधर्मवद्घटितत्वे सति अतिदिश्यमानधर्मवदसमभिव्याहृतत्वे सति तत्तन्मुखप्रविष्टधर्मवत्त्वम् । मुखप्रविष्टत्वञ्च स्वघटकनिष्ठा याऽवयवत्वव्याप्यधर्मावच्छिन्ना विशेष्यता तन्निरूपितप्रकारतावच्छेदकत्वम् । दरिद्राशब्दघटकेकारे दरिद्रानिरूपितान्तत्वन्न दरिशब्दे धातुत्वन्न दरिद्राशब्दे इवर्णान्तत्वन्नेति यथायोग्यमुदाहरणम् । एवं सभासन्नयनशब्देऽपि समन्वयः । रामादिशब्दे उक्तसत्यन्तत्रयेण जराशब्दान्तत्वन्तद्विशिष्टे जराशब्दान्तत्वादादेशापपत्तिरिति हेतोस्तत्तन्मुखप्रविष्टधर्मवत्त्वनिवेशः । तत्रजराशब्दान्तत्वन्तन्मुखप्रविष्टं जरात्वन्तद्वत्त्वन्नास्तीति रामादिशब्दस्य न जरसादेशः । घटकत्वञ्च यत्किञ्चिद्विशिष्टत्वम् वै० स्वव्यापकत्व स्वव्याप्यत्वाऽभाववत्त्वोभयसम्बन्धेन ।

घटितत्वञ्च यत्किञ्चिद्विशिष्टत्वम् । वै० स्वव्याप्यत्व स्वव्यापकत्वाऽभावव

त्वोभयसम्बन्धेन । व्यापकत्वञ्च स्वाधिकरणवृत्त्यत्यन्ताऽभावाऽप्रतियोगित्वम् । लक्षणद्वयेऽपि अधिकरणत्वम् वृत्तित्वम् प्रतियोगित्वञ्च विषयितासम्बन्धावच्छिन्नमेव, ज्ञानरूपाधिकरणमादाय लक्षणसमन्वयः । रामशब्दघटको रेफः । यत्र रामशब्दस्तत्र तत्र रेफ इति व्यापकत्वम् । रेफघटितो रामशब्दः । यत्र यत्र रेफस्तत्र रामशब्दो नास्तीति रेफस्य व्याप्यत्वेन घटितत्वम् । रेफाऽभाववान् घटशब्दस्तत्र रेफस्यावृत्तित्वम् । अस्यापत्यमिरित्यादौ नादन्तत्वम् । अन्तत्वञ्च यत्किञ्चिद्विशिष्टत्वम्, वैशिष्ट्यञ्च स्वघटकत्व स्वघटकवर्णप्रागभावाधिकरणक्षणाऽवृत्तित्वोभयसम्बन्धेन । एवम् आदित्वञ्च यत्किञ्चिद्विशिष्टत्वम्, वैशि० स्वघटकत्व स्वघटकवर्णध्वंसाधिकरक्षणाऽवृत्तित्वोभयसम्बन्धेन । तथा च अद्विशिष्टत्वरूपमदन्तत्वमकारे नास्तीति द्वितीयसम्बन्धस्य सत्त्वेऽपि स्वघटकत्वाऽभावात् । एवञ्चादन्तत्वप्रयुक्तेञ् न स्यादत इयं परिभाषा मन्तव्या । धुगित्यपि फलम्, "एकाचो बशो भषि"तिभष्भावायेति । अशास्त्रीयस्याऽपीति शेखरः । शास्त्रीयत्वञ्च शास्त्रसंकेतितावच्छेदकधर्मवत्त्वम् । अन्ये प्रबन्धाश्शेखरमूलतोऽवसेयाः ।

## ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।

"येन विधि"रितिप्राप्तस्तदन्तविधिरेनया निषिध्यते । तृतीयार्थः प्रयोज्यत्वम् ग्रहणवत्प्रातिपदिकप्रयोज्यं तदन्तकर्मकविधानन्न भवतीति सामान्यार्थः ।

ग्रहणवत्प्रातिपदिकत्वञ्च आनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वं यथा "गर्गादिभ्यो यञि"ति । न च "वृद्धाच्छः" "नौद्वय च" इत्यादौ वृद्धनौपदयोरानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वाऽभावेन परिभाषाऽप्रवृत्त्या तदन्तविध्यापत्तिरिति वाच्यम् ? धर्मिताऽनवच्छेदकवर्णत्वव्याप्यधर्मेण साक्षादवच्छिन्नमुख्यविशेष्यत्वाऽप्रयोजकत्वे सति प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वाऽप्रयोजकत्वे सति उगित्त्वावच्छिन्नविषयत्वाऽप्रयोजकत्वं ग्रहणवत्प्रातिपदिकत्वम् । वर्णत्वव्याप्यधर्मेण साक्षादवच्छिन्नेति निवेशाद "नुदात्तादेरञि"त्यादावनुदात्तपदे न तदन्तविधिः । उगित्त्वावच्छिन्नेतिनिवेशा "दुगितश्च" वनोरचे"त्यादौ न तदन्तविधिनिषेधः । न च "अस्माया मेधास्रजो विनि"रित्यादौ अस्पदस्यापि ग्रहणवत्प्रातिपदिकत्वेन तदन्तविधिनिषेधात् यशस्वीति रूपं न स्यादिति वाच्यम् ? "असमासे निष्कादिभ्य" इति सूत्रीयासमासग्रहणेन ग्रहणवत्प्रातिपदिकेतिपरिभाषाऽनित्यत्वेन वारणात् ।

अनित्यत्वफलञ्च "रोणी"तिसूत्रेण आजकरोण इत्यत्राण्विधानम् । "मेघर्ति-

न्येषु कृत्न" इत्यनेनाऽभयङ्कर इत्यत्र खश् सिद्ध्यति। अत्र ज्ञापकं "स पूर्वा-च्चेति"सूत्रमित्यधिकं शेखरे ?

व्यपदेशिवद्भावोऽप्रातिपदिकेन ।

प्रातिपदिकेन स्ववृत्तिप्रातिपदिकत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकपदघटितं धर्मिग्राहकमानात् यदन्तादिपदघटितं पदं तत्प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयीभूतप्रत्ययविशिष्टं कार्यं व्यपदेशिवन्न लभ्यते। वैशिष्ट्यञ्च स्वतादात्म्य स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन। प्रातिपदिकत्वव्याप्यत्वनिवेशाद् उगिद्वच्छब्दे ङीप् "उगितश्चे"त्यत्रान्तपदाघटितत्वाच्च। अन्तादिपदघटितत्वनिवेशात् रोणीशब्दे न व्यपदेशिवद्भावः। तादात्म्यनिवेशफलञ्च अग्रदन्निरित्यत्र व्यपदेशिवद्भावादत्रादेशः। द्वितीयसम्बन्धनिवेशफलञ्च पञ्चम इत्यत्र व्यपदेशिवद्भावेन संख्यादित्वन्न ? प्रत्ययोद्देश्यकत्वान्मटः। व्याप्यत्वनिवेशा "दनुदात्तादेरञि"तिअनुदात्तमात्रादञ्सिद्धिः, अनुदात्तत्वस्य प्रातिपदिकत्वव्याप्यत्वाऽभावेन निषेधाऽप्रवृत्तेः। "एकगोपूर्वादि"त्यादेरित्यवतरणे शेखरोऽनुपपन्नः। यथा दधि इत्यादाविकारस्यैकारपूर्वत्वातिदेशेन परिभाषाबलेन सवर्णदीर्घो न भवति तथैव पूर्वत्वस्य वर्णान्तरसन्निधानाकाङ्क्षत्वेनातिदेष्टुमशक्यत्वात् ।

अत एव ज्ञापकविचारे शेखरोक्तेऽपि केवलपूर्वशब्दार्थं व्यपदेशिवद्भावेन सप्त्वमिति न युक्तिदमपि तु पूर्वान्तादिनिरितिकर्त्तव्ये पृथग् योगकरणमेव ज्ञापकम्प्रबलमिति तत्त्वम् ।

यस्मिन्विधिस्तदादावल्ग्रहणे—

"येन विधिस्तदन्तस्ये"त्यपवादत्वादुत्सर्गसमानदेशा अपवादा इतिन्यायेनाऽभेदेन विशेषणमिति लभ्यते। यस्मिन्निति सप्तम्यन्तविशेषणमुच्यते सर्वनामत्वात् वर्णरूपस्मिन्विशेषणं सप्तम्यन्तं गृह्यमाणम् यत्र तत्कार्यन्तद्वर्णादौ भवतीति सप्तम्यन्तम्वर्णरूपस्मिन्विशेषणन्तदादेस्संज्ञेति सिद्धान्तः। अल्गृह्यते बोध्यतेऽनेनेत्यल्ग्रहणं कोऽर्थोऽल्बोधकम्। विधिपदेन कर्मव्युत्पत्त्या कार्यस्य ग्रहणम्। तदन्तविध्यपवादतया वार्त्तिककारेण पठितम्। भाष्ये वचनरूपेण पठिता ज्ञापकसत्त्वेऽतीव प्रमाणोपकारः।

नच "वान्तो यि प्रत्यये" इति सूत्रं ज्ञापकमन्यथा परिभाषाऽभावे तदन्तविधौ यान्ते प्रत्यय इत्यर्थाऽपत्तौ सूत्रवैयर्थ्यमापद्येत, तत्सामर्थ्यादियं ज्ञाप्यत इति

वाच्यम् ? गोशब्दाद् "गोश्च पुरीष" इति मयटि गोमयम् गोमयमत्तीति गोमयात् तमाचष्टे गोमययतीत्यादौ यान्तप्रत्ययसम्भवेन सूत्रसार्थक्यात् । "अचःपरस्मिन्निति" स्थानिवद्भावस्तु न ? अज्झलादेशत्वात् । अन्तरङ्गपरिभाषातु न ? नाजानन्तर्यइति निषेधात् । नच अपो भीत्यस्य ज्ञापकत्वम् ? वृक्षे शाखेतिवदवयवावयविभावसम्बन्धमादाय प्रत्ययावयवे भकारे पर इत्यर्थेन चारितार्थ्यात् । एवं "न्धिचे"त्यादावपि प्रत्ययावयवे घकार इत्यर्थः । नच "को ऽकत्तत्तत्तुरुपेऽची" त्यत्राजन्त इत्यर्थापत्तौ "रथवदयोश्चे"त्यस्य ज्ञापकत्वम् ? रथमाचष्टे रथयतीति रत् कद्रत इत्यादौ सार्थक्यात् । नच तावन्मात्रप्रयोजनकत्वे रद्वदोरित्यस्य कर्त्तुं शक्यत्वमिति वाच्यम् ? रमधातोऽक्विपि अनुदात्तोपदेशेति मलोपे कुशब्देन समासे तत्रानिष्टापत्तेः । व्याख्यानतो निर्णये कस्य ग्रहणमिति मूलाऽभावात् ।

वस्तुतस्तु—ज्ञापकद्वयम्वक्ष्यते—"नल्यपी"ति सूत्रं ज्ञापकमन्यथा "घुमास्थे"तिसूत्रे हलन्त इत्यर्थापत्तौ प्रदायेत्यत्र हलन्तत्वाऽभावेनेत्वाप्राप्त्या तस्य वैयर्थ्यात् । नच "घुमास्थे"तिसूत्रारम्भसामर्थ्यान्न तदन्तविधिरिति वाच्यम् ? पाधातोऽक्वनिपि पीवेत्यत्र हलन्तत्वेन सार्थक्यात् । नच प्रदायच्छत्रमित्यत्रवाक्यसंस्कारपक्षे "छे चे"तितुकि हलन्तत्वसम्भवेनेत्वप्राप्तौ निषेधार्थं "नल्यपी"तिसूत्रं । नचेत्त्वे तुको बहिरङ्गाऽसिद्धत्वम् नाजानन्तर्य्येतिनिषेधादिति वाच्यम् ? परिभाषाऽभावे "आतो लोप इटि" चेत्यस्याऽजन्त इत्यर्थापत्तौ अजन्तत्वेन प्राप्तिसत्त्वात्तुकऽपूर्वमातो लोपे ईत्वप्राप्त्यभावेन "नल्यपी"त्यस्य ज्ञाकपत्वसौष्ठवात् । किञ्च "गुणोऽपृक्ते" इति सूत्रेऽपृक्तग्रहणं ज्ञापकम्, तच्च और्णोदित्यत्र "ऊर्णोतेर्विभाषे"ति विकल्पबाधनार्थम् । परिभाषाऽभावे तु "उतो वृद्धि"रित्यतो हलीत्यनुवृत्य "ऊर्णोतेर्विभाषे"ति वृद्धिविकल्पस्य हलन्तपित्सार्वधातुके लङुत्तमैकवचने और्णवमित्यादौ चरितार्थत्वेन गुणेन और्णोदित्यत्र बाधसम्भवेन अपृक्तग्रहणवैयर्थ्यात् । ज्ञापितायाम्परिभाषायान्तु तदादिविधौ हलादावेव विकल्पविधानेनाम्विषयेऽचरितार्थत्वादुभयोरेकविषयत्वप्राप्तौ मुख्यहलादौ तु विकल्पः, व्यपदेशिवद्भावेन हलादावपृक्ते तु नित्यं गुण इति अपृक्तग्रहणं सार्थकम् इति द्वितीयम् ।

## अथ परिभाषापदकृत्यम्—

"यस्य च भावेन भावलक्षण"मिति सूत्रेण यस्मिन्निति सति सप्तमी, नाधिकरणसप्तमी । अधिकरणसप्तम्यान्तु "इको यणची"तिवत् अव्यवहितपूर्वत्वोपस्थि-

स्या "वान्तो यि प्रत्यय"इत्यादौ निर्वाहसम्भवेऽपि वक्षादे✕कृत इण स्यादित्य-र्थक "नेड्वशि कृती"त्यादौ सर्वथाऽसम्भवात् । अल्ग्रहण इत्यत्र अल्गृह्यतेऽस्मिन्नित्यधिकरणल्युटा अल उच्चारणे इति विशेषार्थेन "वान्तो यी"त्यादौ निर्वाहेऽपि "तस्मान्नुडचि" इकोऽचि व्यञ्जने माभूदित्यत्र व्यञ्जनादाविति भाष्यविरोधापत्तेः । एवञ्च अल्गृह्यते बोध्यतेऽनेनेत्यल्ग्रहणमल्बोधकम् वाहुलकात्करणे ल्युट् । अल्प्रतिपादकशब्दे सतीत्यर्थः । सप्तम्यन्तम्विशेषणम्वर्णरूपन्तदादेस्संज्ञेति तत्त्वम् । "समुद्राभ्राद्घ" इति "क्षय्येह्लो✕क्रियाया" इतिनिर्देशेन च पूर्वनिपातप्रकरणमनित्यमिति विशेषणस्याऽपि ग्रहणपदस्य परनिपातः । परिभाषायां यस्मिन्निति विशेषणाऽभावे विशेष्यविशेषणभावव्यत्ययेन सर्वेषु तदादितदन्तविध्यो✕पर्यायेण प्रवृत्तिस्स्यात । "सार्वधातुकार्द्धधातुकयोः" अल्ग्रहण इति विशेषणाऽभावे "ष्यङस्सम्प्रसारणम्पुत्रपत्योः"रित्यादौ पुत्राद्युत्तरपदयोरित्यर्थापत्तौ विशिष्टहानिरवलोक्यताम् ।

ननु ज्ञापकञ्च तदेव वरं यत्स्वांशे चरितार्थं सत्फलमन्यत्र दर्शयतीतिनियमस्सार्वत्रिक✕परिभाषाया✕किम्फलमिति प्रश्नः । ननु गव्यं नाव्यमित्यादौ वान्तादेश✕फलमिति चेन्न ? अन्वयांशे कामचारानुज्ञेतिनियमेनैवात्र द्वयमिति रीत्या ओदौतोरेव यिप्रत्ययपदार्थयोरन्वयेन स्वातन्त्र्येण यकाराव्यवहितपूर्वौ य✕प्रत्ययाव्यवहितपूर्व ओकारादिस्तस्य वान्तादेश इत्यर्थानाऽदोषात् । नच गोयानमित्यादौ प्रत्ययलक्षणेन प्रत्ययाऽव्यवहितपूर्वत्वस्य स्वतो यकाराव्यवहितपूर्वत्वेन वान्तापत्तिरिति वाच्यम् ? शाखायाम्वृक्ष इत्यप्रामाण्यज्ञानाऽनास्कन्दितव्यवहारः, वृक्षेशाखेति तु "अमि पूर्वः" इतिवदाधेयेऽप्याधारत्वारोपेण व्यवहारस्तद्वदिहापि प्रत्यये इति आधेयत्वेऽप्याधारत्वारोपेण सप्तमीम्विधाय प्रत्यये यो यकारोऽर्थात्प्रत्ययावयवो यो यकारस्तदव्यवहितपूर्वयोरोदौतोरित्यर्थेन क्वाऽप्यदोषात् । नच द्वावुष्ट्रावुष्ट्रगोयुगमित्यादौ "द्वित्वे गोयुगच"तिगोयुगच्प्रत्यये वान्तापत्तिरिति वाच्यम् ? औकारो यकारघटितप्रत्ययावटकस्तत्साहचर्यादोकारोऽपि यकारघटितप्रत्ययाऽघटक इत्यदोषात् । "कोःकदि"त्यत्रापि उत्तरपदावयवेऽचीत्यर्थान्न दोषः । "गोत्रेऽलुगची"त्यादौ तदादिविध्यभावे प्राग्दीव्यतीयप्रत्ययस्थाचो विषये इत्यर्थापत्तौ गर्गीरूप्यमित्यादौ हलादावप्यच्वति प्रत्यये विवक्षितेऽलुगापत्तिस्तु न भवति ? प्राग्दीव्यतीयप्रत्ययघटकाजव्यवहितपूर्वत्वविवक्षायामित्यर्थकरणेन गर्गरूप्यमि-

इत्यादौ दोषाऽभावात् "पाघ्राध्मेत्यत्र इत्संज्ञकशकारपरत्वसम्भावनायामित्यर्थेन पिबतीत्यादौ न दोषः। यदीत्संज्ञालोपौ स्यातान्तर्हि इत्संज्ञकशकारपरत्वं स्यादिति सम्भावना। अतृणेडित्यादावपि न दोषः? प्रतिपदोक्तत्वादिमागमस्य "तृणह इमि"तिविहितस्यैव पूर्वम्प्रवृत्तेः।

शुक्लेन ग्रन्थकृता प्रधानफलन्निरीक्षितन्तथाहि "औङ आप"इतिसूत्रस्थभाष्यम् "औङित्यौकारविभक्तेस्संज्ञा "याडाप" इतियाडागमस्तु भवति नहि, उच्चारणार्थानामपि वर्णानामित्संज्ञालोपाभ्यामेव निवृत्तिः ङकारस्योच्चारणार्थत्वेऽङि याडागमःकुतो नेति प्रश्ने ङइत् यस्य स ङिदिति न समासःकिन्तु ङकार एव इत् ङित ङितीति वर्णमात्रनिर्देशात् वर्णग्रहणे च "यस्मिन्विधिरिति" तदादिर्विधिः। अङ्गाक्षिप्तप्रत्ययश्च विशेष्यः "नेड्वशि कृती"तिवत् तथा च"याडाप" इत्यस्य आपःपरस्य ङकारादिप्रत्ययस्य याडागम इत्यर्थ इतिप्रथमाद्विवचने च न याडागम इति मुख्यम्फलम्। अत एव भाष्ये

औकारोऽयं शीविधौ ङिद् गृहीतो ङिच्चास्माकन्नास्ति कोऽयम्प्रकारः।
सामान्यार्थस्तस्य चाऽऽसञ्जनेऽस्मिन् ङित्कार्यन्ते स्याम्प्रसक्तं स दोषः॥
ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ।
वर्णश्चायन्तेन ङित्त्वे न दोषो निर्देशोऽयम्पूर्वसूत्रेण वा स्यात्॥

इति। नच "यस्मिन्विधि" रितिपरिभाषास्वीकारे "एकहलादौ पूरयितव्येऽन्यतरस्यामि"त्यत्र "ह्रस्वात्तादौ तद्धिते" इत्यत्र चादिग्रहणव्यर्थं स्यात्परिभाषयादिलाभादिति वाच्यम्? उभयत्रादिग्रहणसामर्थ्यादियम्परिभाषाऽनित्या आदिग्रहणं स्वष्टार्थमिति वा फलसत्त्वे भाष्योक्ते "औङ आप"इतिसूत्रीये परिभाषाखण्डनं केषाञ्चिन्निष्प्रयोजनमित्यलम् अधिकं शेखरमूले द्रष्टव्यम्।

---

उत्तरपदाधिकारे प्रत्ययग्रहण इति–ज्ञापकमत्र शेखरे"हृदयस्य हृल्लेखयदण् लासेषु"इत्यत्र लेखग्रहणमित्यादि बहुशःप्रपञ्चितम्। नचास्याः परिभाषायाः स्वीकारे "रात्रेःकृति विभाषा"इत्यत्र कृदन्ते इत्यर्थो न स्यात, सूत्रारम्भस्तु न व्यर्थः? अशब्दादाचारक्विबन्तात् ण्वुलि रात्रिमक इत्यादौ कृद्रूपस्य सत्त्वेन चारितार्थ्यादिति वाच्यम्? ज्ञापकस्य विशेषापेक्षत्वेन श्रावणप्रत्ययविषयतावच्छेदकधर्मेण साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकपद एव एतत् प्रवृत्तेस्स्वीकारेण कृत्पदस्य तत्त्वाभावेनादोषादिति बोध्यम्।

सर्वो द्वन्द्वो विभाषैकवद्भवति—

ननु इतरेतरयोगे उद्भूतावयवभेदविवक्षा, समाहारे च तिरोहितावयवभेदविवक्षा उभयोर्विवक्षयैव रूपद्वयसिद्धौ परिभाषेयन्निरर्थिकेति चेन्न ? लोके शब्दो द्विविधो भवति उद्भूतावयवभेदकसमुदायबोधकः, तिरोहितावयवभेदकसमुदायबोधकः यथा वृक्षा इति बहुवचनम्, द्वितीयोदाहरणम् वनशब्दः, एकस्मिन् घटपटादिरूपद्वन्द्वीभूतशब्दे उभयविवक्षाया अभावेनैवकवचनान्तत्वद्विवचनान्तत्वे अनुपपन्ने अतऽपरिभाषावश्यकत्वम् ।

सर्वे विधयश्छन्दसि विकल्प्यन्ते—

"व्यत्ययो बहुलम्" इति सूत्रे बहुलमिति योगविभागेन "षष्ठी युक्तश्छन्दसि वे"तिसूत्रे वेतियोगविभागेन चेयं सिद्धयति । फलञ्च प्रतीपमन्य ऊर्मिर्युध्यतीत्यादि सिद्धम् ।

न चा"नुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति" परिभाषया परस्मैपदसिद्धौ न प्रयोजनमेतस्या इति वाच्यम् ? एतत्परिभाषाफलप्रदानसामर्थ्याद् भाष्योक्तादनुदात्तेत्त्वलक्षणमिति परिभाषाया अकरणत्वबोधनात् । भाष्यानुक्तत्वेन तदभावस्य मूले स्पष्टयिष्यमाणत्वाच्च ।

प्रकृतिवदनुकरणम्भवति ।

अनुकरणत्वञ्च स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वम् । प्रकृतपदेनानुकार्यग्रहणम् । प्रकृतिवृत्तिधर्मवदनुकरणम् । अनुकार्यनिष्ठो धर्मोऽनुकरणेऽपि तिष्ठति । फलितार्थ एवम् अनुकार्यधर्मारोपः क्वचिद् भवति क्वचिन्नेति । अनित्यत्वफलम् "क्षियो दीर्घादि"ति । न च दीर्घविशिष्टस्यानुकरणे तस्मादेव दीर्घान्तत्वप्राप्तिर्दीर्घग्रहणं सूत्रे व्यर्थं स्यात्, ह्रस्वान्तानुकरणे "शेषो घ्यसखी"तिघिसंज्ञया "घेर्ङिती"तिगुणापत्तिरिति वाच्यम् ? दीर्घान्तस्यैवानुकरणमित्यत्रैव दीर्घग्रहणतात्पर्याभिधानात् ।

---

सर्वो द्वन्द्व इति-परिभाषायामस्यां ज्ञापकं "तिष्यपुनर्वस्वोः" इति सूत्रवर्त्तिबहुवचनग्रहणम्. तथाहि उद्भूतावयवभेदविवक्षापक्षे बहुत्वस्य स्वत एव प्रतीतिनियमात् निष्प्रयोजनत्वात्, तिरोहितावयवभेदविवक्षापक्षे च सर्वत्र एकत्वस्यैव भाननियमेन तदर्थमपि तदनुपयोगादिति भावः ।

एकदेशिविकृतमनन्यवद्भवति ।

एतत्परिभाषाफलञ्च रामाविति । वृद्ध्या सुपस्तदादेशापहारेण सुबन्ततदादित्वाऽभावा"त्सुप्तिङन्तमि"त्यस्याऽप्राप्तिरिति । तन्न ? यथोद्देशपक्षे पूर्वं जातया पदसंज्ञया राम औ इत्यस्य स्थाने रामावित्यादेश इति आनुमानिकस्थान्यादेशकल्पनया स्थानिवत्सूत्रसहायतया पदत्वसौष्ठवात् । नच चकारेत्यत्र द्वित्वे उरदत्वे करकृ इत्यत्रादेशविशिष्टेऽभ्यासत्वाऽभावेन "हलादिश्शेष" इति न स्यात्, अभ्यासस्यानर्थकत्वेनार्थवत्त्वगुणविशिष्टानुमानिकस्थान्यादेशभावप्रवर्तकस्थानिवत्सूत्रस्याप्रवृत्तिरस्मिन्न्याये तु कृ इत्यत्र वर्तमानमभ्यासत्वं करित्यत्रानीय लक्ष्यसिद्धिरिति वाच्यम् ? द्वित्वशास्त्रविशिष्टस्याभ्याससंज्ञेत्यर्थः । वैशिष्ट्यञ्च स्वीयविधेयताश्रयावधिकपूर्वत्व स्वीयोद्देश्यताश्रयसमभिव्याहृतवर्णाऽघटितत्वोभयसम्बन्धेन । कर कृ इत्यत्र विधेयताश्रयोत्तरखण्डपूर्वत्वमस्त्येव । उद्देश्यताश्रयः कृ इति तत्समभिव्याहृतो द्वित्वपूर्वकालिको वर्ण उपसर्गघटकस्तदघटितत्वञ्च करित्यस्येति एकदेशविकृतन्यायमन्तरेणैवादोषात् ।

न च प्रराभ्यासित्यत्रैकदेशविकृतन्यायेन रैशब्दत्वात् 'रायो हली"त्यात्त्वम्फलमिति वाच्यम् ? रै इत्यस्य री इत्यादेश इत्यानुमानिकस्थानिवद्भावेन सिद्धेः । नच प्रहिणोतीत्यत्र गुणेऽप्येकदेशविकृतन्यायेन हिनुशब्दत्वा"द्धिनुमीने"तिणत्वम्फलमिति वाच्यम् ? "अचः परस्मिन्नि"तिस्थानिवद्भावेन हिनुशब्दत्वसिद्धेः । नच गुडोदकमित्यत्रानेन न्यायेनोदकशब्दत्वमानाय "उदके केवल" इतिस्वरसिद्धिः फलमिति वाच्यम् ? पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेति परिभाषयाऽदोषात् । स्थानिवत्सूत्रभाष्येऽप्यानुमानिकस्थान्यादेशभावेन सिद्धया एकदेशविकृतन्यायखण्डनन्द्रष्टव्यम् । पचत्त्वित्यत्र पदत्वसिद्धिरपि न फलम् ? स्थानिवद्भावेन गतार्थत्वात् ।

अथात्रत्यशेखरमूलसंशोधनप्रकाराः ।

अनन्यवदित्यस्यान्यवद्धेत्यर्थ इति न युक्तम् । अनन्यपदेन

---

एकदेशविकृतमिति-केचित्तु स्वविशिष्टं स्ववद्भवतीत्यर्थः । वै०स्वघटकोद्देश्यकविकारघटितत्त्व स्वघटकोद्देश्यकविकारेतरयावद्घटितत्व स्वविशिष्टाघटितत्वतत्त्रितयसम्बन्धेन । अत्र वै०स्वाघटकत्व स्वघटकमात्रोद्देश्यकविकारेतरत्वोभयसम्बन्धेनेति वदन्ति ।

द्वौ नञौ च समाख्यातौ पर्य्युदासप्रसज्यकौ ।
पर्युदासस्सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥

इतिन्यायेन स एव पदार्थोऽवगम्यते जातविकारस्तदन्योऽपि तद्वत्कार्यं लभत इत्यर्थात् येन नाऽव्यवधानम् अनन्यगतिरित्यादिषु तादृशार्थस्यैव प्रतीतेः, अन्यथान्नेति नञ्‌क्रियान्वयेऽसमर्थसमासादिकल्पने गौरवञ्च ।

किञ्च तत्रान्यसादृश्यनिषेधे सुतरामन्यत्वनिषेध इति तु कथमपि न युक्तम् ? अन्यसादृश्यनिषेधेऽपि अन्यत्वनिषेधे प्रमाणाऽभावात् । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बोधो न स्यादिति त्त्वत्यन्तमयुक्तम् ।

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानामत्यन्तम्प्रविवेको न कश्चन ॥

इति प्रमाणेन पदस्फोटवादिवैयाकरणानां शक्ततावच्छेदकानुपूर्वीज्ञानाऽभावो महान्गुणः । नैयायिकानान्तु स्थानिनाम्ना वक्तव्यमिति न दोषः । रामिति मान्तस्य यस्माद्विहित‌प्रत्ययस्तत्त्वमार्थसमाजग्रस्तमिति मूलं शेखरस्थमशुद्धम् ।

प्रातिपदिकसंज्ञा राम इत्यस्य औप्रत्ययश्च अदन्तरामशब्दादेव । नहि रामिति हलन्तो रामशब्दः । अत एव "येन विधि"रितिसूत्रे "तदेकदेशविज्ञानाद्वा सिद्धमि"ति वार्त्तिकव्याख्यावसरे सर्वके भिनत्तीत्यादौ अनेका नदी गङ्गां यमुनाञ्च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते, देवतास्थो गर्भो देवताग्रहणेन गृह्यते इति लौकिकन्यायमुपन्यस्य विषम उपन्यासः, इत्युपक्रम्य सर्वनामाव्ययधातुसंज्ञा अकपरिमाणस्य कृताः ता‌केनाधिकस्य स्युरित्युक्तम् । शेखरप्रकारस्वीकारे एषु एकदेशविकृतन्यायेनैव सिद्धौ उक्तभाष्यमसङ्गतं स्यात् । श्वाकर्णे पुच्छे वा छिन्ने श्वैव नाश्वो न गर्दभ इतिलोकन्यायस्य व्याकरणेऽनाश्रयणं स्थानिवत्सूत्रेण सिद्धेरिति तदागमपरिभाषायान्निरूपितम् । "प्राग्दीव्यतोऽणि"तिसूत्रभाष्ये उक्तपरिभाषां ज्ञापयित्वा किमेतस्य ज्ञापने प्रयोजनमिति परिभाषायाञ्च एकदेशविकृतस्योपसंख्यानं चोदितम् । तन्न वक्तव्यम्भवति ? स्थानिवद्भावेन सिद्धेः । अकपरिमाणस्थलेऽयन्न्यायो न प्रवर्त्तते इत्यप्यशुद्धतरम् । "सुप्तिङन्तम्पद"मित्यत्र यस्माच्छब्दात्प्रत्ययविधिस्तस्य शब्दस्य स एव शब्दः स्वरूपमिति वचनात्संज्ञा सा च अकपरिमाणस्य कृतेति कथङ्कारं रामशब्दे प्रवर्त्तेत । यत्रार्द्धं तदधिकं वा विकृतं तदर्थं स्थानिवद्भावस्यावश्यकत्वाच्च । अधीयादित्यत्र "एतेर्लिङी"तिह्रस्वापत्तेश्च ।

तस्मादपि नायन्न्याय इति खण्डनतत्त्वम् ।

एकदेशविकृतन्यायस्वीकारपक्षे तदर्थः क इति प्रश्नः ।

यदेकदेशविकृतं यद्भवति तत्ततोऽन्यन्न भवति । अर्द्धविकारेऽर्द्धाधिक्यविकारे परिच्छिन्नपरिमाणे संज्ञायाञ्चैकदेशविकृतन्यायो न प्रवर्त्तत इति शाब्दिकसिद्धान्तः । स्वविशिष्टं स्वतो भिन्नन्न भवतीति सिद्धान्तः । वैशि० स्वघटकमात्रप्रतियोगिकविकारवत्त्व स्वविशिष्टाघटितत्त्वमित्त्युभयसम्बन्धेन । सम्बन्धघटकवै० स्वाघटकत्त्व स्वघटकमात्रोद्देश्यकविकारेतरत्त्वोभयसम्बन्धेन । निर्जरेतिसमुदाये जराशब्दवैशिष्ट्यनिवारणाय द्वितीयसम्बन्धनिवेशस्तत्र स्वघटकमात्रोद्देश्यकविकारो ह्रस्वत्त्वरूपस्तद्घटितत्त्वन्निर्जरेत्त्यस्य अघटितत्त्वं केवलजरेत्त्यस्येति समुदायस्य न जरसादेशः । एवमन्यत्रापि समन्वयः ।

अक्तपरिमाणत्वञ्च संख्यात्त्वपरिमाणत्त्वान्यतरव्याप्ययत्किञ्चिज्जातिव्यापकाऽभावप्रतियोगित्त्वम् । अत्र व्यापकत्त्वलक्षणघटकाधिकरणता च स्वाश्रयाश्रयत्त्वसम्बन्धावच्छिन्ना ज्ञेया । समन्वयश्च संख्यात्त्वव्याप्या जातिः पञ्चत्त्ववत्त्वम् । तदधिकरणं स्वाश्रयाश्रयत्त्वसम्बन्धेन पञ्चाक्षरावयवकसमुदायस्तन्निष्ठाऽभावो घटत्वाद्यभावो घटत्त्वत्त्वन्तदीयप्रतियोगितावच्छेदकम् अनवच्छेदकं जरात्त्वाभावत्त्वं तद्वत्त्वरूपव्यापकत्त्वं जरात्त्वाऽभावस्य, जरात्त्वस्य तत्प्रतियोगित्त्वमिति । एवन्तिङ्त्त्वोपसर्गत्त्वप्रत्ययत्त्वाद्यभावाः पञ्चत्त्ववत्त्वादिजातिव्यापका इति तेषामक्तपरिमाणत्त्वसिद्धिरिति ।

प्रथमं शास्त्रत्त्वसम्पादकम्प्रकरणम्वृत् ।

## पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरम्बलीयः ।

## अथ बाधबीजकथनाख्यं द्वितीयम्प्रकृतम् ।

बलवत्त्वप्रयोजकपरिभाषाप्रकरणमित्यर्थः । पूर्वात्परम्बलवत् विप्रतिषेधशास्त्रबलात् । अर्थात् परत्त्वेनाभिमतशास्त्रं पूर्वत्त्वेनाभिमतशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वप्रवृत्तियोग्यलक्ष्यातिरिक्तत्त्वेन च सङ्कोचयति । परम्बाधकमिति सिद्धान्तः ।

## पुनः प्रसङ्गविज्ञानात्सिद्धम्—

अत एव भिन्धकीत्त्यत्र परत्त्वाद् "हुझल्भ्यो हेर्धिरि" तिधित्त्वे कृते पुनः प्रसङ्गविज्ञानादकच् । यजधातोर्लिटि अतुसि परत्त्वा "द्वचिस्वपी"ति सम्प्रसारणे कु·

न ऽ प्रसङ्गविज्ञानाद्वृद्धित्वे ईजतुरितिसिद्धयति ।

सकृद्गतौ विप्रतिषेधे यद्बाधितन्तद्बाधितमेव—

अत एव तिसृणामित्यत्र परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रिशब्दत्वान्न त्रयादेश इति फलम् ।

शेखरे बाधकाऽभावेन तृजादिवत्पर्य्यायत्वमिति युक्तिविरुद्धम् । असम्भवस्यैव बाधकपदार्थत्वेन बाधकाऽभावेनेतिहेतोरसङ्गत्यापत्तेः । अन्यत्र चरितार्थयोश्शास्त्रयोरप्रवृत्तिरेव युक्ता नतु पर्य्यायत्वन्तृजादिवत् । तृचो नित्यम्प्रवृत्तिण्वुलश्च नित्यम्प्रवृत्तिः । तत्र कदाचित्तृच् कदाचिण्ण्वुलिति वैकल्पिकापत्तिरूपदोषवारणायाऽगत्या पर्यायत्वमभिमतम् ।

पूर्वपरशास्त्रयोस्तु पर्यायत्वम्विनाऽपि तत्तद्विषये प्रवृत्तिस्वातन्त्र्यात्प्रामाण्य सिद्धौ तृजादिवत्पर्यायदृष्टान्तप्रदर्शनमविचारितरमणीयमेव । "तुल्यबलयोरेकः प्रेष्यो भवती"तिभाष्यन्तु जातिपक्षाश्रयेण प्रवृत्तम् इति शुद्धधिया विचार्य्यम् । व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोतीत्यत्र विशिष्टप्रमाणानि भाष्योक्तान्येव । एवञ्च भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्षेऽपि सम्भव इत्यत्र प्रमाणधारावहनात् जातिपक्ष एव तृजादिदृष्टान्तसङ्गतिरिति प्रकारो सुधैव ।

सर्वजात्याश्रयव्यक्तिसंग्रहाय न ब्राह्मणं हन्यादित्यत्र एकशेषसूत्रे जातिपक्षाश्रयणम्भाष्ये दृश्यत इति तत्सर्वमयुक्तमेव । विरोधाऽभावाद्विनिगमनाविरहाच्च आश्रीयमाणे जातिपक्षेऽपि सर्वव्यक्तिलाभस्याऽविरुद्धत्वात् ।

तथा च परिभाषाद्वयं "सकृद्गताविति' पुन ऽ प्रसङ्गविज्ञानादि'ति च जातिव्यक्तिपक्षाश्रयणजन्यमेव । तथाहि, व्यक्तिपक्षाश्रयणेन सकृद्गतावित्यस्य सिद्धिः, जातिपक्षाश्रयणेन पुन ऽ प्रसङ्गविज्ञानादित्यस्य सिद्धिः । व्यक्तिपदार्थपक्षे यावल्लक्ष्यन्तावल्लक्षणमिति वृक्षेभ्य इत्यत्र वृक्ष भ्यस् इतिदशायामेतद्व्यक्तिगोचरं "सुपि चे"त्येकं दीर्घविधायकम् , "बहुवचने झल्ये"दित्येकमेत्वविधायकम् । व्यक्तिपक्षे ते च शास्त्रे कुत्रचिदपि न चरितार्थीभूते, तथा दीर्घैत्त्वयो ऽ पर्यायप्राप्तौ विप्रतिषेधसूत्रन्नियमार्थम् विप्रतिषेधे परमेव शास्त्रम्प्रवर्त्तते नतु पूर्वम् इति नियमाकारः । पूर्वशास्त्रन्तद्व्यक्तिविषयन्नोपपद्यते, विप्रतिषेधशास्त्रबलात् । तथा च तद्व्यक्तिविषयकपूर्वशास्त्राऽभावात्सकृद्गतौ विप्रतिषेधे यद्बाधितन्तद्बाधितमेवेति सिद्धम् ।

यदितु जातिपक्षस्तदा शास्त्रमेकमेव व्यक्तिम्बिना जाते ऽ कार्य्यन्न भवतीति

जात्या व्यक्त्याक्षेपः। यद्व्यक्त्याक्षेपेण लक्ष्ये बाधा नोत्पद्यते स्वाक्षिप्यते नतु यत्र बाधकमस्ति। एवञ्च वृक्ष इत्यत्रैव व्यक्ते परस्परविरोधाऽभावान्नियमाऽसम्भवात्परशास्त्रविधानार्थं विधित्वेन विधायकत्वेन वा विप्रतिषेधशास्त्रं सम्पद्यते। तस्मिन्कृते यदि विरोधो नास्ति तर्हि पूर्वशास्त्रेणाऽपि तद्व्यक्त्याक्षेपो युक्ततर एव। तथाच पुनः प्रसङ्गविज्ञानादिति सिद्धम्। इदमेव कैयटादीनामभिमानम। अस्मादू भिन्नः प्रकारो न युक्तित इति विचार्य्यताम्।

## विकरणेभ्यो नियमो बलीयान्।

अत एव पचते इत्यादौ परत्वाच्छपम्बाधित्वा "ऽनुदात्त" इत्यात्मनेपदसिद्धिरधिकं शेखरमूले।

## परान्नित्यम्बलवत्।

स्वविशिष्टं शास्त्रं स्वापेक्षया बलवत् स्वविशिष्टत्वात्। उभयत्र वैशिष्ट्यन्तु स्वप्रवृत्तिप्राक्कालिकप्राप्तिकत्त्व स्वप्रवृत्युत्तरकालिकप्राप्तिकत्त्व स्वनिष्ठांतरङ्गत्त्वाङ्गनिरूपकत्त्व स्वनिष्ठापवादत्त्वानिरूपकत्त्वैतच्चतुष्टयसम्बन्धेन। तथाच परस्याऽस्य नेनैव बलवत्तेति परत्वादित्युक्तिरयुक्तेति।

## असिद्धम्बहिरङ्गमन्तरङ्गे।

शास्त्रं स्वविशिष्टं स्वापेक्षया बलवत्। वैशिष्ट्यञ्च स्वनिष्ठापवादत्त्वानिरूपकत्त्वस्वनिरूपितान्तरङ्गत्त्वोभयसम्बन्धेन। अन्तरङ्गबहिरङ्गयोस्सनिरूपकत्त्वाद् यन्निरूपितान्तरङ्गत्त्वम्विवक्षितन्तदीयनिमित्तसमुदायान्तर्भूतनिमित्तकत्त्वमन्तरङ्गत्वम्। एवं यन्निरूपितम्बहिरङ्गत्त्वं विवक्षितन्तदीयनिमित्तसमुदायाद्बहिर्भूतनिमित्तकत्त्वम्। अन्तरङ्गलक्षणे बहिरङ्गस्य बहिरङ्गेऽन्तरङ्गस्य न प्रवेशस्सापेक्षकत्वेन निरूपकत्वमतोऽन्योऽन्याश्रयदोषाऽभावः। तथाचेत्थम्फलितार्थः स्वविशिष्टं शास्त्रं स्वापेक्षया बहिरङ्गम्। वैशिष्ट्यञ्च स्वघटकसप्तम्यन्तपदप्रयोज्यविषयताश्रयघटितसमुदायनिमित्तकत्वसम्बन्धेन। तथा स्वविशिष्टं शास्त्रं स्वापेक्षयाऽन्तरङ्गम्। वैशिष्ट्यञ्च स्वीयनिमित्तसमुदायघटकनिष्ठविषयताप्रयोजकसप्तम्यन्तपदघटितत्वसम्बन्धेन। स्वपदेन शास्त्रं गृह्यते "पुगन्तलघूपधस्ये"तिशास्त्रापेक्षया "वाह ऊठि"त्यस्य बहिरङ्गत्वम्। स्वघटकं सप्तम्यन्तपदमार्द्धधातुकपदम् तत्प्रयोज्यविषयताश्रयो ण्विप्रत्ययस्तद्घटितसमुदायो विश्ववाहरूपमङ्गन्तन्निमित्तकत्वञ्च ऊठ्विधायकस्येति गुणापेक्षया बहिरङ्गत्वेनासिद्धत्वान्न गुणवृद्धिभ्यां सिद्धिरिति ऊठ्ग्रहणञ्चरितार्थम्। एवं स्वं "वाह

ऊङि''तिशास्त्रीयसमुदायः विश्ववाहरूपमङ्गमेव तद्धटको ण्विप्रत्ययः शस्विभक्तेः पूर्वसमुदायस्याङ्गत्वात् । तन्निष्ठविषयताप्रयोजकम्पदम् सप्तम्यन्तमार्द्धधातुकपदन्तद्वटितत्वं ''पुगन्तलघूपधस्ये''त्यस्येति तस्यान्तरङ्गत्वम् । तथाच पूर्वम्पूर्वमन्तरङ्गम् परम्परम्बहिरङ्गम्, अल्पापेक्षमन्तरङ्गम् बह्वपेक्षकत्वम्बहिरङ्गत्वम् । पूर्वोत्तरपदघटकवर्णनिमित्तकत्वम्बहिरङ्गत्वम् । केवलपूर्वपदघटकवर्णनिमित्तकत्वमन्तरङ्गत्वम् । प्रकृतिप्रत्ययोभयसापेक्षकत्वम्बहिरङ्गत्वम्, प्रकृतिमात्रापेक्षकत्वमन्तरङ्गत्वम । अधिकनिमित्तकत्वम्बहिरङ्गत्वम्, अधिकसंज्ञानिमित्तकत्वम्बहिरङ्गत्वम्, अर्थनिमित्तकत्वम्बहिरङ्गत्वमित्याद्यनेकलक्षणानि ।

अत्र विलक्षणशाब्दिकाः ।

बहिरङ्गशास्त्रीयनिमित्तान्तर्भूतनिमित्तकत्वमन्तरङ्गत्वमित्येवम्विधे लक्षणे पचावेदमित्यादौ गुणे एकादेशस्य पदद्वयापेक्षत्वेन बहिरङ्गत्वा''देत ऐ''इत्यैत्वन्न भवति, सिद्धान्ते ''एत ऐ''इत्यस्य बहिरङ्गशास्त्राद्गुण इति शास्त्रनिमित्तअकारइकाराऽनन्तभूत एकारनिमित्तकत्वेन अन्तरङ्गत्वाऽभावादेत ऐ इत्यस्य पचावेदमित्यादौ वारं कथङ्कारं स्यादित्यापत्तिः । अत्र शुक्लाः अल्पापेक्षकत्वमन्तरङ्गत्वमित्याश्रित्य गुणस्य वर्णद्वयनिमित्तकत्वेन बहिरङ्गत्वम्, ''एत ऐ''इत्यस्य एकारनिमित्तकत्वेनान्तरङ्गत्वमित्यभिप्रायोऽत एव''स्योन''इति भाष्यं ''येन विधि''रितिसूत्रस्थं सङ्गच्छते । किञ्च विश्वौह इत्यत्र सम्प्रसारणस्य बहिरङ्गत्वम् ''पुगन्ते''तिगुणस्यान्तरङ्गत्वम् । गुणस्य निमित्तं ण्विप्रत्ययः सम्प्रसारणस्य निमित्तं शस्विभक्तिरेवञ्च सम्प्रसारणनिमित्तशस्घटितत्वं यद्यपि गुणस्य परन्तु गुणनिमित्तण्विप्रत्ययघटितत्वञ्च सम्प्रसारणविधायकस्येति कथम्बहिरङ्गत्वम् । ननु यन्निमित्तोपस्थित्युत्तरोपस्थितिकनिमित्तकं यन्न भवति तदेव तदपेक्षयाऽन्तरङ्गम् । गुणनिमित्तीभूतण्विउपस्थित्युत्तरोपस्थितिकशस्निमित्तकत्वात्सम्प्रसारणस्य बहिरङ्गत्वमिति चेन्न ? ऊनशब्दमाश्रित्य यण्, न शब्दमाश्रित्य गुण इतिभाष्यविरोधात धर्मिग्राहकमानविरोधाच्च ।

---

अत एव तस्य दोषलसंयोगादिलोपलत्वणत्वेषु निष्ठानत्वमवृद्धेः नृमतो व प्रतिषेधः विसर्जनीयोऽनुत्तरपदे चक्ष्यत्र नार्मतम् कार्त्तिः नार्कुटः नार्पत्य इत्यादिसिद्धये वार्त्तिकानि न कर्त्तव्यानि भवन्ति । त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्त्या उक्तकार्याणामसिद्धत्वेन रूपसिद्धः । यणः प्रतिषेधो वाच्य इत्यपि न कर्त्तव्यम्भवति तथा च त्रिपाद्यां प्रवृत्तिस्सप्रमाणेति ।

यत्तु नलोपस्य पट्संज्ञायामसिद्धत्वात्पञ्चेत्यत्र "न षडि"ति निषेध इति संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् इतिग्रन्थो नोपपद्यते। तथाहि नलोपस्सुब्विति सूत्रे संज्ञापदेन विसंज्ञाया एव ग्रहणम् दण्डिद्दत्तौ दत्तदण्डिनाविति भाष्यात्। तत्र संज्ञाग्रहणसामर्थ्याद् यस्य पूर्वपदत्त्वे विसत्वं भावि तत्र पूर्वनिपात इत्यर्थः। वृत्तिहौ ग्रामणिराजानाविति फलम्। "न लोपस्सुप्स्वरे"तिसूत्रेण नलोपस्याऽसिद्धत्वचान्त्वन्तरङ्गपरिभाषया यद्यपि नलोपस्य षट्संज्ञापेक्षया बहिरङ्गत्वम्। एवञ्च तेनैव सिद्धौ बह्वपेक्षम्बहिरङ्गमित्यस्याऽनित्यत्वार्थं प्रकृतसूत्रीयसंज्ञाग्रहणम्। अत एव ह्रस्वत्वन्तुग्विधेः ग्रामणिकुलम् नलोपः वृत्रहभिः इति सन्निपातपरिभाषाप्रयोजनद्वयं "कृन्मेजन्त" इति सूत्रेऽन्यथासिद्धमिति वर्णितम्। अर्थनिमित्तकस्य न बहिरङ्गत्वम् "त्र्यादेशे स्त्र्यन्तस्य प्रतिषेध" इति अन्नत्यो ग्रन्थो न सङ्गच्छते। तथाहि ऋषिवाचकात्रिशब्दघटकत्रिशब्दस्य त्रयादेशवारणाय "त्रेस्त्रय" इत्यत्र अर्थवद्ग्रहणपरिभाषोपतिष्ठते। अर्थवतत्रिशब्दस्य त्रयादेश इत्यर्थस्तथाच अर्थनिमित्तकत्वेन त्रयादेशस्याऽपि बहिरङ्गत्वन्न केवलतिस्रादेशस्यैवेति। "त्रयादेशे स्त्र्यन्तस्य प्रतिषेध"इति वार्तिकस्य न प्रयोजनमन्तरङ्गपरिभाषायास्तुग्ग्रहणेन अनित्यत्वबोधनात्तस्या अप्रवृत्त्या त्रयादेशवारणाय "त्रयादेशे स्त्र्यन्तस्ये"तिवार्तिकं सङ्गतिमित्येव तात्पर्य्यम् नतु शेखरोक्तम्।

इयम्परिभाषा कार्यकालपक्षेऽपि त्रिपाद्यान्न प्रवर्त्तत इति ग्रन्थस्सर्वथाऽनुपपन्नस्तथाहि, दध्यत्र मध्वत्रेत्यादौ संयोगान्तलोपवारणाय त्रिपादीस्थेऽन्तरङ्गे इयम्परिभाषा भाष्यवार्त्तिककाराभ्यां सञ्चालिता। किञ्च "खरवसानयोर्विसर्जनीय" इतिसूत्रे वार्त्तिककृता विस्पष्टम्प्रदर्शितत्वाच्च। अयुक्तोऽयम्परिहारो "नवा बहिरङ्गलक्षणत्वादि"ति विसर्जनीयसूत्रभाष्यन्न ह्यसङ्गतमग्रे चोद्यान्तरमेतद् भाष्यमिति कैयटेन वर्णितत्वात्।

आनुमानिक्या बाध एवोचित इति ग्रन्थोऽप्ययुक्ततरः "कर्णोष्वनव्ययस्ये"त्यादिनिर्देशादानुमानिकया परिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधो न्याय्य एव। तथाच कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्त्तत एव। किञ्च "तस्मादित्युत्तरस्य" "स्वौजसमौट् अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्ये"ति सूत्रनिर्देश एव कार्यकालपक्षे पक्षान्तरे च त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिं ज्ञापयति। यावता विनाऽनुपपत्तिरितिन्यायेनान्तरङ्गपरिभाषाञ्च ज्ञापयतीति शेखरप्रकरा-

ऽकथमिति विचारयन्तु धीधनाः ।

गुरवस्तु—

"झलो झली"तिझल्ग्रहणापकर्षणेन "यणऽप्रतिषेध" इत्यस्य स्वमतेऽकर्त्तव्यत्वम् । चक्रय्कैदित्यत्र पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपवहिरङ्गत्वाऽभावात्संयोगादिलोपनिवृत्तये तक्षधातोर्ण्यन्तात्किपि णिलोपे पदत्वे संयोगान्तलोपे तगित्यत्र संयोगादिलोपनिवृत्तये ग्लायत इत्यत्र "पूर्वत्रासिद्धीये न स्थानिवदि"त्यस्याऽप्रवृत्तये प्राहिणोदित्यत्र "हिनुमीने"तिणत्वप्रवृत्तये "तस्य दोषस्संयोगादिलोपलत्वणत्वेष्वि"त्यस्य कर्त्तव्यत्वम् गुणस्यैवान्तरङ्गत्वात । ऋधातोऽक्तस्तदन्तादाचारक्विवन्ताल्लुङि आर्त्तदित्यत्र निष्ठानत्वनिवृत्तये "निष्ठानत्वमवृद्धे"रित्यावश्यकम् । ऋशब्दादाचारक्विवन्ताल्लुङि आर्मतदित्यत्र वत्वाऽभावाय "नृमतो व प्रतिषेध" इत्यस्यावश्यकत्वम् वृद्धेरेवान्तरङ्गत्वात । ऋशब्दात्कल्पप्रत्यये तदन्तादाचारक्विवन्ताल्लुङि आर्कल्पदित्यत्र वृद्धेरवहिरङ्गत्वेन विसर्गाऽभावार्थं "विसर्जनीयोऽनुत्तरपदे" इत्यस्याऽप्यावश्यकत्वमेवञ्च त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्त्तत इत्यत्र पूर्वोक्तयुक्तिरेव प्रमाणमित्यास्ताम् ।

अपरनिमित्तकत्वमन्तरङ्गत्वमिति—

अन्तरङ्गत्वन्तु निरुक्तरीत्यानेकविधम्परन्तु वहिरङ्गत्वन्तु अन्तरङ्गत्वेन विवक्षितं यच्छास्त्रन्तन्निरूपितान्तरङ्गत्वप्रयोजकधर्माऽभाववत्वम् । अपरनिमित्तकत्वरूपे प्रमाणन्तु "विकरणेभ्यो नियमो वलीयानि"तिपरिभाषा विभाषा परस्मैपदविधानेन ज्ञापिता । परन्तु विभाषापरस्मैपदविधानेनाऽपरनिमित्तकत्वमन्तरङ्गत्वमित्येव ज्ञाप्यते । पचते इत्यादौ विकरणेभ्यऽपूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वादात्मनेपदसिद्धौ विकरणेभ्य इति परिभाषैवापरनिमित्तकत्वरूपान्तरङ्गत्वरूपेति ।

किञ्च "अतोऽमि"तिसूत्रे तपरकरणमपरनिमित्तकत्वरूपान्तरङ्गत्वे प्रमाणम् । दीर्घऽप्रवृत्त्यर्थमेव क्लीवे च कुत्रचित्स्वयमेव कुत्रचित "ह्रस्वो नपुंसके प्रातिपदिकस्ये"तिवलेन ह्रस्वस्तथाच व्यर्थं सदपरनिमित्तकत्वमिति ज्ञापयति । अश्च आश्चेतिसमाहारद्वन्द्वे अआ इतिजाते सवर्णदीर्घापेक्षयाऽपरनिमित्तकत्वेनान्तरङ्गत्वाद् ह्रस्वे ततो दीर्घे आ इति लक्ष्ये लक्षणन्यायेन ह्रस्वाप्राप्तौ तपरकरणात्सोरमोऽप्राप्तौ सोर्लुकि "आ" इति भवत्यन्यथा परत्वाद्दीर्घे ततो ह्रस्वे तपरकरणम्व्यर्थमेव स्यादिति तात्पर्यम् । अत एव प्रमाणरूपेण "ऊ३काल" इतिनिर्देशसङ्गतिः । नच उ इति

ह्रस्वदीर्घयोस्समाहारद्वन्द्व इति कौमुदी कथमिति वाच्यम् ? समासमकृत्वा तन्त्रेणो-भयोर्विधानसिद्धेः । भाव्यमानोऽप्युकारस्सवर्णान् गृह्णातीतिपरिभाषाऽश्रयणाच्च ।

अन्तरङ्गपरिभाषा त्रिपाद्याम्प्रवर्त्तते नवा प्रवर्तत इतिविचारे गुरवः, परिभाषा द्विविधा शास्त्रत्वसम्पादिका शास्त्रत्वावच्छिन्नोद्देश्यिका च । "पूर्वत्राऽसिद्ध"मि-त्यनेन शास्त्राऽसिद्धत्वमेव सिद्धान्तितम् । यस्या॑ प्रवृत्तिमन्तरेण अप्रामाण्यज्ञा-नानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनकत्वरूपशास्त्रत्वमेव न तस्य, पूर्व-त्रेत्यनेनासिद्धत्वाभावात्सा त्रिपाद्याम्प्रवर्त्तते । तस्मिन्निनितिनिर्दिष्ट इति यथा । याम्विनाऽपि शास्त्रत्वं स्वतस्सिद्धन्तदुद्दश्या त्रिपाद्या॑ पूर्वत्राऽसिद्धमित्यनेनाऽसि-द्धत्वात्सा त्रिपाद्यान्न प्रवर्त्तते यथा असिद्धम्बहिरङ्गमन्तरङ्गे इति विवरणमाहुः ।

"वाह ऊठ्" सूत्रे ऊठ्ग्रहणं ज्ञापकमन्यथा सम्प्रसारणमात्रविधानेन "पुगन्त-लघूपधे"ति गुणे "वृद्धिरेची"ति वृद्धौ प्रष्ठौह इति सिद्धेऽन्तरङ्गपरिभाषाज्ञापकन्तत्। नच "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" इत्यनेन स्वरविधानार्थन्तदिति वाच्यम् ? "वाह ऊठ्" इत्यत्र स्वरविधायके च ह्रस्व एव विधिर्दीर्घविधानं ज्ञापकमेव । ल-घूपधगुणे वृद्धौ रूपसिद्धेः । "एत्येधत्यूठ्स्वि"त्यत्र दीर्घविधानन्तु अवतीत्यूः जन-स्योः जनौरित्यत्र वृद्धिकरणार्थम् । नच जूरेत्यादौ स्वरविधानार्थन्दीर्घग्रहणन्न ज्ञाप-कमिति वाच्यम् ? वार्त्तिके स्वरविधायके च ठित्करणेनाऽदोषात । स्वरविधायके वार्त्तिके च दीर्घेणोकारोऽपि प्रश्लिष्यते ऊठ्साहचर्य्यात् उकारो वकारस्थानिक उपधाभूतो धातुस्थो गृह्यतेऽतो यून इत्यादौ न दोष इति सम्प्रसारणमात्रविधानेन सिद्धावूठ्ग्रहणस्य ज्ञापकत्वसौष्ठवाच्च ।

अत्र असिद्धत्वन्द्विविधञ्जातबहिरङ्गाऽसिद्धत्वम् समकालप्रासिकबहिरङ्गासिद्ध-त्वञ्चेति । तत्र जातबहिरङ्गाऽसिद्धत्वस्य किम्फलमिति विचार्य्यते । पचावेदमि-त्यादौ गुणस्य बहिरङ्गत्वेनाऽसिद्धत्वा "टेत ए"इत्यैत्वन्नेति तु न "इत ऐ"इति न्यासात् । भवानीत्यत्र तु न दोषः ? तक्रकौण्डिन्यन्यायेन निआदेशेन बाधात । "आमेत" इतिप्रवृत्त्या तु न दोषः ? प्रतिपदोक्तैकारग्रहणात् । "टित आत्मनेपदा-नामि"त्यत आत्मनेपदानुवृत्त्या भाष्योक्तया फलाऽभावाच्च । ह्रस्वस्याऽसिद्धत्वेन हे जगदम्ब इत्यादौ टावभावस्तु न फलम् ? टाप्यपि पुनर्ह्रस्वेन रूपसिद्धेः । जगद-म्बात्रोतप्रयोगे दीर्घस्याऽसिद्धत्वादम्बार्थकत्वेन पुनर्न ह्रस्व इत्यपि न ? उत्तराका-रपूर्वभूतसम्बुद्ध्यपेक्षया उत्तराकारपर्यन्तैकादेशविशिष्टस्य पूर्वत्वबुद्ध्यभावेन ह्रस्व-

त्वाऽप्राप्तेः । "च्छ्वोश्शूडि"तिसूत्रे छकारसाहचर्येण विभक्त्यनिमित्तकवग्रहणात्स्व-यम्भवतीति स्वयम्भूः स्वयम्भुवे इत्यत्रोवङोऽसिद्धत्वाख्यम्फलमपि न ।

वस्तुतस्तु नौशब्दस्य अशब्देन समासे नावशब्दादाचारक्विबन्ताण्णावल्लोपे नावयतीत्यत्रोठ्निवारणाय परिभाषा । किञ्च कर्तृक्विबन्तप्रकृतिकाचारक्विन्वतभूश-ब्दाद"चो यदि"तियति भव्यमित्यत्रोडभाव॑फलम् । दिवधातो॑कप्रत्यये दिवः मन् धातो॑क्विपि मत समस्ताणिचि टिलोपे दिवमिति मान्तशब्दस्य मशब्देन साकं समासे पुनर्णिचि टिलोपे देवयतीत्यत्रोड्वारणम्फलम् । दीङ् क्षये घञर्थे कप्र-त्यये इयङि दियशब्दादाचारक्विपि तदन्ताण्णावल्लोपे दिययतीत्यत्र क्विब्वकारनिमि-त्तकयलोपो "लोपो व्योरि"ति नेत्यपि फलम् ।

ननु समकालप्राप्तिकवहिरङ्गासिद्धत्वस्य किम्फलमिति प्रश्नः ।

तृतीयैकवचने पटुइ आ पट्व्येति न फलम् ? क्रमिकान्वाख्यानपक्षे पूर्वयण्समये तृतीयाविभक्त्यभावेन परयणोऽप्रवृत्त्या पूर्वयणस्सौष्ठवात् । परयण्यपि स्थानिवद्भावेन पूर्वयण्विधाने वाधकाऽभावाच्च । इ उ आ इतिसमासे परयणादेशे जातवहिरङ्गा-सिद्धत्वेन तस्याऽसिद्धत्वेऽपि"नाजानन्तर्ये"इतिनिषेधात्पूर्वम्पूर्वयणादेशविधानाय समकालप्राप्तिकवहिरङ्गासिद्धत्वं सफलम् । "य्वा"इवि तत्र रूपम् । कश्च अश्च ईश्चाश्चेत्यत्र नित्यमपि गुणम्वाधित्वाऽनया परिभाषया दीर्घं इदमपि फलम् । इच्छ-तीत्यत्र छत्वेऽन्तरङ्गत्वात्तुकि लघूपधत्वाभावान्न गुण इदमपि फ० । अभवकदित्यत्र नित्यमकचम्प्रवाध्येतश्चेतीकारलोपेऽकचि अभवकदिति । परिभाषांशाभावे तु नित्यत्वादकचि"इतश्चे"तितन्मध्यपतितन्यायेन लोपे अभवत इत्यनिष्टापत्तिरिति सिद्धान्तफलानि बोध्यान्यन्यान्यप्येवम् ।

## नाजानन्तर्ये वहिष्ट्वप्रक्लृप्तिः ।

यत्रोत्तरकालप्रवृत्तिकेऽच आनन्तर्यमाश्रीयते तत्र वहिरङ्गपरिभाषा न प्रवर्त्तत इति फलितार्थस्तेनाक्षद्यूरित्यत्र वहिरङ्गस्योठोऽसिद्धत्वेऽपि एनया वहिरङ्गपरिभा-षाया असिद्धत्वात् यण्विधिः ।

अत्र ज्ञापकञ्च "षत्वतुकोरसिद्ध" इति सर्वं सूत्रन्तच्च कोऽसिचत , अधीत्ये-त्यादौ षत्वतुकोर्निवृत्तिप्रवृत्ती स्यातामेतदर्थमेव "एङ॑पदान्तादती"त्यस्य "अकस्सवर्णे दीर्घ" इत्यस्य च पदद्वयापेक्षत्वेन वहिरङ्गत्वादेकपदापेक्षत्वेनान्त-रङ्गयोः षत्वतुको॑कर्त्तव्ययोरन्तरङ्गपरिभाषयैवाऽसिद्धत्वसिद्धौ सर्वं सूत्रम्व्यर्थं

तज्ज्ञापकम् ।

नच षत्वग्रहणन्न ज्ञापकमेकादेशस्य पूर्वान्तवत्त्वे षत्वस्यापि पदद्वयाश्रितत्वात् त्रैपादिकेऽन्तरङ्गे वहिरङ्गपरिभाषा न प्रवर्त्तते कथं सकलसूत्रं ज्ञापकमिति वाच्यम् ? एकादेशस्य पूर्वान्तत्वेन ग्रहणस्वीकारे तुग्विधायकस्याऽपि पदद्वयाश्रितत्वेन भवदुक्तरीत्या षत्वग्रहणाऽज्ञापकत्ववत्तुग्ग्रहणस्याऽप्यज्ञापकत्वप्रसङ्गात् ।

यश्चोभयोस्समो दोषः परीहारस्तयोस्समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥

इति न्यायाश्रयणात् । नच "अन्तादिवच्चे"त्यस्य कार्यित्वेन कार्यार्थत्वात्परत्वात्परादिवद्भावमनुसृत्य नतु पूर्वान्तवद्भाव एवञ्च तुग्ग्रहणज्ञापकत्वप्रकारस्साधीयानेवेति वाच्यम् ? षत्वेऽप्येवम्प्रकारस्य निर्विवादत्वात् । षत्वे पूर्वान्तवद्भावाश्रयणे पदादित्वेन "सात्पदाद्यो"रिति निषेधप्रवृत्तया षत्वाऽभावसिद्धावसिद्धवचनस्य प्राकृतस्य वैयर्थ्याऽपाताच्च । त्रैपादिकेऽन्तरङ्गे वहिरङ्गपरिभाषाप्रवृत्तिस्वीकारे सूत्रकारवार्त्तिककारभाष्यकाराद्यभिप्रायागामनुकूलत्वमेव । सर्वं सूत्रं ज्ञापकमिति भाष्यकृताऽप्युक्तम्, तुग्ग्रहणमेव ज्ञापकमिति शेखरः कथमिति विचार्यताम् ।

केचित्तु—सम्पूर्णसूत्रसामर्थ्यादन्तरङ्गपरिभाषाऽनित्येति ज्ञाप्यते तथा च अक्षद्यूरित्यत्र यण्सिद्धिः ।

ननु "षत्वतुकोरसिद्ध" इतिसूत्रसत्त्वे वृक्षेच्छत्रमित्यत्र पदान्ताद्वेति तुकि कर्त्तव्ये गुणस्याऽसिद्धत्वेन कथन्तुगिति चेन्न ? "पदान्तपदाद्योरिति वक्तव्यमि"तिभाष्यवार्त्तिकाश्रयणात । नच वृक्षस्य इःवृक्षे समासे कृते पदान्तपदादित्वेन तत्राऽसिद्धत्वार्थन्तुग्ग्रहणमिति वाच्यम् ? सेरितिवत् "नचैकः पदान्तात्परो स्स्तो" ति"नान्वः पादमव्यपर" इतिभाष्यादेतत्सम्पूर्णसूत्रज्ञापकपरभाष्याद्यानभिधानादधिकेनालम् ।

## अन्तरङ्गानपि विधीन्वहिरङ्गो लुग्बाधते—

फलञ्च गोमत्प्रिय इति, तत्र च गोमत् सु प्रिय सु इतिदशायां पदद्वयापेक्षसमासापेक्षलुकः प्रागन्तरङ्गत्वात्सुप्रत्ययनिमित्तको "गिदचामिति" अत्वसन्तस्ये"तिनुम्दीर्घाभावौ । भवतादित्यादावन्तरङ्गमात्रवाधकत्वेऽपि "अतो हे"रितिलुकः "ज्ञापकसिद्धन्न सर्वत्रे"तिपरिभाषया तातङ्श्रुतिः । "प्रत्ययोत्तरपदयोश्चे"त्यत्र

अपर्यन्तानुवृत्तिर्ज्ञापिका । तवममादिबाधनार्थन्तु "न तवमपङस्यवृत्तावि"तिन्यासात "तवममौ ङस्यलुकी"तिन्यासाच्च ।

उत्सर्गसमानदेशा अपवादा इति—

असिद्धवत्सूत्रभाष्यम् "एत्त्वं लोपापवादो विज्ञास्यते नच सकारस्य लोप≍ प्राप्नोती"त्युक्तम् एतस्य न्यायस्य फलिक्तीति फलम् "छन्दसि क्नमेके"इत्यत्र "वर्णादनुदात्तादि"तिसूत्रोत्सर्गसमानदेशत्वेन तकारस्यैव क्नादेशः । "स्वरितेनाधिकार"इतिबलेन तकारसम्बन्धान्नैतत्फलम् । तृप तृम्फ तृप्तौ सिज्विकल्पः अङपवादत्त्वात् इति तुदादिकौमुदी उत्सर्गसमानदेशा अपवादा इति न्यायात ।

किञ्च "स्पृश मृश कृषे"तिवार्त्तिके एनयोर्ग्रहणे पक्षे सिजभावे च्लेरेव श्रवणोपपत्तौ च्लि≍क्वापि न श्रूयत इतिभाष्यविरोधश्च । "तस्मिन्नणि च मादाक" इतिन्यासेन सिद्धे युष्माकाद्यादेशविधानमपि ज्ञापकन्न्याय इतिसिद्धान्तफलविचारः ।

केचित्तु "तस्मिन्नणि चाकङनेकवचन" इतिन्यासेन सिद्धौ युष्माकाद्यादेशविधानज्ञापकवर्णनन्निर्विवादम् इति वदन्ति ।

वस्तुतस्तु वार्त्तिकरीत्यैवेदं ज्ञापकमिति । तन्न ? भाष्यमतेऽपि ज्ञापकत्ववर्णनस्य कैयटेन स्पष्टीकृतत्त्वात् ।

नचोत्सर्गसमानदेशा अपवादा इतिन्यायस्वीकारे"एकाचो द्वे प्रथमस्ये"त्यस्यापवादत्वम"जादेर्द्वितीयस्ये"त्यस्य कथमिति चेन्न ? ज्ञापकसाजात्याद्युत्सर्गशास्त्रीयोद्देश्यतावच्छेदकाधिकरणपर्याप्तोद्देश्यतावच्छेदकत्वं यत्रापवादशास्त्रे तत्रैवोत्सर्गसमानदेशा अपवादा इति न्यायप्रवृत्तिसञ्चारेण प्रथमैकाच्त्वद्वितीयैकाच्त्वयोर्भिन्नाधिकरणत्त्वात्तदुद्देश्यतावच्छेदकाधिकरणपर्य्याप्तोद्देश्यकत्वाऽभावान्न्यायाऽप्रवृत्तेरविरोधात् ।

अनेन न्यायेनान्तरङ्गविनाशकलुक एव प्राबल्यमित्यस्य अर्णुहीति फलम्, लुको गुणनिमित्तविनाशकत्वाऽभावात् ।

अन्तरङ्गत्वाद् गुणेऽसंयोगपूर्वत्वाऽभावात "उतश्च प्रत्ययादसंयोगपूर्वा"दिति हेर्लुगभावः ।

पूर्वोत्तरपदनिमित्तकार्य्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न—

फलञ्च पूर्वैषुकामशम इति । अत्र"दिशोऽमद्राणामि"तिउत्तरपदादिवृद्धिस्सिद्ध्यति । अन्यथा "उभयत आश्रयणे नान्तादिवदि"तिनिषेधेन दिग्वाचकशब्दा-

त्परदेशवाचकशब्दाऽभावात् "दिशोऽमद्राणामि"तिउत्तरपदादिवृद्धिर्न स्यात्, अत्र ज्ञापकन्तु "नेन्द्रस्य परस्ये"त्युत्तरपदवृद्धिप्रतिषेधः ।

अन्तरङ्गानपि विधीन्बहिरङ्गे ल्यब्बाधते–

फलञ्च प्रस्थायेति प्रदायेति च । "अदो जग्धिर्ल्यप्ति किती"तिल्यब्ग्रहणं ज्ञापकम् ।

वार्णादाङ्गम्बलीयः—

वर्णनिमित्तकं यत्कार्यन्तद्वार्णम् अङ्गाधिकारे विहितमाङ्गम् । तत् वार्णाद्बलीय इत्त्याशयः । अत एव कारक इत्त्यत्रान्तरङ्गं यणम्बाधित्वा "अचोञ्णिती"तिवृद्धिः । अत्र ज्ञापकम"भ्यासस्याऽसवर्ण"इत्त्यसवर्णग्रहणम् । तच्चेयतुरित्त्यत्रेयङ्वारणाय, यदीयम्परिभाषा न स्यात्तर्हि ईयतुरित्त्यत्रान्तरङ्गत्त्वात्सवर्णदीर्घसिद्धेस्तदनर्थकं स्यात् । इयञ्चानित्त्या "च्छ्वोरिति"सूत्रे सतुग्ग्रहणात् आङ्गकार्यस्यैव बलीयस्त्वे वार्णमन्तरङ्गन्तुकम्बाधित्त्वा आङ्गत्त्वात् शादेशसिद्धौ किं सतुग्ग्रहणेनेति । आङि आयामे क्विपि चकारविशिष्टस्य छकारस्य शत्त्ववारणाय तुग्ग्रहणमिति शुक्लाः । अनित्त्यत्त्वफलञ्च स्योन इत्त्यत्राङ्गमपि लघूपधगुणम्बाधित्त्वा अन्तरङ्गयण्सिद्धिः । सम्पूर्णं "अभ्यासस्यासवर्ण" इतिसूत्रं ज्ञापकम् । नच ए ऐ ओ औ शब्देभ्य आचारे क्विबन्तेभ्यो लिटीयङाद्यर्थन्तत्सूत्रमिति वाच्यम् ? भाष्यप्रामाण्याद् अनभिधानात् । न च "इजादेश्च गुरुमतोऽनृच्छः" इत्त्याम् स्यान्नत्त्वियङिति वाच्यम् ? अनृच्छ इतिपर्युदासेनानतिदिष्टगुरुमतो ग्रहणात् । नच ईधातु ✕ करी इत्यत्र प्रश्लिष्टस्तत्र अनाच्छकारेत्त्यस्याऽसिद्धिरिति वाच्यम् ? अनृच्छ इतिपर्युदासेन गणपठितत्वेन सादृश्याश्रयणात् ए ऐ इत्यादीनां गणपठितत्वाऽभावात् इति शुक्लाः । ए ऐ इत्यादौ द्वित्त्वेऽन्तरङ्गत्वाद् ह्रस्वम्प्रबाध्यैतत्परिभाषाऽभावादयादेशादेरेव प्रवृत्त्या तत्र चारितार्थ्याऽभावाच्च ।

साचेयन्धर्मिग्राहकमानादाङ्गवार्णयोस्समानकार्यित्व एव । समानस्थानिताकत्व इत्याशयः । इह समानकार्यित्वञ्च वार्णशास्त्रीयस्थानितासमानाधिकरणस्थानिताकत्त्वमाङ्गशास्त्रे ।

नन्वेवन्त्वं स्त्री इत्यत्र त्व अद् अमितिस्थितौ अन्तरङ्गत्वा"दतो गुण" इतिपररूपे कृते टिलोपे सत्यदन्तत्वाऽभावान्न टाबिति कौमुद्यसङ्गतिर्लोपीयस्थानितापररूपीयस्थानितयोरपर्याप्तिसम्बन्धेनाकारनिष्ठत्वेन वार्णपरिभाषया पूर्वं टिलोपे टाब्

दुर्वार इति चेन्न ? वार्णशास्त्रीयस्थानितावच्छेदकपर्य्याप्त्यधिकरणपर्य्याप्तस्थानिताकत्त्वमेव समानकार्य्यित्वम्, इयायेत्यत्र दीर्घीयस्थानितावच्छेदकपरत्वपर्य्याप्ति ऽपरेकारे तत्रैव हि वृद्धिस्थानितापर्य्याप्तिस्त्वमित्यादौ तु पररूपीयस्थानितावच्छेदकपरत्वपर्य्याप्त्यधिकरणे परेऽकारे लोपस्थानितापर्याप्त्यभावात । हलन्ता एवादेशा इति सिद्धान्तस्य युष्मदस्मद्विषये विवृतत्त्वाच्च ।

अथ पदकृत्यम्—स्थानितानिवेशफलमुच्छतीति । अत्रान्तरङ्गत्त्वात्पूर्वन्तुकि लघूपधत्त्वाऽभावेन गुणाऽभावः । कर्यित्त्वनिवेशे तु तुको गुणस्य च समानकार्यित्त्वेन तुकः पूर्वमनया गुणो दुर्वारस्स्यात् ।

## अत्रास्मद्गुरवस्तु—

आङ्गशास्त्रविशिष्टत्त्वम्वार्णशास्त्रे समाननिमित्तकत्त्वम् । वैशि० स्वीयस्थानितापर्याप्त्यधिकरणवृत्तित्व स्ववटकसप्तम्यन्तपदप्रयोज्यविषयताश्रयवटकवृत्तित्वान्यतरसम्बन्धेन, स्वविशिष्टविषयताप्रयोजकसप्तम्यन्तपदघटितत्त्वसम्बन्धेन कारक इत्यादौ यण्शास्त्रीयाचूपदप्रयोजनविषयताया वृद्धिविधायकशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयताश्रयावटकाकारवृत्तित्त्वेनोभयोस्समाननिमित्तकत्त्वेनेयङं यणन्मतरङ्गमपि वाधित्त्वा वृद्धिकार्य्यमाङ्गं सिद्ध्यति ।

नन्वियायेत्यादावियङ् कथम् , तस्मिन् क्रियमाणे 'वृद्धेस्स्थानिवत्सूत्रेण स्थानिवत्त्वात्सवर्णत्वादिति चेन्न ? इयङ्विधायकसूत्रारम्भसामर्थ्यात्स्थानिवद्भावाऽप्रवृत्तेः । तच्चासति वाधके प्रमाणानां सामान्ये पक्षपात इतिन्यायेन । अभ्यासकार्यं तदुत्तरखण्डाजादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वन्नेतिकल्पना । फलञ्च ऋधातोर्यङ्लुकि आरतीरयत्र झेरदादेशे यणस्स्थानिवत्त्वेन रेफलोपनिमित्तरेफाऽभावेन "ढ्लोप" इतिदीर्घो न स्यात् । अत्र प्रतिबन्धकीभूतफलम् अरियिषात् अचकाणत् । अभ्यासकार्येतिफलम् निन्यतुः । उत्तरखण्डफलंवव्रश्चेति। सिद्धवचनफलन्तु अचीकमत अतूतवत ।

किञ्च० एतत्कल्पनादेव ययौ पपौ ररौ ललौ इत्यादिषु वृद्धेस्थानिवत्त्वे "नातउपधाया" इति न वृद्धिरिति विशिष्टम् फलम् ।

## अकृतव्यूहाऽपाणिनीयाः ।

न कृतो विरुद्ध ऊहः विनङ्क्ष्यतोऽपि निमित्तत्त्वेनाश्रयणं यैरित्याश्रयः । सेदुष इत्यादौ "वसोस्सम्प्रसारणमि"तिसम्प्रसारणेन विनङ्क्ष्यतो वकारस्यैनया

निमित्तत्वेन आश्रयणाऽभावाद्वलादिलक्षणेऽभावः। निमित्तनाशे नैमित्तिकस्याऽपि नाश इति तत्सर्वथा विरुद्धम्। सेदुष इत्यादौ वकारस्य सम्प्रसारणेन नाशे इटोऽपि नाश इति सर्वथा निरर्थकम्। निमित्तविनाशसम्भाविनस्पर्यालोच्य तदप्रवृत्तिज्ञापनस्यैव लघुत्वात्। "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनम्वरमि"मिति न्यायात्। इयमनित्या "अल्लोपोऽन" इति तपरकरणात्। आङ्पूर्वकअन् प्राणने विचि आन इत्यत्र सवर्णदीर्घः। इद्वोपधालोपवारणाय तपरकरणम्। यदीयम्परिभाषा नित्यैव तदा भाविना लोपेन विनङ्क्ष्यतोऽकारस्य सवर्णदीर्घम्प्रति निमित्तत्वेन अनाश्रयणात्सवर्णदीर्घाऽप्राप्तौ अनर्थकं स्यात्। इयम्परिभाषा अन्तरङ्गपरिभाषाऽनित्यत्वप्रपञ्चभूतेतिनिर्णयः।

पदसंस्कारपक्षे हरिःगच्छतीत्यादेव साधु इति शेखरो न युक्ततरो"विसर्जनीयस्य स"इतिसूत्रभाष्यविरोधात्। तत्र खरीत्यनुवृत्त्यभावे खरनिमित्तकविसर्गस्यैव सत्त्वे उभयनिमित्तकविसर्गस्य सत्त्वे विसर्गविधानवैयर्थ्यं खरवसानयोस्सत्त्वविधानेनैव सिद्धेरवसानमात्रनिमित्तकस्य सत्त्वे शर्परे विसर्गविधानस्य वैयर्थ्यम्। तत्र सत्त्वाऽप्राप्त्या विसर्गस्य सिद्धेः। नच वासःक्षौममद्भिःप्लातमित्यादौ ≍क≍पयोर्बाधनार्थन्तत्सार्थकन्तावन्मात्रप्रयोजनकत्वे "कुप्वो≍क≍पौ चाशरी"त्येव ब्रूयात् खरीत्यनुवृत्तिस्तिरकृता। अवसाननिमित्तकविसर्गस्य अवसानभङ्गे भाविन्यपि पूर्वं प्रवृत्तिरवसानभङ्गे वा जातस्य तस्य निवृत्त्यभावस्तदा हि पदसंस्कारपक्षे क इत्यवसाने विसर्गं कृत्वा त्सरुरित्यस्य संयोगे सत्त्वाऽभावार्थं शर्परे इत्यस्य अवसानमात्रनिमित्तकविसर्गस्य सत्त्वविधानेऽपि चारितार्थ्यसम्भवेन भाष्योक्तज्ञापकताप्रदर्शनमनर्थकं स्यात्। अत≍परिभाषा साध्वीति।

फलञ्च वैभाजित्रमिति, अत्र "विभाजयितुर्णिलोपश्चाणु च वक्तव्य" इतिवार्त्तिकेनाण्णिलोपौ, एतत्परिभाषाऽभावेऽन्तरङ्गत्वाद् गुणेऽयादेशे चालोन्त्यपरिभाषया यकारमात्रस्य लोप आपतेत्। परिभाषायां सत्त्यान्तु गुणायादेशनिमित्तभूतणेर्लोपेन विनाशसम्भावनया पूर्वमप्रवृत्त्या णिप्रत्ययवटकेकारलोपेन दोषाऽभावः। यलोप इति वाच्ये णिः हणसामर्थ्यान्न गुणायादेशौ, तदपि न ? णिप्रत्ययेकाररहितविभाजीतिप्रातिपदिकादाचारक्विबन्तात् तृचि विभाजयितृशब्दे यलोपप्रत्ययापत्तेस्तादवस्थ्यात्। निमित्ताऽपाय इति तु कर्त्तव्यमेवान्यथा ष्ठा गतिनिवृत्तौ स्थातास्थानं स्थितिरित्यादिषु धात्वादेरितिसत्त्वे टवर्गश्रवणापत्तेः।

## अन्तरङ्गादप्यपवादो बलीयान्—

अपवादपदार्थस्य सनिरूपकत्वात् यन्निरूपितापवादभूतं यच्छास्त्रन्तत्तस्मात् परान्नित्यादन्तरङ्गादपि बलवदित्याशयः। येन नाऽप्राप्त इति येन लक्ष्यसमुदायेन येन एकेन लक्षणेनेति वा तात्पर्यद्वयम्। आद्यतात्पर्ये बाध्यसामान्यचिन्तापक्षो बाध्यविशेषचिन्तापक्षश्च। स्वविषये यद् यत्प्राप्तन्तत्तत्सर्वं बाध्यमिति बाध्यसामान्यचिन्तापक्षः। स्वविषये इदमिदम्प्राप्तन्तत्र किम्बाध्यं किन्न बाध्यमिति बाध्यविशेषचिन्तापक्षः। बाध्यसामान्यस्योदाहरणम् "अचिर ऋतः" इतिरादेशो गुणदीर्घोत्त्वानां सर्वेषाम्बाधकः। नाप्राप्त इत्यत्र नैकधेति प्रयोगवत् निषेधार्थकनशब्देन "सुप्सुपे"तिसमासः। पृषोदरादित्वान्नलोपाऽभावः। फलितार्थश्च तत्तच्छास्त्रं तत्तदीयोद्देश्यतावच्छेदकव्यापकधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य बाधकम्। उदाहरणं यथा "वृद्धिरेची"तिशास्त्रस्योद्देश्यतावच्छेदकमेजव्यवहितपूर्वत्वविशिष्टात्वन्तद्व्यापकञ्च "आद्गुण" इति अजव्यवहितपूर्वत्वविशिष्टात्वन्तस्य "वृद्धिरेची"ति बाधकम्। नन्वेवं स्वीकारे "अजादेर्द्वितीयस्य" द्वितीयैकाचनिरूपितव्यापकत्वस्य "एकाचो द्वे प्रथमस्य" प्रथमैकाच्त्वेऽभावात्कथम्बाध्यत्वं यथा ऊर्णुनाताविति चेन्न? स्वघटकाच्त्ववत्तरत्वसम्बन्धेन प्रथमैकाचो व्यापकत्वम् तेन बाध्यत्वसिद्धिः। नच मद्ध्वद्ध्वः मद्द्द इत्यादौ परस्य रेफस्य "अचो रहाभ्यान्द्वे"इत्यनेन द्वित्वङ्कुतो न धात्र्यंश इत्यादौ "यणः मयः" इतिवार्त्तिकेन रेफस्य तथा अर्हेणेत्यादा "वनचिचे"तिद्वित्वङ्कुर्यन्नेति वाच्यम्? माठरपरिवेषणन्यायेनाऽदोषात्। न्यायस्वरूपञ्च सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्। माठरकौण्डिन्यब्राह्मणातिरिक्तत्वेन ब्राह्मणभजने सङ्कोचः। व्यापकधर्मावच्छिन्नविषयतायां स्वावच्छेदकव्याप्यधर्मावच्छिन्नातिरिक्तवृत्तित्वज्ञानमेव बाधपदार्थः। "अचोरहाभ्यामि"ति सूत्रीयरेफत्वावच्छिन्नविषयतया "यणो मयोद्वे वाच्ये" अनचि च" यणत्वयरत्वावच्छिन्नविषयताया बाधात् रेफातिरिक्तस्यैव यणो यरश्च द्वित्वमिति नोक्तलक्ष्ये दोष इतिसमाधानात्।

ननु व्याप्यधर्मावच्छिन्नविषयतया व्यापकधर्मावच्छिन्नविषयताया एव बाधपदार्थत्वेऽ"कःसवर्णे दीर्घः" इत्यने"नेको यणचि" आद्गुण" इति सूत्रयोः कथम्बाधो व्यापकत्वाऽभावात्–स्वसमानाधिकरणाऽत्यन्ताऽभावाप्रतियोगित्वस्य व्यापकत्वात् दीर्घविधायकशास्त्रीयसवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयताविशिष्टे ओश इतिदीर्घशास्त्रे लक्ष्ये "आद्गुण" इतिशास्त्रीयअजव्यवहितपूर्वत्वधि

शिष्ट अक्त्वावच्छिन्नविषयता नास्तीति कथं व्यापकत्वम् । एवमेव सवर्णाजव्यवहि-पूर्वत्वविशिष्ट अक्त्वावच्छिन्नविषयताविशिष्टे लक्ष्ये दैत्यारिरित्यादा "विको यण-चो"तिशास्त्रीय अजव्यहिपूर्वत्वविशिष्टेक्त्वावच्छिन्नविषयताया अभावेनैकस्मिन्दी-र्घव्याप्य उभयो ऽकथम्व्यापकत्वमिति चेन्न ? लक्ष्यानुरोधात् "नाज्झलावि"ति दीर्घनिर्देशात् सूत्रवार्तिकभाष्यबलाच्च दीर्घशास्त्रीयविषयताधिकरणे श्रीशःदैत्या-रिरित्यादावुक्तशास्त्रद्वयीयविषयतायास्तत्तद्व्यक्तित्वरूपतत्तद्विषयतात्वेन तयोरभा-वेऽपि अन्यतरविषयता नास्तीति अभावो दीर्घीयविषयताधिकरणे धर्तुं न शक्यते, काचिदन्यतरविषयता तु तत्राऽस्त्येव दीर्घीयविषयताधिकरणे घटाद्युदासीनानामभा-वोऽभावीयप्रतियोगितावच्छेदकत्वं घटत्वादावप्रतियोगितावच्छेदकत्वमन्यतरत्व इति स्वाधिकरणनिष्ठाऽभावप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वमन्यतरत्वस्येति तेन रूपेण सवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयतातिरिक्ताजव्यवहितपूर्व-त्वविशिष्टाऽक्त्वावच्छिन्न अजव्यवहितपूर्वत्वविशिष्टेक्त्वावच्छिन्नान्यतरविषयता-धिकरणे यण् गुणश्चेति फलितम् ।

नच सवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयताया अपि प्रमेयत्व-वाच्यत्वअभिधेयत्वादिधर्मैर्व्यापकत्वमापद्येत । तथाच कथं बाध्यत्वमेनयोरिति वाच्यम् ? एवं स्वीकारे सत्तात्वब्रह्मत्वपदार्थत्वादिधर्माणां सर्वत्र सत्त्वेन क्वापि व्यापकत्वन्न सिद्धयेत् । एवञ्च "कस्सवर्ण" इत्यादिशास्त्राणां वैयर्थ्यापत्तिस्त-त्सामर्थ्याच्छास्त्रप्रवृत्तिनिवृत्तियोरवधर्मेण व्याप्यव्यापकभावविधानेन शङ्काया एव-म्विधाया अनभ्युपगमात् ।

नचवं रीत्या समाधाने वासः क्षौममित्यादौ विसर्गश्रुतिर्न स्यात "विसर्ज-नीयस्य सः" शर्परे विसर्जनीय" इत्येनयोरपि अन्यतरत्वेन व्यापकत्वात् "कु-प्वोऽकऽपौ चे"त्यस्य व्याप्यत्वा"दकस्सवर्ण"इतिवत अतिरिक्तत्वेन सङ्को-चातऽकस्यादिति । किञ्च विनिगमनाविरहेण यथाऽन्यतरत्वेन व्यापकता त-थाऽन्यतमत्वेनाऽपि व्यापकता । एवञ्च वातप्रम्यि प्रध्यि इत्यादा 'वेरनेकाचो-ऽसंयोगपूर्वस्य" आद्गुणः" इको यणचि" एतदीयविषयतानामन्यतमत्वेन व्या-पकत्वाद् गुणयणोरि "वैरनेकाच" इति यणोऽपि बाधे दीर्घेण स्यादिति यकारो न श्रूयेतेति वाच्यम् ? एतद्दोषद्वयपरिहाराय स्वीयवि षय ता विशिष्टधर्मवद्विषयताकशा-स्त्रस्य स्वेन बाध इति तात्पर्यात । वैशिष्ट्यञ्च, स्वव्यापकतावच्छेदकत्व स्व-

व्यापकतावच्छेदकधर्मविशिष्टभिन्नत्त्वोभयसम्बन्धेन। सम्बन्धघटकगौशिष्ट्यञ्च स्व-व्यापकत्त्व स्वभिन्नत्त्वोभयसम्बन्धेन। स्वम् अपवादत्त्वेन विवक्षितं शास्त्रं तदीया या विषयता तया विषयतया विशिष्टो यो धर्मस्तादृशधर्मवती विषयता यत्र शास्त्रे तादृशधर्मवद्विषयताकशास्त्रस्य स्वेन अपवादत्त्वेन विवक्षितशास्त्रेण बाध इति फलितार्थः। स्वमत्र अपवादत्वेन विवक्षितं "कुप्वो ≍क≍पौ चे"ति शास्त्रन्तदीय-विषयता कवर्गपवर्गान्यतरत्त्वावच्छिन्नाऽव्यवहितपूर्वत्त्वावच्छिन्नविसर्जनीयत्त्वा-वच्छिन्ना विषयता तद्विशिष्टधर्मो "विसर्जनीयस्य स" इत्येतदीयविषयतागततद्व्य-क्तित्त्वन्तदेव व्यापकतावच्छेदकमन्यतरत्त्वन्तु विषयतागततद्व्यक्तित्त्वापेक्षया स्वव्यापकतावच्छेदकविशिष्टमेव न विशिष्टभिन्नमिति सम्बन्धघटकगौशिष्ट्याऽसंवट-नान्नोभयोर्बाधोऽपि तु "विसर्जनीयस्य स"इत्यस्यैवेष्टस्येति।

एव"मादूगुण" इको यणचि" एरनेकाचोऽसंयोगपूर्वस्येति" शास्त्रीया अन्यतमत्त्वावच्छिन्ना व्यापकता, व्याप्यता च सवर्णाज्व्यवहितपूर्वत्त्वविशिष्टा-क्त्वावच्छिन्नविषयतायाम्। अत्र सम्बन्धो न संघटते तथाहि अन्यतमत्त्वे आद्यस-म्बन्धसत्त्वेऽपि स्वव्यापकतावच्छेदकत्त्वरूपे द्वितीयसम्बन्धोन गच्छति, स्वव्या-पकतावच्छेदकमन्यतरत्त्वं तद्व्यापकत्व तद्भिन्नत्वमेवान्यतमत्त्वस्येति स्वव्यापकता-वच्छेदकविशिष्टभिन्नत्वन्नास्ति किन्तु व्यापकतावच्छेदकविशिष्टत्वमेवेति द्वितीय-सम्बन्धाऽसंवटने "नैरनेकाच"इति यणो बाधाऽभावेन वातप्रम्योरित्यादीनां साधुत्व-सौष्ठवात्। उक्तस्थले व्यापकतावच्छेदकधर्मश्च विषयतागततद्व्यक्तित्वरूपस्तद्व्य-क्तित्ववटितरूपश्च। सच्च व्याप्याघटितो गृह्यते, तत्तल्लक्षणारम्भसामर्थ्यात्।

न च अन्यतमत्त्वेन व्यापकत्त्वमादाय बाधाऽभावे निश्चेतव्ये "उरृदि"तिशा-स्त्रेण "उपधायाश्च" मृजेर्वृद्धिः "पुगन्तलघूपधस्य चे"तिशास्त्राणाम्बाधो न स्या-त इररारासपवाद इति व्यवहारोऽनुपपन्नस्तथाहि व्यापकतावच्छेदकं "पुगन्तलघूपध-स्य च "उपधायाश्चे"तिशास्त्रद्वयीयविषयताद्वयगतमन्यतरत्त्वमेव, तद्व्यापकत्त्व-तद्भिन्नत्वसम्बन्धाभ्यास्व्यापकतावच्छेदकधर्मविशिष्टमेवान्यतमत्त्वन्नतु विशिष्टभि-न्नत्वमिति द्वितीयसम्बन्धाऽसंवटनेन बाध्यबाधकभावाऽभावेनेररारामपवाद इत्य-स्याऽसिद्धिरिति वाच्यम्? "उरृदिति"शास्त्रे ऋकारस्य चङो णेश्च प्रातिस्वि-करूपेण सत्वा "तपरनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथ≍प्र-सङ्गे परवलीयस्त्वमि"तिभाष्येण "उपधायाश्च" पुगन्तलघूपधस्य च"मृजेर्वृद्धि"-

रितिसूत्राणामप्रतिपदविधित्वेन "उरर्ण्दि"तिसूत्रम्बाधकमिति विरोधलेशाऽसम्भवात्। एवमेव "अचि र ऋत" इत्यत्र गुणदीर्घोत्त्वानामपवादः "यचि भमि"त्यनेन "सुप्तिङन्तमि"ति "स्वादिष्वसर्वनामस्थान" इत्यनयोः, "अतो गुणे" इत्यनेना "कलसवर्णे दीर्घः" प्रथमयोऽपूर्वसवर्ण"इत्यनयोरनयैव दिशा भाष्यबलेन च दोषा वारणीया इत्यलम्।

"अचि र ऋत"इत्यत्र प्रियतिस्र आगत इत्यादौ गुणदीर्घयोऽप्राप्तिर्नास्ति। तिस्रस्तिष्ठन्तीत्यादौ दीर्घोत्त्वयोऽप्राप्तिर्नास्ति कथं गुणदीर्घोत्त्वानाम् व्यापकत्वम्। किञ्च प्रियतिस्रोरित्यादावोस्विभक्तौ गुणदीर्घोत्त्वानां केषामप्यसत्त्वात्कथं व्यापकत्वाद् बाध्यतया रत्वसिद्धिरितिचेन्न? प्रियतिस्रोरित्यत्रे "को यणची"त्यनेनैव यण् न त्व"चि र ऋत" इत्यनेन। तथाच त्रितयपर्याप्तान्यतमत्त्वेन व्यापकतायास्सौष्ठवात्। "ङेराम्नद्याम्नीभ्य" इत्याम् तु याटोऽपवादत्वाद्वाधकः। स्याटस्तु परत्वाद्व बाधक इत्यामि रूपसिद्धौ दोषाभावः। ननु "एत्येधत्यूठ्सु" इत्यत्र पररूपगुणापवाद इति कथम् उपसर्गविषयकपररूपमात्रस्य व्याकत्वेन वृद्ध्या बाध इष्यते तत्र "ओमाङोश्च"एङि पररूपमि"त्यनयोरन्यतरत्त्वेन व्यापकतामादाय कस्यचिदेव बाधस्स्यादिति चेन्न? विषयतागततद्व्यक्तित्वापेक्षया स्वव्यापकतावच्छेदकधर्मविशिष्टभिन्नत्वरूपद्वितीयसम्बन्धाऽसंघटनात्। तद्धर्मविशिष्टत्वमेव न विशिष्टभिन्नत्वमितिपूर्वोक्तरीत्याऽन्यतरत्त्वेन व्यापकत्वाऽभावेनाऽदोषात्।

नच भसंज्ञाविधायके "यचि भमिति"ति शास्त्रेण सुप्तिङन्तं स्वादिष्वित्यनयोर्बाधोऽभिमतोऽत एव राजन्य इत्यत्र "राजश्वशुराद्यदि"तियति अन्तर्वर्त्तिविभक्त्या पदत्वेऽपि "यचि भमि"तिभत्वेन पदत्वबाधान्नलोपो नेति सच बाधो न स्यादन्यतरत्त्वे निरुक्तवैशिष्ट्याऽभावादिति वाच्यम्? द्वितीयसम्बन्धघटकवैशिष्ट्याऽभावादिति वाच्यम्? द्वितीयसम्बन्धघटकवैशिष्ट्ये तृतीयस्य स्वसमनियतोभयावृत्तिधर्माश्रयविषयत्वाऽव्याप्याऽवृत्तित्वरूपसम्बन्धस्य दानेनाऽदोषात्। "सुप्तिङन्तम्पदमि"ति शास्त्रीयविषयतायास्स्वादिष्विति शास्त्रीयविषयताम्प्रति अव्याप्यत्वात्। येन नाऽप्राप्तन्यायाङ्गबाध्यसामान्यचिन्तापक्षबाध्यविशेषचिन्तापक्षफलकपुरस्तादपवादन्यायमध्येऽपवादन्यायाभ्यां रामा इत्यत्रा"तो गुण" इति "अकस्सवर्ण" इत्यस्यैव बाधकत्तेन "प्रथमयो"रित्यनेन दीर्घ एवमन्यत्रापि बोध्यम्।

अथ बाधबीजाऽकारवर्णनम्।

तदप्राप्तियोग्येऽचारितार्थ्ये सतीति तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽप्यचारितार्थ्यमेकम्। तदप्राप्तियोग्येऽचारितार्थ्ये सति कृते चारितार्थ्यन्द्वितीयम्। स्वप्रवृत्त्युत्तरोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यनैयर्थ्यसम्भावनाविषयत्वाऽभावे सति तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽप्यचारितार्थ्यन्तृतीयम्। तदप्राप्तियोग्येऽचारितार्थ्यञ्चतुर्थम् तदन्यतमत्वमिति सिद्धान्तः। एवञ्चत्वारि बाधबीजानि एष्वेव तक्रकौण्डिन्यन्यायान्तर्भावः। प्रथमस्थले उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वप्रवृत्तियोग्यलक्ष्यातिरिक्तत्वेन सङ्कोचः। अपवादे सम्पन्ने यदि उत्सर्गप्राप्तिस्तदपि प्रवर्तते रमायामित्यादौ ङेरामित्याम्यपि पुनर्याट् प्रवर्त्तते। द्वितीयस्थले तु स्वप्रवृत्तियोग्यलक्ष्यातिरिक्तत्वेन स्वविहितकार्याश्रयातिरिक्तत्वेनोभयविध सङ्कोचः। सर्वेषामित्यादौ छव्यपि आम्त्वबुद्धया न नुट्। तृतीयस्थले कुलमित्यत्राम्यपि "स्वमोर्नपुंसका"दिति न लुक्। "इदमो म"इतिसूत्रारम्भसामर्थ्यात्तक्रकौण्डिन्यन्यायो नास्ति अनित्यो वा। "वाऽवसान"इत्यत्र चर्त्त्वावच्छिन्नविधेयतया झल्त्वावच्छिन्नकार्यिताया बाधः। चर्भिन्नस्यैव झलश्चर्त्वमिति तात्पर्य्यम्। अन्यथा षकारस्यैव चर्त्त्वेनान्तरतम्यात्षकारे रत्नमुष् जश्त्वे रत्नमुडिति टकारो न श्रूयेतेत्याशयः। तत्र न्यायेन जश्त्वम्बाधित्वा षकारस्य षकार इति तत्त्वम्। नच "शेषो घ्यसखी"तिसूत्रे विपदोपादानेन इदन्ते विशब्दातिरिक्तत्वेन सङ्कोचापत्तौ "घेर्ङिती"तिसूत्रे घेरित्यस्य सिद्धिर्न स्यादिति वाच्यम्? एतन्न्यायस्यानित्यत्वाश्रयणात्। नच "लोपो व्योर्वली"ति शास्त्रे यकारातिरिक्तत्वेन सङ्कोचः स्यादिति वाच्यम्? न्यायानित्यत्वसमाधानतौल्यात्।

क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इत्यस्यार्थस्तु स्पष्ट एव।

## पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्।

अवेहीति फलम् "एत्येधत्यूठ्स्वि"ति सूत्रेणानन्तरत्वा "द्देङि पररूपमि"त्यस्यैव बाधो न "स्वोमाङोश्चे"त्यस्य, विप्रतिषेधशास्त्रबलात् इति प्रसिद्धः।

मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्। ओष्ठादिषु ङीष्विधिरुदाहरणम्।

## अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा—

अत एव "नेटी"तिनिषेधोऽनन्तरस्य "वदव्रजहलन्तस्याच" इत्यस्यैव नतु व्यवहितत्वा "त्सिचि वृद्धि"रित्यस्येति "इडनपुंसकस्ये"तिनिषेधस्थट् प्रत्याहारप्रयुक्तसंज्ञाया एव नतु "शि सर्वनामस्थान"मित्यस्येति भाष्ये कैयटे च। अन्यथा

"झिसर्वनामस्थान"मिति व्यर्थं स्यात् ।

**प्रकल्प्य चापवादविषयन्तत उत्सर्गोऽभिनिविशते—**

**पूर्वंह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः**

ददाति दधतीति फलम् । "अदभ्यस्ता"दित्यदादेशविषये "झोऽन्त" इत्यन्तादेशः प्रागेव न भवति । जातिव्यक्तिपक्षफलभूतोऽयन्न्यायः । न्यायौ लक्षणैकचक्षुष्कलक्ष्यैकचक्षुष्कविषयौ इति न शेखरप्रकारो युक्तः । लक्षणैकचक्षुष्कस्याऽपि अपवादवाक्यार्थबोधपूर्वकमपवादप्रवृत्तेः प्रागपि उत्सर्गवाक्यार्थबोधेन लक्ष्यसंस्कारे बाधकाऽभावात् । अज्ञातलक्ष्यस्यापि पूर्वमपवादवाक्यार्थबोधः पश्चादुत्सर्गवाक्यार्थबोध इति कल्पनायाम्प्रमाणाऽभावात् । शेखरोक्तप्रकारकल्पने मानाऽभावात् । प्रकल्प्य वेतिप्रतीकमुपादाय यथा "न सम्प्रसारणे" इति परस्य यणः पूर्वं सम्प्रसारणमपूर्वस्य तु तन्निमित्तः प्रतिषेध इति कैयटोक्तन्त्वक्षरानुगुणमिति नवीनप्रकारोऽसङ्गत एव । प्राक्पदाध्याहारस्तु द्वयोरपि तुल्य एव ।

अपवादप्रवृत्तेः प्रागुत्सर्गप्रवृत्तिरितिकैयटोक्तार्थे अपवादवाक्यार्थबोधात्प्रागपि उत्सर्गवाक्यार्थबोध इति आनुगुण्यमेव न काप्यनुपपत्तिरिति प्रत्युत अभिनिविशत इति दर्शनात्कैयटोक्तमेवानुगुणमिति विचारयन्तु धीधनाः । तस्माज्जातिव्यक्तिपक्षफलभूतौ न्यायावेताविति सिद्धम् ।

**उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गम्बाधते ।**

उत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यापवादशास्त्रवैयर्थ्यसम्भावनायाम्पूर्वमुत्सर्गशास्त्रप्रवृत्त्यभाव इत्याशयः । अपवादपदेन निषेधपर्युदासापवादानां ग्रहणम् । अत एव रत्नवतुरित्यत्र कित्त्वं यदि न स्यात्तर्हि नुमि संयोगात्परत्वेना "संयोगाल्लिटि कितो"तिकित्त्वन्न स्यात् इति सम्भावनायां नुमः पूर्वं कित्वाऽभावान्नलोपाऽभावः । प्रलिम्प इत्यत्र यदि पूर्वं शप्रत्ययो न स्यात्तदोपसर्गयोगेऽनुपसर्गादिति निषेधस्यादिति सम्भावनायास्सत्वात् । "हलन्तादि"तिसूत्रेऽन्तग्रहणसामर्थ्यात् लुग्विषये उपसञ्जनिष्यमाणन्यायो न प्रवर्त्तते । "ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेने"तिवार्त्तिकन्तु यदि कित्वन्न स्यात्तदा गुणे "असंयोगाल्लिट्" इति कित्त्वमिति सम्भावनया कित्वमपि न प्राप्नोति पूर्वोक्तसम्भावनया गुणोऽपि न प्राप्नोतीतिकित्त्वविधानार्थम्वार्त्तिकमावश्यकम् ।

अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते—

अयजे इन्द्रम् वृक्षे इहेत्यादौ अयज इ इन्द्रम् वृक्षइइहेतिदशायां "माद्गुण" इतिदैत्यारिरित्यादौ सवर्णदीर्घेण बाधितोऽपि प्रकृतलक्ष्येऽन्तरङ्गत्वाद् गुण एवा-"द्गुण"इत्यनेनेति यदि सवर्णदीर्घस्स्यात्तर्हि पश्चाद् गुणे अयजेन्द्रमिति वृक्षेहेति च स्यात। तदुक्तम्भाष्ये"इण्ङ्शीनामाद्गुणस्सवर्णदीर्घत्वा"दिति। समानबलस्थले गुणबाधेन सवर्णदीर्घश्चरितार्थं इत्यधिकबलान्तरङ्गबाधे प्रमाणाऽभाव एव परिभाषा-मूलम्। नागमादेशयोर्बाध्यबाधकभावः ? भिन्नविषयत्वात्। दधि ब्राह्मणेभ्यो दीयताङ्कम्बलङ्कौण्डिन्यायेत्यत्रात एव न बाध्यबाधकभावः। सजातीययोरेव बा-ध्यबाधकभाव इति रुच्युत्पादकत्वेन भोजने साजात्याद्दधितक्रयोर्बाध्यबाधकभावो न तु दधिकम्बलयोः। अपवादो नुग्दीर्घत्वस्येति"दीर्घोऽकितः"इतिभाष्यविरोधाद-युक्तमिति शेखरोऽनुपपन्नः। नहि नुकि कृते दीर्घस्य सम्भवः ? अजन्तस्याभ्या-सस्य दीर्घविधानात। असम्भवस्थले आगम आदेशबाधको भवतीत्येव भाष्याश-यवर्णनात। एवमसम्भवस्थले आगमस्याऽप्यादेशो बाधक इति"दीर्घोऽकित"इति भाष्याभिप्रायवर्णनात्।

अभ्यासविकारेषु बाध्यबाधकभावो नास्ति—

"दीर्घोऽकित"इत्यकिद्ग्रहणं ज्ञापकमस्यान्तद्धि यंयम्यत इत्यादौ दीर्घनिवृ-त्त्यर्थमेव नुकाऽपवादत्वाद्दीर्घबाधे सिद्धे व्यर्थं सदस्या ज्ञापकम्। मीमांसत इत्यत्रे-त्वस्य बहिरङ्गस्यान्तरङ्गेण दीर्घेण बाधाऽभावः। धर्मिग्राहकमानविरोधादयं कैयटो न युक्तो मान्वधादीनां दीर्घे कृते इत्वाऽप्राप्त्या"गुणो यङ्लुको"रितिभाष्ये तदुदा-हरणाऽसङ्गतेरिति शेखरोऽयुक्तङ्कैयटाशयानभिज्ञत्वात। अचीकरत् मीमांसत इ-त्यादौ बाध्येत्वप्रवृत्त्यव्यवहितोत्तरकाल एव बाधकदीर्घप्रवृत्तिः। पापच्यत इत्यादौ तु एत्वाऽभ्यासलोपयोर्बाध्ययोरप्रवृत्तौ सत्यां बाधकस्य दीर्घस्य न प्रवृत्तिसम्भ-वः। बाध्यशास्त्रप्रवृत्त्युत्तरकाले तु बाधकप्रवृत्तिसम्भवाभिप्रायेणैव परिभाषाऽवतार इत्येव कैयटाशयः। एवञ्च धर्मिग्राहकमानविरोधः शेखरमते "अत एकहल्मध्य" इतिभाष्यविरोधश्च। तस्मात्कैयटग्रन्थोऽत्रत्योऽनुकूल एवेति सूक्ष्मदर्शिनः। नच अ-किद्ग्रहणं कथं ज्ञापकन्तदभावे चाछायत इत्यत्र छाधातोर्ङि अन्तरङ्गत्वात्तुकि दी-र्घनिषेधार्थमिति वाच्यम् ? प्रत्यासत्तिन्यायेन अभ्यासत्वावच्छिन्नोद्देश्यताकस्य किंतो ग्रहणेन यङ्लुग्निमित्तकस्य किंतो वा ग्रहणेन चारितार्थ्याऽभावेन ज्ञापक-

सम्भवात्। अत एव ओहाक् त्यागे यङ्लुकि जाहातीत्यादावभ्यासनिमित्तकत्कि-त्वाऽभावेन दीर्घस्सिद्ध्यति। अभ्यासविकारेषु बाध्या ऽपूर्वंप्रवर्त्तन्ते न बाधका इति फलितार्थाद् बोभूयत इत्यादौ गुणे ह्रस्वस्य ह्रस्वे गुणप्रवृत्तिसम्भवेन गुणे ह्रस्वे लक्ष्ये लक्षणन्यायेन पुनर्गुणाऽप्रवृत्तौ बोभूयत इति न सिद्ध्येदिति वदन्त ऽप-राभूताः।

## ताच्छीलिकेषु वासरूपविधिर्नास्ति।

निन्दहिंसादिसूत्रेणैकाज्भ्यो वुञ्विधानं ज्ञापकम्। "सूददीपदीक्षश्चे"तिदीपे-र्युज्निषेधेनास्या अनित्यत्वात्। तेन कन्त्रा कमनेति रूपद्वयं सिद्ध्यति।

## क्तल्युट्खलर्थेषु वाऽसरूपविधिर्नास्ति—

तेन क्तविषये हसितमित्यत्र घञ् न भवति। तथा हसनमितिल्युड्विषयेऽपि शेखरो द्रष्टव्यः।

## लादेशेषु वासरूपविधिर्नास्ति—

अत एव श्व ऽपक्तेत्यत्र वाऽसरूपविधिना लट् न। ज्ञापकञ्च "हशश्वतोर्लङ् चे"तिलङ्विधानम्। इत्येतत्सर्वं कौमुद्यामवशिष्टं शेखरे द्रष्टव्यमलम्पल्लवितेन।

## उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्—

"ङमो ह्रस्वादचि ङमुण्नित्य"मि"त्यत्राचीतिसप्तमीनिर्देशिका"मय उञो वो वे"त्यत्र सार्थिका पञ्चमीनिर्देशो निरवकाश इति तस्यैव बलीयस्त्वम्। इति"त-स्मादित्युत्तरस्ये"त्यस्य दिग्योगलक्षणपञ्चमीमूलकस्यैव प्रवृत्तिः। अयमाशयः, ह्र-स्वादिति पञ्चम्या उत्तरस्येत्यस्योपस्थितिः। अचीतिसप्तमीनिर्देशात्पूर्वस्येत्यस्यो-पस्थितिः। उभयोरुभयत्राऽभेदान्वये ङम ऽपराभिन्नो योऽच ऽपूर्वस्तस्य ङमुट्। अच ऽपूर्वाभिन्नो यो ङम उत्तरस्तस्य ङमुट् इत्यर्थद्वये प्रत्यङ्ङात्म आत्मेत्यादौ सूत्रचारितार्थ्येऽपि उपस्थितयोर्द्वयो ऽपूर्वपरयोर्विनिगमनाविरहेण विशेष्यविशेष-णभावाभ्यां द्वयोर्ङमुट्पदार्थेऽन्वयेनोद्देश्यभेदाद्विधेयभेदः। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तत ऽपरस्य ङमुट् इतिवाक्यभेदस्तु गौरवादयुक्तः। एकांशत्याग एकांश-ग्रहणम् "तस्मादिति""तस्मिन्निति"परिभाषाद्वयविधेयांशोपस्थितिसमये"विप्रति-षेधे परङ्कार्य"मि"तिशास्त्रबलेनोत्तरांशोपस्थिति ऽपूर्वत्वांशविकला पञ्चमी निर्देशनैव -र्थ्यभयात्। फलञ्च "ङसि धुडि"ति। "आज्जसे"रितिपञ्चमीनिर्देशस्य"आमि-सर्वनाम्नस्सुडि"त्यत्र चारितार्थ्येऽपि आमीतिसप्तमीनिर्देशस्य"त्रेस्त्रय"इत्यत्र चा-

रिताध्योऽपि विप्रतिषेधसूत्रबलेन पञ्चमीनिर्देशादेव व्यवस्था कार्य्येति सुगमऽप-न्थास्तस्मिन्निति भाष्यकैयटयोस्स्पष्टम्, वार्त्तिककारेण पठितञ्चेति ।

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणम्—

स्त्रीत्वबोधका द्योतका वा टाबादयो लिङ्गपदेन गृह्यन्ते । प्रातिपदिकम्प्रगृह्य यत्कार्यं तत् टाबादिविशिष्टस्याऽपि भवतीति फलितार्थः । सामान्यरूपेण वा, अर्था-त्प्रातिपदिकत्वप्रातिपदिकत्वव्याप्यानुपूर्वीरूपेण बोधके सतीत्यर्थस्तेन "अत इञि" त्यादावत्पदस्यादन्तप्रातिपदिकबोधकत्वेन रमा गौरीत्यादिलिङ्गबोधकग्रहणापत्ति-रित्यपास्तम् । प्रातिपदिकग्रहणपदेन परिभाषायां प्रातिपदिकत्वव्याप्यशाब्दबोधीय-विषयताप्रयोजकस्यैव ग्रहणम् "कुमारश्रमणे"तिसूत्रे कुमारप्रकृतिकसुबन्तस्यैव समासे सत्वात्कुमारपदप्रयोज्यविषयतायाऽप्रातिपदिकत्वव्याप्यत्वेनाक्षतेः। नच "अत इञि" त्यत्र प्रातिपदिकादित्यधिकारः अदन्तप्रातिपदिकत्वावच्छिन्नशाब्दबोधीयविषय-ताया अपि प्रातिपदिकत्वव्याप्यत्वेन प्रातिपदिकग्रहणत्वापत्तौ रमा गौरीत्यादौ दोष एवेति वाच्यम् ? प्रातिपदिकत्वावच्छिन्नविशेष्यतानिरूपिताऽभेदसम्बन्धा-वच्छिन्नप्रकारताभिन्नविषयताप्रयोजकत्वस्यैव प्रातिपदिकग्रहणत्वरूपत्वेन अदन्त-त्वावच्छिन्नविषयतायास्तादृशप्रकारताभिन्नत्वाऽभावेन तत्र परिभाषाया अप्रवृत्तेः। "बहुव्रीहेरूधस"इति कुण्डोध्नीति भाष्यविरोधपरीहाराय अनया परिभाषया स्त्री-प्रत्ययसमभिव्याहारे तद्रहिते दृष्टानाम्प्रातिपदिकत्वतद्व्याप्यधर्माणाम्विशिष्टेऽपि पर्य्याप्तत्वमतिदिश्यत इत्यस्यार्थः । स्वविशिष्टे स्ववृत्तीनाम्वर्णत्वव्याप्यधर्माऽवटि-तधर्माणामतिदेश आरोप इत्याशयः । वैशिष्टयञ्च स्वनिष्ठाद्यवयवतानिरूपकत्व स्व-विशिष्टोद्देश्यतानिरूपितविधेयताश्रयीभूतलिङ्गबोधकप्रत्ययनिष्ठचरमावयवतानिरूप-कत्वोभयसम्बन्धेन सम्बन्धघटकवैशिष्टयन्तु स्वपर्य्याप्तत्व स्वघटितपर्याप्तत्वान्यतर-सम्बन्धेन । समन्वयश्च कुमारशब्दविशिष्टऽकुमारीशब्दः स्वदेन कुमारशब्दस्तदा-द्यवयवकत्त्वस्य स्वपर्याप्तोद्देश्यताघटितसम्बन्धस्य च विद्यमानत्वात्कुमारवृत्ति-कुमारत्त्वस्यारोपेण कुमारीकुमारशब्दयोरुभयोर्ग्रहणन्निर्विवादम् ।

वस्तुतस्तु इयम्परिभाषा स्वरूपग्रहणे प्रातिपदिकविशेषग्रहणे प्रातिपदिकसामान्य-ग्रहणे च प्रवर्त्तते । प्रवृत्तिस्थलत्रयप्रकारः प्रथमोदाहरणम् कुसूलकूप इति स्वरऽ कुसूलबिलम्" इत्यत्रेव कुसूलीबिलमित्यत्रापि भवति । कुम्भश्चकुम्भीचेति "पुमान् स्त्रिये"त्येकशेषेण द्वयो र्ग्रहणेनेदंफलमेवमन्यत्राप्येकशेषः अपरकुम्भीतिकश्चेऽत्रऽ

कुकमी''तिसत्त्वञ्च । द्वितीयोदाहरणञ्च सर्वनाम्नस्तृतीयाचेति, भवत्त्या हेतुना भवत्त्या हेतोरिति तृतीयोदाहरणम् ''सर्वप्रातिपदिकेभ्यः क्विबिति''कृष्णा इवाचरति मालेवाचरति मालाति''शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानमि''तिवार्त्तिके घटघटीग्रहणेनेयमनित्त्या । तेन मद्रराज्ञीत्त्यादौ''राजाह''इतिन टच्, एतदनित्त्यत्त्वप्रपञ्चीभूतैव विभक्तौ लिङ्गविशिष्टाऽग्रहणमितिपरिभाषा वक्ष्यमाणा ।

## अस्मद्गुरवस्तु—

स्वविशिष्टे स्वगतधर्मारोप इत्येव परिभाषार्थः । वैशिष्टयञ्च स्वावयवकत्त्व स्वोद्देश्यकप्रत्ययान्तत्त्वोभयसम्बन्धेन । रमेत्त्यादावदन्तत्त्वारोपेणात इञिति इञ्प्रत्त्ययस्तु नवर्णत्त्वव्याप्यधर्मघटितत्त्वाऽभावात् इत्त्याहुः । अत्र ज्ञापकञ्च''कुमारः श्रमणादिभि''रिति समासविधानार्थं श्रमणादिगणे श्रमणाप्रव्रजितागर्भिणीत्त्यादिस्त्रीलिङ्गपाठः । लिङ्गविशिष्टग्रहणम्विना कुमारशब्दस्य श्रमणादिभिस्सामानाधिकरण्यन्नास्तीति व्यर्थं सज् ज्ञापयतीति सर्वमवदातम् ।

## सूत्रे लिङ्गवचनमतन्त्रम्—

सूत्रघटकशब्दजन्यबोधविषयत्त्वेन तात्पर्यविषयत्त्वं लिङ्गसंख्ययोर्नेति फलितार्थः । ननु लिङ्गाविवक्षायान्तस्याऽपत्त्यमिति सूत्रघटकापत्त्यमित्त्यत्रातोऽमित्त्यम्न स्यात् क्लीबत्त्वाऽभावात् इति चेन्न ? नपुंसकत्त्वशक्तिमतः प्रातिपदिकाददन्तात्परयोस्स्वमोरमित्त्येवार्थं एवञ्चाविवक्षायामपि नपुंसकत्त्वशक्तिमत्तासत्त्वेनाक्षतेः।किञ्च''तस्यापत्त्यमि''त्त्यत्र नपुंसकत्त्वस्य प्रकारतया भानेऽपि तत्तत्प्रत्त्ययपदशक्यतावच्छेदकतयाऽतन्त्रमित्त्यर्थः।घटो द्रव्यपदवाच्यइत्यादौ घटत्त्वाऽविवक्षावत् ।

अविवक्षा च न्यायसिद्धा, किञ्चिल्लिङ्गम्विना निर्देशस्याशक्यत्वान्नान्तरीयकतया लिङ्गविशिष्टस्योपादानात् धान्यपलालन्यायात । अन्नार्थी शालिकलापं सपलालं सतुषमाहरति नान्तरीयकत्त्वात् । ''अर्द्धन्नपुंसक'' मित्त्यत्र नपुंसकग्रहणं ज्ञापकम् । अर्द्धमिति क्लीवनिर्देशादेव तत्प्रतीतेः । अत एव ''स्वरितात्संहितायामि''तिभाष्ये नात्र बहुवचनेन निर्देशस्तन्त्रम् कथम्पुनस्तेनैव नामनिर्देशः क्रियते यच्चातन्त्रं स्यात् तत्कारी च भवान् तद्द्वेषी नान्तरीयकत्त्वाद्बहुवचनेन निर्देशः कर्त्तव्य इतिभाष्यं सङ्गच्छत इत्त्यलम् ।

## नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः—

अत्र नञिवयुक्तमन्यत्सदृशाधिकरणे इति पाठः । अन्यत् इति अन्यस्मिन्नि-

त्यर्थेऽव्ययम् । नञ्युक्तमिवयुक्तञ्च अन्यस्मिन्सदृशेऽधिकरणे अर्थे वर्त्तते । तथाहि अर्थबोधो भवतीत्यर्थः । नञ् समभिव्याहृतमिवसमभिव्याहृतञ्च पदं स्वविशिष्टबोधकम् । वैशिष्ट्यञ्च स्वसादृश्यस्वभिन्नत्वोभयसम्बन्धेन । इवपदनञ्पदयोस्तात्पर्यग्राहकत्वात् ।

तत्सादृश्यमभावश्च तदन्यत्वन्तदल्पता ।
अप्राशस्त्यम्विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥

इति कारिकायां सादृश्यभेदयोः पार्थक्येनोपादानात्सादृश्यविशिष्टभेदः भेदविशिष्टं सादृश्यमिति चार्थः । लौकिकोऽयन्न्यायः नञ् सूत्रभाष्ये कैयटे च "आरोपितत्वन्नञ्द्योत्यन्नह्यसोऽप्यतिसर्ववदि"त्युक्त्या अब्राह्मण इत्यादौ ब्राह्मणभिन्नक्षत्रियादेरभिधानस्योक्तत्वात् । नच कथं क्षत्रियादेर्भानन्तत्पदनिष्ठवृत्तिज्ञानाधीनोपस्थित्यभावादिति वाच्यम् ? अद्वैतवादिमते शुक्तौ रजतमित्यत्र शुक्त्यपेक्षया रजतस्य भेदेनानिर्वचनीयस्योत्पत्त्या तस्मिन् ज्ञाने रजतशब्दप्रयोगवत् क्षत्रियादावपि ब्राह्मणत्वारोपे क्षत्रियादिपदप्रयोगे विप्रतिपत्तिविरहात् । एवम्विधारोपस्सादृश्यव्याप्यधर्मस्सादृश्यार्थलभ्य इति । एतदुदाहरणम् "भृशादिभ्यो भुवी"तिनामधातुस्थम् । अन्यसदृशेत्युक्त्या सादृश्यलक्षणे तद्भिन्नत्वे सतीति निवेशो नास्ति । सादृश्यनिरूपके चन्द्रादावतिव्याप्तिवारणाय तद्भिन्नत्वे सतीति केचित् । वस्तुतस्तु अनुयोगितासम्बन्धेन तद्गतभूयोधर्मवत्वं सादृश्यमिति युक्तंल्लक्षणमितोऽधिकम्व्याख्यानं सिद्धान्तकौमुदीटीकायां कौमुदीकल्पलतिकायामस्मत्कृतायान्द्रष्टव्यम् ।

गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक्सुबुत्पत्तेः ।

पञ्चकम्प्रातिपदिकार्थः, पञ्चकन्धात्वर्थः । स्वार्थद्रव्यलिङ्गसंख्याकारकभेदात् क्रियात्वक्रियाकालकारकसंख्याभेदात् । येन प्रकारेणोपस्थितिस्तेनैव क्रमेणार्थज्ञानम् तेनैव क्रमेण तत्तदर्थनिमित्तककार्योत्पत्तिरिति नियमात्प्राक्सुबुत्पत्तेस्स्त्रीत्वनिमित्तकटापि ततस्सुबुत्पत्तिसमासादौ अदन्तत्वाऽभावात् ङीषोऽप्रवृत्तिरिति गतिकारकोपपदानामित्यस्योपादानम् । यदि तु कृदन्तेन समासस्तदा टाबुत्पत्तेः पूर्वमेव समाससत्वात् जातिवाच्यतासत्त्वान्ङीप् सिद्ध्यति ।

ननूपसञ्जनिष्यमाणन्यायेन उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसम्भावनायामुत्सर्गशास्त्रं न प्रवर्त्तत इति तात्पर्याभिधायकेन टापः पूर्वमप्रवृत्तिर्यदि टाप् न स्यात्तर्हि ङीष्स्यादिति सम्भावनायास्सत्वात् इति चेन्न ?

भविष्यदपवादविषयातिरिक्तत्वेनैव सङ्कोच इदमेवैतन्न्यायतात्पर्यम्। व्याघ्रशब्दस्य जातिवाचकत्वेन ङीष्विषयातिरिक्तत्वेनैव सङ्कोचः। "उपपदमतिङि"ति अतिङ्ग्रहणं ज्ञापकम्। एकदेशानुमत्या कारकांशे प्राचीनव्याकरणस्य सिद्धेयमिति शेखरस्य वैथाऽनुपपन्नः "कर्तृकरणे कृता बहुलमि"त्यत्र कृद्ग्रहणस्य ज्ञापकत्वसम्भवात्। पुनश्शेखरः। षष्ठीसमासादुपपदसमासो विप्रतिषेधेन। विभाषा षष्ठीसमासः। यदा न षष्ठीसमासस्तदोपपदसमास इति तत्प्रत्याख्यानञ्चेति च सर्वथैवानुपपन्नः। उपपदसमासनियमस्य वार्त्तिककारोक्तप्रयोजनमात्रप्रत्याख्यानपरत्वात् कृदन्तेन सह षष्ठीसमासस्यापि प्रवृत्तिरत्रार्थे भाष्यमपि न प्रमाणीभूतम्। अत एव कैयटेन प्रयोजनाऽभावाद्विप्रतिषेधो न पठितव्य इत्येवाभिप्रायो भाष्यस्य वर्णितः। किञ्च यदि षष्ठीसमासोऽपि सुबुत्पत्तेः प्राक्स्यात्तर्हि दध्नस्सेचौ दधिसेचाविस्यत्र "सात्पदाद्यो"रित्यनेन पदत्वाभावात्षत्वनिषेधो न स्यात्। उपपदसमासे तु सुबुत्पत्तेः प्राक्समासविधानात्सेचूशब्दस्य पदत्वाऽभावात्सकारस्य पदादित्वाऽभावात् अनभिधानाच्च सोपपदाद् विजभाव इत्यादिभाष्यमु"त्तरपदत्वे चापदादौ प्रत्ययलक्षणप्रतिषेधः" इत्यत्रत्यञ्चिविरुद्धं स्याच्चेति।

कारकांशे कृद्ग्रहणम्प्रमाणम्। बहुलग्रहणात् क्वचिन्न भवति धनक्रीतेति। अजादिगणे पाठेन सिद्धेऽपि प्रमाणाऽऽभावात् तत्र पाठस्याऽकर्त्तव्यत्वात्। "क्रीतात्करणपूर्वा"दितिसूत्रञ्चयथं सत्कारकांशे ज्ञापकमित्यपि। अनित्यत्वे प्रमाणञ्च "अम्बाम्बगोभूमिसव्यापेति"सूत्रे गोभूमिग्रहणम्, सुबुत्पत्तेः पूर्वंसमासे"सात्पदाद्यो"रित्यस्याऽप्राप्त्या "आदेशप्रत्यययो"रितिषत्वेन सिद्धेस्तस्य वैयर्थ्यंप्रसङ्गात्। दधिसेचाविस्यादौ सुबुत्पत्तेः पूर्वंसमासे तत्र षत्वाऽभावाय पदादादिरिति पञ्चमीसमासस्यावश्यकतया गोष्ठ इत्यादिष्वपि षत्वनिषेधापत्त्या षत्वविधानार्थं गोभूमिग्रहणमिति। केचित्तु बहुलग्रहणमेव नित्यत्वे ज्ञापकम्।

## साम्प्रतिकाऽभावे भूतपूर्वगतिः।

तत्तदारम्भसामर्थ्यात् अयन्न्यायस्सिद्धः। गोमानिवाचरतीति नामधातुप्रकृतिकक्विपि गोमत् शब्दस्तस्मा"दुगितश्चे"तिङीप्स्यादतः परिभाषावश्यकता इत्यलम्।

## बहुव्रीहौ तद्गुणसम्विज्ञानमपि—

तद्गुणोऽतद्गुणश्चैव बहुव्रीहिर्द्विधा मतः।

लम्बकर्णश्च काणोटो हट्टसागरपुरुषः ॥

इति तस्य गुणस्य वर्त्तिपदार्थस्य सम्यक्प्रकारेण विज्ञानं कार्यसम्बन्ध इति। अत्र संयोगसमवायान्यतरसम्बन्धेन वर्त्तिपदार्थोऽन्यपदार्थविशेषणम् तत्र तद्गुणसंविज्ञानम्। अन्यत्र स्थले तु अतद्गुणसंविज्ञानम्। आद्योदाहरणम् लम्बकर्णमानयेत्यादि। हट्टसागर इत्यन्तोदाहरणम्।

तरुणवत्सां गान्ददाति दृढसेनो राजा युध्यत इत्यादौ जन्यजनकस्वस्वामिभावसम्बन्धेऽपि तद्गुणसंविज्ञानम्। "सर्वादीनि सर्वनामानी"तिसूत्रेण सर्वशब्दस्य सर्वनामसंज्ञा "जक्षित्यादयः षडि"तिअभ्यस्तसंज्ञा जक्ष् इत्यस्य। अत्रादिशब्दस्य पूर्ववाचित्वान्निरूप्यनिरूपकभावसम्बन्धः। प्रकृततात्पर्यानुरोधेन विवक्षयैव तद्गुणाऽतद्गुणज्ञानसिद्धौ प्राय ऽपदोपादानन्निरर्थकं शेखरकृताम्। संयोगसम्बन्धस्थले चित्रवाससमानय लोहितोष्णीषा ऋत्विज ऽप्रचरन्तीत्यादौ भाष्ये संयोगसम्बन्धदर्शनात्तस्य संयोगस्यानुपादानमपि शेखरकृतामनभिज्ञताऽस्त्येवेत्यलम्।

चानुकृष्टन्नोत्तरत्र।

चकारेणानुवर्त्तमानम्पदमुत्तरत्र सम्बद्धं न भवतीत्यर्थः। "वदस्सुपि क्यप् चे"तिक्यपो "भुवो भावे"इत्यत्रानुवृत्ति ऽपरन्तु तत्रैव सूत्रे चकारेणानुकृष्टस्य यत्प्रत्ययस्य "भुवो भावे" इत्यत्र नानुवृत्तिरेनया निषेधात्। अत एव ब्रह्मभूयमिति प्रयोगे गुणो न। चकारो द्विविधः विधेयघटितसूत्राऽव्यवहितसूत्रस्थः, व्यवहितसूत्रस्थश्च। तत्र व्यवहितसूत्रस्थचकारे इयम्परिभाषा प्रवर्त्तते। विधेयघटितसूत्राव्यवहितसूत्रस्थचकारे तु नेयम्प्रवर्त्तते। तेन "तृतीया च होश्छन्दसी"तिसूत्रं "कर्मणि द्वितीये"तिविधेयघटितसूत्राद्व्यवहितम्। तस्मिन् चकारे एतस्या ऽपरिभाषाया अप्रवृत्त्या चेनानुकृष्टद्वितीयाया "अन्तराऽन्तरेणे"त्यत्र सम्बन्धः।

एवं सर्वे चकारा ऽप्रत्याख्यायन्ते इति "लुटि च क्लृप" इति सूत्रस्थभाष्येण "स्वरितेनाधिकार" इति सूत्रबलेन व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इत्यर्थकेन सिद्धे इयम्परिभाषा न कर्त्तव्या।

वस्तुतस्तु अनुवृत्त्यर्थकसकलचकारप्रत्याख्यानपरकं भाष्यमव्यवहितसूत्रस्थचकारविषयकम्। परिभाषा तु व्यवहितसूत्रस्थचकारविषयिणी न विरुणद्धि भाष्येण। एवमव्यवहितसूत्रस्थचकारविषयक "कुलिजाल्लुक् खौ चे"ति भाष्येणाऽपि न विरुणद्धि। केचित्तु—व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्णये सम्पन्ने इयन्न का-

र्थ्येत्यलम् ।

स्वरविधौ व्यञ्जनमविद्यमानवत् ।

अस्याः फलन्तु "समासस्ये"त्यन्तोदात्तो राजपुरुष इत्यजन्त इव राजदृष-दिति हलन्तसमासेऽपि प्रवृत्तिरूपम् ।

ज्ञापकञ्च "यतोऽनाव" इतिसूत्रे नौप्रतिषेध एव । भाष्ये तु परिभाषाद्वयञ्च पठितमिति शेखरप्रकारः कथमिति विचार्य्यम् ।

हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ।

स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके विधौ क्रियमाणे लक्ष्यस्थव्यञ्जनानाम-विद्यमानवद्भाव इत्यर्थः ।

निरनुबन्धकग्रहणे न सानुबन्धकस्य ।

"पूरणगुणे"तिसमासनिषेधस्तव्यप्रत्ययान्त एव भवतीति । तव्यत्प्रत्ययान्ते तु समासो भवतीति स्वकर्त्तव्यम् । एवं "दिव औदि"त्यौत्वन्दिवेर्डिवि"रितिविहित प्रातिपदिकस्य, नतु दिवु क्रीडाविजिगीषेति धातोः ।

तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्य ।

कार्यमितिण्यत्प्रत्ययान्ते "यतोऽनाव" इत्युदात्तत्वन्नानया भवतीति फलम् । "वामदेवाड् ड्यड्ड्यावि"तिडित्करणमनयोर्ज्ञापकम् शेखरस्थम् अवलोक्यम् ।

क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते—

प्रत्ययेत्यर्थम्बोधयतीति प्रत्ययः, स्वीयमर्थम्प्रत्याययतीति प्रत्यय इत्य-न्वर्थसंज्ञाविज्ञानार्थम्प्रत्यय इति महासंज्ञाकरणम् । यस्मिन्प्रत्यये शास्त्रेणवि-हिते कोऽपि विशिष्य नोच्यतेऽर्थस्तत्रार्थवत्त्वजिज्ञासायाम्प्रत्यासत्तिन्यायेनोपस्थि-तत्त्वात्प्रकृत्यर्थे नैवार्थवत्त्वम् । लिङ्गसंख्ययोरपि प्रकृतावन्वयः । प्रमाणसतत्त्रे प्रकृत्यर्थलिङ्गसंख्याभिन्नसंख्याबोधकत्त्वमेतदर्थमेवं क्वचित्पदोपादानम् । अत्यन्त-स्वार्थिकस्थले यावक इत्यादौ ।

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इतिवलेन करूपशब्दस्य यावरूपशब्दस्य खण्डशक्त्योपस्थितस्य विशेषणतास-म्बन्धेनान्वयेन विभिन्नरूपतया प्रकृत्यर्थप्रत्ययार्थयोरभेदान्वयेनैकार्थीभावसत्त्वा-त्प्रत्ययविधाने न क्षतिः । "णचस्स्त्रियामञि"ति सूत्रे स्त्रीग्रहणं ज्ञापकम् । फलञ्च

कुटीर इत्यत्र पुंस्त्वसिद्धिः ।

### समासान्तविधिरनित्यः—

प्रते ऽ परीभूतास्तत्पुरुषघटका अंश्वादयोऽन्तोदात्ता इत्यर्थकेन "प्रतेरंश्वादयस्तत्पुरुषे" प्रतिराज इत्यत्र टिलोपे कृते एकदेशविकृतन्यायेन राजनूरूपत्त्वात् टचोऽकारस्य चित्त्वादेवोदात्तत्वसिद्धे राजनूशब्दो अंश्वादिगणे व्यर्थस्सन् ज्ञापक इत्याशयः । फलञ्च सुपथी नगरीत्यादौ कवभावः ।

### सन्निपातलक्षणो विधिरनिमित्तन्तद्विघातस्य—

सन्निपातो द्वयोसम्बन्धःस लक्षणन्निमित्तं यस्य सःतद्विघातस्य अनिमित्तम् । ययोर्द्वयोस्सम्बन्धन्निमित्तीकृत्य यो विधिरुत्पन्नः स तयोस्सम्बन्धन्न विहन्तीत्याशयः । अतिजरैरित्यत्र जरसादेशो न, उपजोव्यविरोधो न न्याय्यः । उपजीवयतीत्युपजीव्यः उपजीवतीत्युपजीवकः । ण्यन्तात्कर्त्तरि वाहुलकात् यत । शतानि सहस्राणीत्यादौ नुमि "ष्णान्ताः षडि"तिषट्संज्ञाऽभाव ऽ फलम् ।

अत्र ज्ञापकम् "वामि"डिति ह्रस्वश्चे"तिपृथग्योगकरणम् । इयम्परिभाषा यदि न स्यात्तर्हि "वाचि ह्रस्वश्चे"तिसूत्रमब्रूयात् । ज्ञापितायाम्परिभाषायान्तु श्रीणामित्यत्राजादिसम्बन्धन्निमित्तीकृत्य नदीसंज्ञा या प्रवृत्ता अजादित्वविघातकनुटोऽनिमित्तं स्यादतो"वाऽमी"तिपृथग् योगस्सङ्गच्छते ।

केचित्तु सुष्ठु मतिर्ययोस्सुमती इत्यत्र नदीत्वादन्तवर्त्तिविभक्त्या "नद्यृतश्चे"तिकवापत्तेरेवञ्च भाष्यमेव प्रमाणम् । नच "क्रमाय क्रमण"इतिनिर्देशोऽनित्यतायां ज्ञापक इति वाच्यम् ? यञीति यकारेण प्रत्याहाराश्रयगलामथ्यांत् दीर्घसिद्धौ अयुक्तत्वात् । इतोऽन्यत्र प्रवृत्तिरेव दोषा ऽ खल्वपि साकल्येन परिगणिता इतिशेखरोऽनुपपन्नः । वाभ्रवीयाःमाण्डवीया इत्यादावपरिगणितस्थलेऽपि सन्निपातपरिभाषाया अप्रवृत्तिदर्शनात् । अत एवा"च ऽ परस्मिन्निति"सूत्रे वाभ्रवीया इति

---

"न तिसृ चतसृ"इतिसूत्रं सन्निपातपरिभाषाज्ञापकञ्च । सन्निपातपरिभाषाऽभावे तिसृनामिति दशायां ङोपि दीर्घाऽप्राप्तया "न तिसृ चतसृ"इतिव्यर्थं सत्परिभाषां ज्ञापयतीति । परिभाषायां ज्ञापितायान्तु विभक्त्यव्यवहितपूर्वत्वसन्निपातेन जातस्य तिस्रादेशस्य तद्विघातकङीपम्प्रति अनिमित्तत्वान्न ङोवतो दीर्घवारणाय सार्थकम् । नच "नःषट्स्वस्रादिभ्य"इतिनिषेधान्न ङीबिति वाच्यम् ? स्वस्रादिगणे तिसृचतसृपाठस्याऽनार्षत्वात् भाष्यानुक्तत्वादित्याशयः ।

भाष्यप्रतीकमादाय सन्निपातपरिभाषाया अनित्यत्वेन यशब्दसन्निपातनिमित्तो वान्तादेशो यलोपनिमित्ततां प्रतिपद्यत इति कैयटेनोक्तम् ।

नच दोषा≍खल्वपीतिभाष्यमनुपपन्नमिति वाच्यम् ? दोषाल्पत्वाभिप्राय-मिति तात्पर्यात् । "नयासयो"रिति निर्देशोऽनित्यताज्ञापकः । नच सन्निपात-विघातकम्प्रति निमित्तत्वाऽभावेऽपि उद्देश्यतावच्छेदकावच्छिन्नज्ञानाच्छास्त्राणा-म्प्रवृत्तिर्भविष्यत्येवेति वाच्यम् ? स्वविधेयघटितस्साधुरित्त्ये"चेको यणची"-त्त्यादिशास्त्राणामर्थात् । नच समासे सुपो लुकि "सुपो धातु प्रातिपदिकयो"रिति सुधी उपास्य इत्त्यस्य साधुत्त्वबोधनाद् यण्रहितस्याऽपि प्रयोगस्स्यादिति वा-च्यम् ? अत्र गुरवः शास्त्राणां स्वविधेयघटित≍पुण्यजनकः स्वविधेयाऽघटितः स्वोद्देश्यतावच्छेदकावच्छिन्न≍पापजनक इति व्यापारद्वयम्भवति । सुधी उपास्य इत्त्यस्याऽपरिनिष्ठितत्त्वात्प्रयोगाऽभावात् "अपदन्न प्रयुञ्जीतेति"भाष्यात् ।

सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ।

अत्र ज्ञापकम् "बिल्वकादिभ्यश्छस्ये"तिसूत्रे छग्रहणम् । फलञ्च पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः अणो लुक् ङीषो लुक् तत्सन्नियुक्तानुको निवृत्तिरित्यलम् ।

ताच्छीलिके णेऽणूकृतानि भवन्ति ।

ज्ञापकञ्च "कार्मस्ताच्छील्य"इतिनिपातनमन्यथा "अनि"तिप्रकृतिभावाऽप्रा-प्त्या "नस्तद्धित"इतिटिलोपेन सिद्धेः । चौरीति फलम् ।

धातो≍कार्यमुच्यमानन्तत्प्रत्यये भवति—

धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्य्यन्तत्प्रत्यये धातुत्वावच्छिन्नोद्दे-श्यतानिरूपितविधेयताश्रये प्रत्यये भवतीत्त्यर्थः । ज्ञापकं "दाण्डिनायनभ्रौणहत्त्ये"-ति तत्त्वनिपातनम् । फलञ्च कंसपरिमृड्भ्यामित्यादौ "मृजेर्वृद्धि"रित्त्यस्याऽ-प्रवृत्तिरूपम् ।

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते—

ज्ञापकं"त्यदादिषु"नेदमदसोरको"रित्त्यत्राकग्रहणम् । फलञ्च सर्वकैः उच्चकैः, इयञ्च स्थानिवत्सूत्रेण गतार्थेति "सर्वे सर्वपदादेशा" इतिवचनात् । एवम्विधादेशग्रहणे-ऽक इतिप्रतिषेधो ज्ञापक इति यदागमपरिभाषायाम्बिस्पष्टमुक्तम् ।

लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्य—

अत्र ज्ञापकम् "स्वरतिसूती"तिशास्त्रे सूतिसूयत्यो≍पृथङ् निर्देशोऽन्यथा

ञूङि तिसानुबन्धकनिर्देशेन ङूप्रेरण इति तौदादिकनिवृत्तिसिद्धौ पार्थक्येनोपादानव्यर्थं स्यात्। फलञ्च "गातिस्थे"तिसूत्रे पिबतेर्ग्रहणमेव नतु लुग्विकरणपातेः। नच कण्ठरवेणेयम्भाष्ये न पठितेति वाच्यम् ? कैयटाद्युक्तत्वेन सप्रमाणत्वात्।

**प्रकृतिग्रहणे ण्यधिकस्याऽपि ग्रहणं कुत्वविषये भवति—**

ज्ञापकञ्च "हेरचङी"ति सूत्रेऽचङीतिप्रतिषेध एव। अत एव "हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वादि"ति वार्त्तिकं सङ्गच्छते। फलञ्च प्रजिघाययिषतीति।

**अङ्गवृत्ते पुनर्वृत्तावविधिः।**

अङ्गे अङ्गाधिकारीये कस्मिँश्चित्कार्ये कृते अन्यत् अङ्गाधिकारीयन्न भवतीत्यर्थः। ज्ञापकञ्च "ज्यादादीयस"इतिसूत्रे आद्विधानम्। अन्यथा "बहोर्लोप"इत्यतो लोपग्रहणमनुवृत्त्य ज्यात्परस्य ईयसः "आदेः परस्ये"ति ईकारलोपविधानेन "अकृत्सार्वधातुकयो"रितिदीर्घे ज्यायानिति सिद्धेस्तस्य वैयर्थ्यात्। द्वयोरितिनिर्देशादनित्यता, अन्यथा त्यदाद्यत्वे "ओसिचे"ति न स्यात्। पिबादेशस्यादन्तत्वेन फलाऽभावात्पिबतीति सिद्धौ नेयम्परिभाषा कर्त्तव्येति।

**संज्ञापूर्वको विधिरनित्यः—**

"आर्गुण" इत्यत्र "ओरोत्"इति वक्तव्ये गुणग्रहणम्। ज्ञापकम्। फलञ्च स्वायम्भुवमित्यत्र गुणाऽभावः।

**आगमशास्त्रमनित्यम्—**

ज्ञापकञ्च "निलोडित्त्येव ।सद्धे आ।नग्रहणात्। फलञ्च सागरन्तर्तुकामस्येत्यत्रेडभावः। "स्तोःश्चुना श्चु"रिति सूत्रे स्तोरित्यत्र नुमभावो ज्ञापकः।

नच परिभाषायां "घोर्लोपो लेटिवे"तिसूत्रे वाग्रहणप्रत्याख्यानभाष्यासङ्गतिरनयाऽऽगमाप्रवृत्तौ दधादितिरूपासिद्ध्या वाग्रहणस्यावश्यकत्वात् इति वाच्यम् ? औत्सर्गिकप्रवृत्तिमनुसृत्य भाष्योपपत्तेः। अत एव रूपसिद्ध्यर्थंम्वाग्रहणन्न कार्यमिति कैयटादयः। वस्तुतस्तु वाग्रहणमेतत्परिभाषाज्ञापकमेव।

**गणकार्यमनित्यम्—**

ज्ञापकञ्च "तनादिकृञ्भ्य" इति सूत्रे कृञ्ग्रहणम्। तेन न विश्वसेदविश्वस्तम् इत्यत्र शपो लुगभावो "दतो येय" इति इय्।

**अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्—**

ज्ञापकञ्च चक्षिङो ङित्करणम्, अनुदात्तेत्त्वात्सिद्धेः। फलञ्च स्फायन्निर्मोक इत्यत्र शानजभावः।

नञ्घटितमनित्यम्—

ज्ञापकञ्च "अनुदात्तम्पदमेकवर्ज"मित्यत्र वर्जग्रहणम्। विनार्थकनञा सिद्धेः। विमानना सुभ्रु पितुर्गृहे कुत इत्यादौ "नेयङुवङि"त्यस्याऽप्रवृत्तिः। अत्र शेखरानुपपत्तयः, तत्र च एतासां परिभाषाणान्न प्रयोजनम् फलाभावाद् भाष्यानुक्तत्वाच्चेति। व्याकरणमिदं वस्तुतस्स्मृतिरूपम्प्रमाणम्। पूर्वव्याकरणस्मृतिर्मूलमित्याशयः। तदाह हरदत्तः गवादिशब्दानामनादित्वमेव साधुत्वं गव्यादीनान्तु वाचकाशक्तिजत्वादसाधुत्वम् प्रसाध्य कथम्पुनराचार्येण पाणिनिनाऽवगतम् एते साधव इति। "आपिशलेन व्याकरणेन" आपिशलिना तर्हि केनावगतम् "ततः पूर्वेण व्याकरणेन" यद्येवमन्धपरम्परा स्यादित्याशङ्क्य नैष दोषः, सर्वे एव हि स्वे स्वे काले गाव्यादिभ्यो विभक्तान् गवादिशब्दान्प्रत्यक्षेणोपलभन्ते पूर्वकालसत्ताञ्च पूर्वव्याकरणतोऽध्यवस्यन्ति तेऽपि स्वकालसत्तां प्रत्यक्षेण पूर्वकालसत्ताञ्च पूर्वव्याकरणादिति नान्धपरम्परेति व्याकरणस्य समूलत्वम्। अत एव—

स्मृतेःस्मृत्यन्तरं मूलं साधुरूपनिरूपणे।
प्रत्यक्षव्यवधानाच्च नान्धवाक्यसमानता॥

इति। किञ्च आदौ शेखरकृतोक्तप्राचीनवैयाकरणतन्त्रे वाचनिकानीति भाष्यवार्त्तिकानुक्तान्यपि प्राचीनव्याकरणसिद्धानि व्याख्यातृपरम्परयाऽभियुक्तैस्समर्थमाणानि सौत्रज्ञापकानुमोदितानि नाप्रमाणान्यत एव "मणीवादीनाम्प्रतिषेधो वक्तव्य"इत्यस्य मुनित्रयानुक्तत्वेऽपि कैयटादिभिः प्रमाणीकृतत्वात्। अत एव च प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुखो महता प्रयत्नेन सूत्राणि प्रणयतिस्मेति सामान्यरूपेणाचार्यपदोपादानात्सर्वेषामेतच्छास्त्रीयविषयसंस्कारकाणाम्प्रामाण्यम्। न तु त्रयाणामेव। प्रयोजनान्तरमभियुक्तैः कथ्यमानं यदि भाष्यवार्त्तिकाभ्यान्न विरुध्यते तदा तदपि प्रमाणमेव। किञ्च प्रत्याख्यानमदृष्टपारायणादौ विनियोग इति कथनमपि शेखरोयन्न सयुक्तिकम् अदृष्टं हि वेदैकप्रमाणकम्। नच ईदृशानि पाणिनीयानि वाक्यानि पठेत् इति वेदोऽस्ति, पाणिनेस्सार्वज्ञेन ततः पूर्वमेतद्वेदस्याऽबोधकत्वप्रसङ्गात्। नच "ब्राह्मणेन निष्कारणो धर्मःषडङ्गो वेदोऽध्येयो ज्ञेयश्चे"ति श्रुतिः प्रमाणम् इति वाच्यम्? सा श्रुतिर्दृष्टप्रयोजनेति तात्पर्यावधारणात् "यत्र दृष्टं न लभ्येत स्यात्तत्राऽदृष्टकल्पने"तिन्यात। युक्तिबलसिद्धो न्यायापेतश्चार्थोऽङ्गीक्रियतेऽनेकः। अत एव न कल्प-

श्चिद्ग्रन्थकृतो विपरीतलिखनं युक्तिबलाद् वस्तुसिद्धौ बाधकमिति गदाधरभट्टाचार्येणाऽप्युक्तम्। किञ्च "संज्ञापूर्वको विधिरि"त्यस्यास्स्वायम्भुवमिति फलं लभ्यमानमसाधुत्वादेव न योग्यम्। तन्न ? स्वायम्भुवव्रमलङ्कृरय मनुस्स्वायम्भुवोऽब्रवीत इत्याद्यनेकप्रयोगाणां कथङ्कारं साधुत्वम्। तथा च पूर्वव्याकरणनिश्चितानां युक्तिबलसिद्धानां लक्ष्यसाधिकानामेतासामुक्तषट्परिभाषाणामावश्यकताऽस्त्येवेत्यशेषाद्रिभट्टानामप्याशयः।

अत्र केचित्—

"गणकार्यमनित्यमि"त्यस्य न विश्वसेदविश्वस्तमिति न फलम्, "विष्वग् विश्वक् स्मृतम्बुधै"रितिद्विरूपकोशः विषु इति विशु इति 'अनेकार्थकमव्ययम्। विश्वसेदित्यत्र विशु असेदिति पदच्छेदः। अस् गतिदीप्त्यादानेषु इतिभौवादिकाद्धातो रूपम्। यणि रूपसिद्धे किम्फलमिति विचार्य्यम्।

आतिदेशिकमनित्यम्—

सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान्।

अत्र ज्ञापकं "लोटो लङ्वदि"ति अतिदेशः। अन्यथा "इलोडि"त्येव सिद्धेः। तेन जुहुस्त्वित्यत्र जुस् नेति।

सर्वविध्यपेक्षया लोपविधेर्बलवत्त्वे "नाल्लोपो"त्यत्र प्रत्याहाराश्रयणं ज्ञापकम्। अन्यथा पूर्वमवृद्धौ सत्यामकारातिरिक्तस्याको लोपाऽभावेन तद्वैयर्थ्यात्। इड्विधेर्बलवत्त्वे प्रमाणन्तु "नेड्वशी"त्यत इडित्यनुवर्त्तमाने "आर्द्धधातुकस्येडि"तिसूत्रे पुनरिड्ग्रहणम्। एतासाम्परिभाषाणां खण्डनमपि न युक्ततरम्पूर्वव्याकरणनिश्चितत्वात्।

प्रकृतिग्रहणे यङ्लुगन्तस्याऽपि ग्रहणम्—

अत्र ज्ञापकम् जघानेत्यत्र तत्वनिषेधार्थं "हनस्तोऽचिण्णलोरि"त्यत्र णलपर्युदासः। "द्वि प्रयोगो द्विर्वचनं पाष्ठम्" इतिसिद्धान्तानुकूलम्। जुहुधीत्यत्र विधानसामर्थ्याद्धित्वम्। ममङ्थ ननंष्ठ ररब्ध सस्रष्ठ दद्रष्ठ "सृजिदृशोर्झलि"। "रधिजभोरचि" सृजिदृशोर्झल्यमकिति"इत्यादीनि फलानि।

विधौ परिभाषोपतिष्ठते नानुवादे—

परिभाषाप्रवृत्तौ प्रधानलिङ्गं कारणम्। प्राधान्यञ्च विधेयस्यैव सति सम्भवे विधेयबोधकमेव लिङ्गं गृह्यते नोद्देश्यबोधकम्। एवञ्च"मृजेर्वृद्धि"रित्यत्र"को गुणवृद्धी"इत्युपतिष्ठते ननु "वृद्धिर्यस्याचामादि"रित्यादौ। तेन शालीयो मालीय

इत्यादौ वृद्धसंज्ञया "वृद्धाच्छ" इति छस्सिद्ध्यति । ज्ञापकञ्च "ङ्दीघामातल्स्थानः" इतिस्थानेग्रहणमन्यथा "षष्ठीस्थाने योगे"त्युपस्थित्या तल्लाभसम्भवात् । अनित्येयम् "संख्याव्ययादेर्ङीबि"त्यत्रादिग्रहणात् । तद्धि द्विविधोऽनीत्यत्र ङीबर्थम्, अनुवादे परिभाषाया अप्रवृत्तौ "संख्याव्ययादि"तिन्यासेऽपि "तस्मादित्युत्तरस्ये"त्यस्याऽप्रवृत्त्या व्यवहिताऽव्यवहितसाधारण्येन ङीप्प्रवृत्त्या द्विविधोऽनीति रूपसिद्धौ तद् व्यर्थं स्यात् । अनुवादेऽपि परिभाषाप्रवृत्तौ तु द्विविधोऽनीति व्यवहितस्थलेऽपि ङीब्विधानार्थमादिग्रहणम् । आदिग्रहणसत्त्वे "संख्याऽव्ययादे"रिति बहुव्रीहिविशेषणम्—संख्याव्ययादिरूधश्शब्दान्तो यो बहुव्रीहिस्ततो ङीबित्यर्थस्तेन द्विविधोऽनीति सिद्ध्यति ।

अनित्यत्वफलञ्च "अचो रहाभ्या"मित्यस्य अचोऽव्यवहितपराभ्यामित्यर्थस्तेन किव्हल्लयतीत्यादौ वकारादेर्न द्वित्वम् । "अल्लोपोऽन" इत्यादौ एतस्या व्यभिचरितत्वादिति शेखरोऽनुपपन्नः । अनित्यत्वादेवेष्टस्थले परिभाषाया अप्रवृत्तिः-नंतु व्यभिचारः । स्थानसम्बन्धो न परिभाषालभ्यः इत्यपि न शेखरः ? "उरण् रपर" इति सूत्रेण सिद्धन्तु प्रसङ्गे रपरत्वादिति वार्त्तिकव्याख्याने भाष्यकृतोक्तम्, स्थान इत्यनुवर्त्तते स्थानञ्च प्रसङ्गः यद्येवमादेशोऽविशेषितो भवति आदेशश्च विशेषितः कथम् द्वितीयं स्थानग्रहणमनुवर्त्तते तत्रैवमभिसम्बन्धः करिष्यते उः स्थाने इति वदता "विधौ परिभाषोपतिष्ठत" इति परिभाषासूचनात् । कैयटेन स्पष्टीकृतत्वाच्च "षष्ठी स्थान" इति परिभाषालभ्यत्वाऽभावेऽपि "व्याख्यानतो विशेषप्रतिपत्तिरिति" परिभाषालभ्यत्वस्य तस्मिन्नेव सूत्रभाष्ये स्पष्टीकृतत्वाच्च । ज्ञापकत्वसम्भवाच्च । अतो न स्थानेग्रहणं स्पष्टार्थङ्किन्तु ज्ञापकमेव ।

"इको गुणवृद्धी अचश्च" विधीयत इत्यध्याहारमूलक इति कथनमपि न युक्तिसम्बद्धम् ? अध्याहारे गौरवात् । प्रमाणाऽभावाच्च । अन्यत्र नास्या फलमित्यपि न शेखरः सयुक्तिकः ? "क्ङिति चे"तिसूत्रस्य व्यवहितेऽपि निषेधार्थं परिभाषाफलस्य जागरूकत्वात् । अन्यथा औपश्लेषिकाधिकरणसप्तमीत्वात्तस्मिन्निति परिभाषाप्रवृत्तौ अव्यवहित एव स्यात् । "अचः परस्मिन्पूर्वविधा"विति सूत्रस्य व्यवहितपूर्वाजादेशेऽपि स्थानिवद्भावाय फलस्य सत्वादत एव पूर्वत्वञ्चेह व्यवहिताऽव्यवहितसाधारणं गृह्यते स्वरे निषेधाधिकीर्षक इति ग्रन्थस्सङ्गच्छते । अत एव प्रतिदीव्नेत्यत्र "च्छ्वोश्शूडि"त्यूठोऽभावस्तथा च यत्र २ फलन्तत्र २

-द्ध्यनुपतिष्ठते यत्र २ न फलन्तत्र २ प्रवृत्तियोग्यतासत्त्वेऽपि अनित्यत्वान्न प्रवर्त्तते, -त्वस्योक्तप्रकारात्—तथा च परिभाषेयमपि कर्त्तव्यैव नागेशकथनञ्चुथमिति विभा-व्यतां सूरिभिः ।

उपपदविभक्तेः कारकविभक्तिर्बलीयसी—

क्रियानिष्ठविशेष्यतानिरूपितक्रियाकारकभावसम्बन्धावच्छिन्नप्रकारताप्रयोजक-त्वं कारकविभक्तित्वम् । कारकत्वव्याप्यकर्मत्वादिबोधकविभक्तित्वं कारकविभक्ति त्वमिति वा । क्रियान्वयिनि जायमानविभक्तित्वं कारकविभक्तित्वमिति लक्षणेन प्रथमाया अपि कारकविभक्तित्वम् । इयमवाचनिकीति शेखरोऽनुपपन्नः । अस्या न्यायसिद्धत्वात् । सर्वम्वाक्यं सावधारणम्भवतीतिन्यायेन सर्वेषाम्पदानां प्रथमं क्रियायामन्वयः, पश्चात्तद्द्वारकः परस्परसम्बन्ध इति पश्चाद्भवसम्बन्धापेक्षयोपपद-विभक्त्यपेक्षया प्राथमिकक्रियासम्बन्धनिमित्तकविभक्तेरन्तरङ्गत्वेन तस्या एव प्राब-ल्यात् एतन्न्यायमूलिका । न च "यस्य भावेन भावलक्षणमि"ति विहितसप्तम्यपे-क्षया अधिकरणसप्तम्याः प्राबल्यम्भाष्योक्तं विरुद्ध्येतेति वाच्यम् ? "यस्य च भा-वेने"ति अश्रुतलक्षणक्रियापेक्षसप्तम्यपेक्षया श्रुतक्रियामात्रापेक्षाधिकरणसप्तम्या अ-न्तरङ्गत्वेन प्राबल्योपपत्तावविरोधात् । न च नमस्यन्ति देवानित्यत्रैतत्परिभाषया चतुर्थीवारणं भाष्योक्तम्विरुध्येतेति वाच्यम् ? तत्र च नमस्येतिक्यजन्तस्य पूजा-वाचित्वमनुसृत्य द्वितीया कर्मण्युपपादिता, तत्र क्यजन्तार्थक्रियाद्वारक एव नमश्श-ब्दार्थेन सम्बन्ध इति विरोधलेशाऽसम्भवात् । अत एवाग्रे भाष्ये क्यजादीनामेव करणग्रहणानुवृत्त्या क्रियावाचित्वं साधितं सङ्गच्छते । अतो न नमश्शब्दस्य क्रिया-वाचित्वम् शेखरोक्तम् । तथाच न्यायसिद्धैवेयमिति सिद्धम् ।

अत्र गुरवः—

प्रधाननिमित्तकत्वेन कारकविभक्तीनाम्बलवत्वमूलकोऽयन्न्यायः । नमस्यती-त्यादावपकृष्टत्वप्रकारकबोधानुकूलव्यापारात्मकनमस्कारघटकबोधान्वयमात्रं चतुर्थ्यां अपेक्ष्यते, बोधापेक्षया प्रधानीभूतव्यापारनिमित्तकत्वन्द्वितीयायाः, प्रधानीभूतव्या-पारजन्यफलाश्रयस्य कर्मत्वाद् द्वितीया बलवती, कर्मप्रत्ययस्थले कर्मणः प्राधान्ये-ऽपि शाब्दबोधीयविशेष्यतारूपे जन्यत्वेनाऽप्रतीयमानत्वलक्षणप्राधान्यस्य व्यापारे सत्त्वेनाक्षतेरित्याहुः । अन्यच्छेखरमूले स्पष्टम् ।

अनन्त्यविकारेऽन्त्यसदेशस्य—

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः ।

अत्रान्त्यसदेशत्वमन्त्यवर्णतद्वर्णयोरितराऽव्यवधानेन बोध्यम् । अत एव विद्ध इत्या- द्यर्थं "ग्रसम्प्रसारणे" इति चरितार्थम् । एतत्सर्वंमयुक्तं शेखरीयम् । अन्त्यसदेशत्व- मन्त्यवर्णतद्वर्णयोरव्यवहितत्वमित्यर्थाऽभ्युपगमे अदमुयङित्यत्र तकारस्य दकारस्य च मध्ये रेफस्य व्यवधानात् अदमुयङित्यसिद्धेः । नच रेफस्यैवान्त्यसदेशत्वमिति वाच्यम् ? दकारस्याऽन्त्यसदेशत्वाऽभावेन तत्रैतत्परिभाषाया अप्रवृत्तिप्रसङ्गात् । विद्ध इति परिभाषोदाहरणभाष्यविरोधाच्च । "अनस्तक्षणे"ति फलमपि न ? का- र्यकालपक्षानुरोधेनोपस्थितं यचीति पदं स्वसार्थक्याय अन एव विशेषणम्भवतीति भाष्याभिप्रायवर्णनात्। मिमार्जिषतीति फलमपि न ? प्रतिपदोक्तत्वात् कृतायामेव वृद्धौ अभ्यासह्रस्वप्रवृत्तेः । अदमुयङिति फलमपि न "अदसोऽद्रे ऽपृथङ् मुत्व- ङ्केचिदिच्छन्ति लत्ववदि"तिवचनेन सिद्धमधिकमन्वेष्यम् ।

नाऽनर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे—

आभ्यामित्यादि फलम्, अलोऽन्त्यसूत्रभाष्य इयम्प्रत्याख्यातेति ।

प्रधानाऽप्रधानयोऽप्रधाने कार्यसम्प्रत्ययः—

प्रधानकार्यं सर्वतो बलवदिति न्यायमूलेयम् । फलञ्च ब्राह्मणवत्सा च ब्राह्म- णीवत्सश्चेत्यत्रैकशेषो न ? अप्रधानीभूतब्राह्मणादिपदगतविशेषस्याऽपि सत्त्वात्प्रधा- नमात्रकृतविशेष एवैकशेषप्रवृत्तेः ।

अवयवप्रसिद्धेस्समुदायप्रसिद्धिर्बलीयसी—

रूढिजोपस्थितौ लाघवमूलिकेयम् । अर्थवद्ग्रहणपरिभाषया अर्थे गृह्यमाणे समुदायप्रसिद्ध एवार्थो ग्राह्यः । शीघ्रोपस्थितिकत्वात् स्वस्रादिगणे जननीवाचक- स्यैव ग्रहणम् । परिच्छेत्तृवाचिनस्तु ङीब् भवत्येव मात्रीति । योगजबोधे रूढ्युपस्थि- तिऽप्रतिबन्धिकेति तन्न ? मातृशब्दात्परिच्छेदकर्तृबोधाऽप्रतीतेः । "दीधीवेवीटा" मित्यत्र दीङ्क्षये धीङ् अनादरे वेञ् तन्तुसन्ताने वी गतिव्याप्तीति चतुर्णां न ग्रहण"म्मीनातिमीनोतिदीङां ल्यपि चे"त्यात्वविधानसामर्थ्यादेकांशे प्रमाणसत्त्वे एकदेशानुमत्या कुत्रापि अवयवविभागो न किन्तु दीधीङ् वेवीङोस्समुदितयोर्द्वयो- रेवेत्यास्तांविस्तरः ।

व्यवस्थितविभाषयाऽपि कार्याणि क्रियन्ते—

व्यवस्थितविभाषात्वञ्च शास्त्रे स्वीयोद्देश्यतावच्छेदकव्याप्यो य उभयाऽवृत्ति- धर्मव्यापको धर्मस्तन्निष्ठव्याप्यतानिरूपिता या विधेयतावच्छेदकधर्मावच्छिन्ना व्या- पकता तद्वतोर्भावाऽभावयोर्विधायकत्वम् । "अवङ्स्फोटायनस्ये"त्यत्रोद्देश्यता-

वच्छेदकधर्मोऽजव्यवहितपूर्वत्वविशिष्टगोशब्दत्वम् । तद्व्याप्य उभयावृत्तिधर्म-व्यापको वातायनार्थकत्वविशिष्टाक्षशब्दाव्यवहितपूर्वत्वविशिष्टगोशब्दस्वरूपः त-द्व्यापकत्वं विधेयतावच्छेदकावङ्त्वावच्छिन्नं तद्वदवङ्, तद्विधायकत्वन्तस्येति समन्वयः । फलञ्च गवाक्ष इत्येकरूपम् । तदुक्तम्भाष्ये ।

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।

मिथस्तेन विभाष्यन्ते गवाक्षस्संशितव्रतः ॥

इति लक्ष्यानुसाराद् व्यवस्था ।

## विधिनियमसम्भवे विधिरेव ज्यायान्—

विधिरत्यन्तमप्राप्तौ नियमऽपाक्षिके सति ।

तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ।

इति मीमांसा ।

सोमेन यजेतेति विधिः, व्रीहीनवहन्तीति नियमः । नखेनापि तण्डुलीभूतषवि-मोकऽप्राप्तःमुशलाद्यवघातेनापि तथाच मुशलाद्यवघातसिद्धतण्डुल एव यज्ञार्ह इति नियन्तुं व्रीहीनवहन्तीति । "पञ्च पञ्चनखा भक्ष्या" इति परिसंख्या । क्षुन्निवृत्त्यर्थं पञ्चनखानां भक्षणम्प्राप्तम् । क्षुन्निवृत्तिश्च श्वमांसादिनापि । पञ्चनखा एव भक्ष्या इति परिसंख्या । नियमे गौरवाणि सन्तीति स्पष्टम् ।

## सामान्यातिदेशे विशेषानतिदेशः—

शब्दोपात्तसामान्यधर्मस्य स्वसम्बन्धिकार्योपस्थापकत्वाच्छीघ्रोपस्थितसामा-न्यकार्येणैव निराकाङ्क्षता अस्या बीजम् । "अनल्विधावि" तिसूत्रसामर्थ्यात्स्था-निवत्सूत्रे विशेषोतिदेशोऽपि, भाष्यकैयटप्रमाणाच्च "नल्यपी" तिसामर्थ्यादनित्येयम् ।

## प्रत्ययाऽप्रत्यययोऽप्रत्ययस्यैव ग्रहणम्—

"सनाशंसभिक्ष उः" "वले" इतिसूत्रयोस्सन्धातोःपचाद्यजन्तवलशब्दस्य च न ग्रहणफलम् । "सनभिक्षाशंस उः" अकारेण निर्देशाच्च धातोर्ग्रहणम् । प्रतिपदो-क्तत्वाद् वले इत्यत्र प्रत्ययस्यैव ग्रहणम् "अङ्गस्ये" तिसूत्रप्रत्याख्यानायेयं कण्ठतो यद्यप्युक्ता तथापि प्रयोजनाऽभावान्न कार्येत्यलम् ।

## सहचरितासहचरितयोस्सहचरितस्यैव ग्रहणम्—

फलञ्च "विपराभ्याञ्जे" रित्यत्र उपसर्गविसाहचर्याद् उपसर्गसंज्ञकपराशब्दस्यै-व ग्रहणम् । तेन पराजयति सेनेत्यत्र नात्मनेपदम् । न च पक्षिवाचकस्य तत्र ग्र-हणं शङ्क्यम् ? भाष्यकैयटप्रामाण्यात । इयमनित्या—"द्वित्रिश्चतु" रिति सूत्रे कृ-

स्वोऽर्थग्रहणात्‌ । "अतो "दीधीवेवीटामि"ति सूत्रे इट्‌धातोर्न ग्रहणम्‌ ।

## श्रुतानुमितयोश्श्रुतसम्बन्धो ज्यायान्‌—

"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानाम्पारदौर्बल्यमर्थविप्रकर्षादि"तिजैमिनिन्यायः । नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम्‌ । प्रधानाऽप्रधानन्यायाच्च । "अस्थिदधी"ति सूत्रे नपुंसकत्वस्याङ्गविशेषणत्वात्‌ प्रियसक्थ्ना ब्राह्मणेनेति न सिद्ध्येदत ऽपरिभाषा । सिद्धन्तु विशेषणविशेष्ययोर्यथेष्टत्वादिति भाष्यप्रपञ्चात्मकोऽयम्‌ । अत एव विशेष्यविशेषणभावे कामचारानुज्ञेति शिष्टाः । अत एव "न पदान्ताट्टोरनामि"ति सूत्रेऽन्तग्रहणं सङ्गच्छते ।

## लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्‌—

अत्र प्रतिपदोक्तयोरिति लक्षणेनाभोति समस्तम्‌ यत्पदं गृहीत्वा यत्कार्यमुच्यते तत्पदं तत्पदोच्चारणविहितस्थले भवतीत्यर्थः । प्रतिपदोक्तभिन्नं लक्षणपदग्राह्यम्‌ । प्रतिपदोक्तत्वन्तु यदर्थं विशेषणतया प्रतिपदोक्तत्वम्विवक्षितन्तद्विशिष्टत्वम्‌ । वै० स्ववृत्त्यानुपूर्व्यवच्छिन्नविधेयताश्रयत्व स्वार्थान्वय्यर्थकपदवृत्त्यानुपूर्वीमत्पदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन । "औदि"ति सूत्रे अदोऽभवदित्यत्र प्रगृह्यसंज्ञावारणाय आनुपूर्व्यवच्छिन्नविधेयताश्रयत्वन्त्यक्त्वा वर्णत्वव्याप्यधर्मावच्छिन्नविधेयताश्रयावटितत्वनिवेशः । भू शब्दाज्जसि डवडि मन्द्रोपस्थितिकभुवशब्दग्रहणवारणाय "भुवश्च महाव्याहृते"रिति सूत्रे महाव्याहृतिग्रहणमनित्यत्वे ज्ञापकम्‌ ।

## गामादाग्रहणेष्वविशेषः—

अविशेषो वेति पाठेन प्रणिदापयतीत्यादौ दोषाऽभावेपि फलान्तरं यदागमपरिभाषायाः ।

अत्र दैप ऽपित्वं ज्ञापकम्‌ । लाक्षणिकत्वादेव दैपो दारूपाग्रहणसिद्धेः । अविशेष इत्युक्त्या निरनुबन्धलुग्विकरणपरिभाषयोर्बाधोऽनया भवति । "गातिस्थे"ति सूत्रे "इण्पिबत्योर्ग्रहणं कर्त्तव्यमि"तिबलेन इणादेशगाग्रहणम्‌ ।

## प्रत्येकम्वाक्यपरिसमाप्तिः क्वचित्समुदायेऽपि—

देवदत्तादयो भोज्यन्तामिति क्रियास्वभावात्प्रत्येकम्परिसमाप्तिः । नाट्यक्रिया तु समुदाये परिसमाप्यते इति कैयटः । प्रत्येकं गुणवृद्धिसंज्ञयोर्विधानम्‌ । संयोगसंज्ञा तु समुदाये, न्यायद्वयमिदं लौकिकम्‌ ।

## अभेदका गुणाः—

अत्र ज्ञापकम् "स्थिदधिसक्थ्यक्ष्णी"ति सूत्र उदात्तग्रहणम् । यदि भेदका गुणा-स्तर्ह्युदात्तोच्चारणेन सिद्धेस्तद्व्यर्थं स्यात्। यद्यप्यद्ध्येतार एकश्रुत्यैवाङ्गानि पठन्तीति सर्वं लिखनमलीकमेव । अस्थ्याद्यनङ्यपि व्याख्यानाद् गम्यमानमुदात्तत्वमविवक्षा-र्थमित्युदात्तग्रहणज्ञापनपरभाष्यविरोधः । किञ्च अस्मिन् शास्त्रे कार्यमात्रमन्यथा प्रयोगे प्राप्ते क्रियते सर्वत्र तदुच्चारणं विवक्षार्थं स्यात । तिसृचतसृ इत्यत्र द्व-न्द्वप्रयुक्तान्तोदात्ते कर्त्तव्ये अन्यथोच्चारणमविवक्षार्थमित्यपि न ? अनङादेशेऽपि "फिषोऽन्त"इत्यन्तोदात्ते कर्त्तव्ये आद्युदात्तोच्चारणं विवक्षार्थं स्यादिति सर्वथा ज्ञापनपरभाष्यविरोधः । एवञ्च कैयटोक्तव्यवस्थैव ज्यायसी । विधेयाणुविषये अप्र-त्यय इति प्रतिषेधात् "मादुपधाया" इति वकारोऽनुनासिको नेति शेखरोऽप्यनुप-पन्नः । स्थान्यनुरोधेन अनुनासिके उच्चारणीय अनुनासिकस्य विवक्षासम्भवात् ।

## बाधकानि एव निपातनानि—

पुराणप्रोक्तेष्विति—पुराणशब्देन पुरातनशब्दस्य बाधः प्राप्त इति पृषोदरा-दित्वान्नेति कैयटः । अबाधकानीति भाष्यविरुद्धम् । अतएव सर्वनामशब्दे णत्वञ्च रघुनाथेत्यनादिसंज्ञा ।

## पर्यन्यवल्लक्षणप्रवृत्तिः—

पर्यन्यो मेघो यथा जलेसमुद्रादीये वर्षति जलरहितभूम्यादौ च, तद्वच्छास्त्रम् । फलमुखतुरिति कौमुद्युक्तम् ।

लक्ष्ये लक्षणं सकृदेवेत्यत्र "ससजुषो"तिसूत्रम्मानमिति न युक्ततरम् ? भाष्य-वचनेन सूत्रैर्यथ्यं सम्पाद्य ज्ञापकत्ववर्णनस्यायुक्तत्वात् । स एवायं सकार इति तत्त्वप्रत्यभिज्ञया तत्र सकारव्यक्तिभेदाऽभावेन पुनर्द्वित्वशास्त्राऽप्रवृत्त्या त्रिसकारकरूपार्थन्तस्यावश्यकत्वाच्च । नच स्थानिसकारादन्य एवादेशसकार इति वाच्यम् ? एवं द्वित्वशास्त्रप्रवृत्तेरविरामप्रसङ्गात् । व्यक्त्यन्तरपदेन वैरूप्यविशिष्ट-व्यक्तेरेव ग्रहणौचित्यात् । "सम्प्रसारणाच्चे"तिसूत्रभाष्ये सम्प्रसारणपूर्वत्वे समा-नाङ्गग्रहणं कर्त्तव्यम् । शवहूर्थमित्यत्र सम्प्रसारणपूर्वत्वं भवति तस्य प्रयोजनमुक्त्वा ( कार्यकृतत्वाद्वा सिद्धमिति प्रतिज्ञाय सकृत् शास्त्रं कृतमिति कृत्वा पुनर्न भवि-ष्यतीत्युपपाद्य विषम उपन्यास ) इत्यादिना तस्मादपरिहार इत्यन्तेन सकृत्कार्यस्य कृतत्वादिति समाधानं दूषितमेव । कैयटोऽपि शास्त्रस्य अस्मिन्विषये प्रवृत्तत्वात्पुन-ःप्रवृत्त्यभाव इति परिहाराभिप्रायमुक्त्वा फलभेदे पुनश्शास्त्रं प्रवर्त्तत एवेति दूष-णग्रन्थाशयमुक्तवान् । "सहिवहोरोदवर्णस्ये"तिवर्णग्रहणमपि अत्रांशे बीजन्तथाहि

वर्णग्रहणम्प्रागेव वृद्धिप्रवृत्त्यर्थम् । यदि आरब्धे कृते "सम्प्रसारणाच्चे"तिसूत्रभा-ष्योक्तरीत्या व्यक्तिभेदात्पुनर्वृद्धिः प्रवृत्ता स्यात्तर्हि प्राक्प्रवृत्तेः प्रयोजनाऽभावाद् व्यर्थमेव तत्स्यात् । यदि च व्यक्तिभेदेऽपि नियमेन सकृदेव शास्त्रप्रवृत्तिस्स्यात्तर्हि "न सम्प्रसारणे सम्प्रसारणम्" इति सूत्रम् "व्यङ्स्सम्प्रसारणमि"ति सूत्रभाष्यञ्च "सम्प्रसारणाच्चे"ति सूत्रस्थभाष्यञ्च "चिणो लुगि"ति सूत्रस्थभाष्यम् "शदे-श्शित" इति सूत्रे अस्तु शब्दान्तरस्याकृत आडिति कृत्वा पुनराड् भविष्यतीति भाष्यञ्च विरुध्येत । एवञ्च प्रमाणाऽभावाद् भाष्यविरोधाच्च लक्ष्ये लक्षणं सकृदेव प्रवर्त्तत इति सर्वथाऽनुपपन्नः ।

स्वीकारपक्षे लक्ष्ये लक्षणं सकृदेवेत्यस्यार्थः । एकस्मिन् स्वीयलक्ष्ये स्वं सकृदेव प्रवर्त्तत इति तात्पर्यम् । वद्व्रजेत्यस्य लक्ष्यम् उद् वह स् तामिति तदभिन्नमेवोद-वोढामिति तत्र चेत्प्रवृत्तं तदभिन्ने तस्मिन् न पुनः प्रवर्त्तते । ननु तत्तत्कालोच्चा-रितस्य भेदात्कथमभेदः । नच लक्ष्ये लक्षणं 'सकृदेव प्रवर्त्तते' चेत् ? राम इति लक्ष्ये लक्षणमर्थवत्सूत्रं प्रवृत्तं पुनः रामाविरयत्र न प्रवर्त्ततेति अथवा राम इत्यत्र प्रवृत्तमर्थवत्सूत्रं सर्व इत्यत्र न प्रवर्त्ततेति वाच्यम् ? तल्लक्ष्ये तल्लक्षणं सकृदेवे-त्यर्थात् । नचैवमपि तच्छब्दस्य बुद्धिविशेषविषयत्वोपलक्षिततत्कर्तृजिज्ञासितधर्मा-वच्छिन्ने शक्तन्तत्पदमिति योजनेऽपि व्यक्तिभेदोऽस्त्येवेति वाच्यम् ? स्वविशिष्टं स्वतो भिन्नञ्च भवति । वैशिष्टयञ्च स्वावटकत्व स्वघटकमात्रोद्देश्यकवि कारातिरिक्त-स्वसम्बन्धेन । स्वविशिष्टाऽघटितस्वसम्बन्धेन ।

स्वपदेन उदवहस्तामिति लक्ष्यम् । तद्विशिष्टमुदवोढामिति ओकारस्य पूर्वलक्ष्यघट-कत्वाऽभावेऽपि द्वितीयसम्बन्धाऽभावात् । वकारे द्वितीयसम्बन्धसत्वेऽपि आद्या-ऽभावात् । एवम्विध उदा तीनो वर्णं उभयसम्बन्धेन । तद्विशिष्टस्तद्घटितत्वात्तद्-भिन्नत्वेन सिद्धिः । यूनःस्त्रिट्स्तु इत्यादिदोषवारणाय ।

तल्लक्षणत्वञ्च—

स्वीयप्रथमप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणसमुदायविशिष्टाऽघटितत्व स्वघटकोद्दे-श्यकप्राप्तिविशिष्टप्राप्तिविषयाऽघटितत्वमित्युभयसम्बन्धेन । प्रथमवै० स्वावकटत्व स्वघटकमात्रोद्देयकविकारातिरिक्तत्वोभयसम्बन्धन । द्वितीयवैशि० स्वभिन्नत्व० स्वानुत्तरकालिकत्व० स्वनिरूपकशास्त्रनिरूपितत्वमिति त्रितयसम्बन्धेन ।

नच यासेत्यादौ एकादेशे काण्ड इतिवृत्तलक्ष्यत्वाऽभावा "त्यदादीनाम"

इति अत्वापत्तिरिति वाच्यम् ? मात्रग्रहणेन स्वोद्देश्यकविभक्त्यनुद्देश्यकत्वं गृह्यते "न धातुलोप"रितिसूत्रनिर्देशेन अनित्यत्वात्। दीव्यतीत्यत्र श्यन् दध्यत्रेत्यत्र द्वित्वे द्वित्वं द्वित्वे द्वित्वमित्यादिधारा तु न ? अनवस्थाऽऽपातात् विकरणविशिष्टे कर्त्रर्थत्वाऽभावेन तदप्राप्तेश्च ।

## निषेधाश्च बलीयांसः—

शेखरोयलेखे विचारः वृद्भ्य इतिबहुवचननिर्देशेन वृतादिषु सर्वेषु "न वृद्भ्यश्चतुर्भ्य"इतिनिषेधेन प्रवर्त्तनीयमेवेति कल्पनेन अन्तरङ्गस्याऽपि विकल्पस्य प्रतिषेधसिद्धेः । अत एव हि चतुर्ग्रहणप्रत्याख्यानपरभाष्ये "कृपेरनन्तरम्वृत्करणात्" इत्ययमर्थः कैयटेन विवृतः । अतो न प्रथमम्प्रयोजनम्, द्वितीयमपि न ? अपौरुषेये हि वाक्ये तात्पर्यस्य शास्त्रैकगम्यतया प्राप्तिम्विना निषेधाऽयोगात् । प्राप्तिश्च शास्त्रातिरिक्तप्रमाणेन असम्भवाप्रापकशास्त्रस्य अप्रामाण्यायोगात्तत्र विकल्पितो मीमांसकैः । विध्युन्मूलनाय प्रवृत्तिरस्या बीजम् ।

अत्यन्तस्वार्थिकप्रत्यये कथम्प्रत्ययत्वम् , प्रत्येति अर्थम्बोधयतीति प्रत्ययः स्वीयमर्थम्प्रत्याययतीति भाष्यञ्चेति प्रश्नः । भाष्यप्रामाण्यात् स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वम्प्रत्ययत्वमिति लक्षणम् । प्रत्यय इतिमहासंज्ञाकरणादर्थजिज्ञासायामन्यानुपस्थितिर्बीजम्।"यावादिभ्यः कन्" गुप्तिज्किद्भ्यःसनि"ति उदाहरणम् ।

## योगविभागादिष्टसिद्धिः—

योगविभागस्य भाष्यमूलकत्वेन लक्ष्यानुरोधकत्वादनिष्टापादनन्निरर्थकमित्याशयः ।

## पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते—

अन्यतरस्याम् विभाषा वेति सूत्रनिर्देशः प्रमाणम् ।

## ज्ञापकसिद्धन्न सर्वत्र—

विद्यमानं सदितरोपस्थापकत्वमुपलक्षणत्वम् । ज्ञापकेतिन्यायस्याऽप्युपलक्षणम् । अनिष्टापादनं यथा न स्यात्तदर्थमयन्न्यायः ।

## पूर्वत्रासिद्धीयमद्वित्वे—

पूर्वत्राऽसिद्धमित्यधिकारमेवं शास्त्रमस्या बीजम् । फलविशेषेऽस्याः प्रवृत्तिः । कृष्णर्द्धिरित्यत्र जश्त्वात्पूर्वम्पश्चाद्वा द्वित्वे रूपे विशेषाऽभावेन तत्र नेयम्प्रवर्तते द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः । "नमु न" इति सूत्रे योगविभागादियं सिद्धा 'योगविभागस्य भाष्यानुक्तत्वेऽपि लक्ष्यानुरोधादियमानीयेति । फलं द्रोग्धा द्रोढेत्यादीनां सिद्धिः । एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृती-

यस्याश्च न भविष्यति। आकृतिर्नाम श्रावणप्रत्यक्षविषयतावच्छेदको धर्मः चरित्रे प्रयोग इत्यर्थः। तेन स्वस्वामिभावसम्बन्धे गवां स्वामीति षष्ठ्या प्रतिपादयितु-मुपक्रान्ते अश्वस्वामित्वप्रतिपादनाय षष्ठ्येव भवति। उपस्थितिलाघवम्मूलम्॥

सम्प्रसारणन्तदाश्रयञ्च कार्यम्बलवत्—

"लिट्यभ्यासस्योभयेषामि"तिसूत्रे उभयेषामित्यस्यार्थमूलेयम्। वच्यादीनां ग्रह्यादीनामनुवृत्त्यैव सिद्धेः। फलञ्च विव्यथे इत्यादौ हलादिशेषात्पूर्वमेव सम्प्र-सारणे रूपसिद्धिः। एवम्विव्याधेत्यपि।

क्वचिद् विकृतिः प्रकृतिं गृह्णाति—

प्रकृतिर्विकृतिर्वापि यत्रास्तितत्त्वन्द्वयोरपि।
गृह्णाति प्रकृतेस्संख्याम्वाचको विकृतेर्न्नतु॥

एको वृक्षः पञ्च नौका भवति। "निसमुपविभ्यो ह्वः" इत्यत्र ह्वो ग्रहणम् "उदोचाम्माङो व्यतीहारे" इति वत्। ह्वे इत्यस्यैवानुकरणम्। एवञ्चेयम्परि-भाषा निष्फला।

औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम्—

फलञ्च "दादेर्धातोर्घः" इत्यत्र नामधातोर्दामिलिडित्यादेर्न ग्रहणम्। इयमपि निष्फला "आदेच उपदेशे" इत्यादिषु उपदेशग्रहणसामर्थ्यात्।

पूर्वत्राऽसिद्धीये न स्थानिवत्—

अत्र "नाग्लोपिशास्वृदितामि"तिसूत्रे अग्लोपिप्रतिषेधो ज्ञापकः। सच मालामाख्यत् अममालादित्यत्र ह्रस्वत्वारणाय, यदि स्थानिवद्भावस्स्यात्तर्हि अनुपधात्वा-दाकारस्य ह्रस्वाऽप्राप्तौ व्यर्थस्स्यात्। भाष्ये ज्ञापककथनाद् वार्त्तिकत्वेऽपि परि-भाषेति व्यवहारः। फलञ्च यायष्टिः पापक्तिः अल्लोपणिलोपयोः स्थानिवत्त्वाभावात् कुत्त्वषत्वे सिद्ध्यतः।

तस्य दोषस्संयोगादिलोपलत्वणत्वेषु—

तक्षयतेः क्विपि तक् निगाल्यते माषवपनी इत्यादि फलम्।

शितपा शपानुबन्धेन निर्दिष्टं यद्गणेन च।
यत्रैकाज्ग्रहणञ्चैव पञ्चैतानि न यङ्लुकि॥

हन्ति याति वातीत्यादयः १ "भरज्ञपिसनाम्" २ "शीङस्सार्वधातुके गुणः" अनुदात्तङित" इति च ३ "दिवादिभ्यश्श्यन्" ४ "एकाच उपदेशेऽनुदात्तात्" ए-तानि पञ्च कार्याणि यङ्लुकि न भवन्तीत्यर्थः। इयम्पूर्ववैयाकरणैः पठिता सूत्र

इत्पाठानुरोधेन भाष्याऽविरुद्धा च एकदेशानुमतिद्वारैकाज्ग्रहणेनेयं ज्ञाप्यते । अत्र वधिव्यावृत्त्यर्थमेकाज्ग्रहणमिति शेखरोऽनुपपन्नः प्रमाणरहितश्च । तथाहि "एकाच" इति सूत्रभाष्यम् । वध इट्प्रतिषेधः प्राप्नोति वधिषीष्टेति नैष दोषः, आद्युदात्तनिपातनं करिष्यते । अत्र कैयटः आद्युदात्तनिपातनसामर्थ्यात् हन्त्युपदेशविषयाऽनुदात्तत्वाश्रय इट्प्रतिषेधो न भवति नह्येतदाद्युत्तनिपातनम्प्रयोगसमवायि । सतिशिष्टेन प्रत्ययस्वरेण वाधात् इति विवेचयन्तु ।

एकाज्ग्रहणमुत्तरार्थमित्यप्ययुक्ततरम् ? जागरितः जागरितवानिति "श्र्युकः किती"ति । जागरितवानित्यत्र "जाग्रोऽविची"तिगुणरपरत्वयोरुगन्तत्वाभावान्निषेधाऽप्रवृत्तेः । नचात्रोपदेशाधिकारः ? फलाऽभावात्प्रयोजनाऽभावाच्च ।

नच स्तीर्णमित्यादाविण्निषेधः प्रयोजनमिति वाच्यम् ? "इट् सनि वे"तिविकल्पविधानात् "यस्य विभाषे"तीट्प्रतिषेधाश्रयणात् । उत्तरार्थमेकाज्ग्रहणञ्च कर्त्तव्यमिति कैयटः । यत्रैकाज्ग्रहणम् यङ्लुगन्ते वेभिदितेति । अङ्गत्वम्विशिष्टस्य धातुत्वन्तु उत्तरखण्डस्येत्यपि सर्वथाऽयुक्ततरमेव । सन्प्रत्ययस्य धातोरेव विधानम् पूर्वभागस्य धातुत्वाऽभावे चिभित्स इत्यस्य यस्मात्प्रत्ययविधिस्तदादित्वाऽभावेनाङ्गसंज्ञाया अभावप्रसङ्गात् । अङ्गसंज्ञा पदसंज्ञा च एकाज्द्विर्वचनन्यायेन समुदाये प्रवर्त्तते । भाष्यानुक्तत्वेनेयम्पूर्ववैयाकरणसिद्धान्तविरुद्धेति नाभिप्रायः । इयमनित्या "गुणो यङ्लुको"रिति ज्ञापकात् । एकाज्व्यपदिष्टं हि द्वित्वं यदि यङ्लुकि न प्रवर्तते तर्हि अभ्यासाऽभावात् अभ्यासस्य विधीयमानो गुणो न स्यात् । अत एव जङ्घनीतीत्यत्र "अभ्यासाच्चे"ति "हन्ते"रितिश्तिपा निर्देशेन कुत्वम्भवत्येव । अन्यान्यपि परिभाषाफलान्यूह्यानि । तथाचेयम्परिभाषा भाष्यानुक्ताऽपि लक्ष्यसंस्काराय पूर्ववैयाकरणाभिमतत्वेन कर्त्तव्येति शेखरप्रकारः कथमिति विचारयन्तु सूक्ष्मदर्शिनो वैयाकरणम्मन्या इति दिक् ।

इति समाप्तं शास्त्रार्थकलाप्रकरणम् ।

## समाप्तश्च

श्रीकाशीप्रयागायोध्यामध्यभूमिजन्मसरयूपारीणशुक्लघटिकाशतकशतावधानाशुकविवैयाकरणशिरोमण्याद्यनेकपदवीककौमुदीकल्पलतिकाद्यनेकग्रन्थकारैः श्रीवेणीमाधवशास्त्रिभिविनिर्मितः परिष्कारदर्पणः ।

शङ्करोतु हि शङ्करः

# ग्रन्थकृदन्वयपरिचयः

सृष्टिसमये ब्रह्माद्युत्पत्त्यनन्तरं गर्गगौतमशाण्डिल्यादयोऽग्निकल्पा महर्षयस्सम्बभूवुः। महीयांसश्च ते अग्निहोत्रादिवैदिककर्मानुष्ठानाय परमपवित्रं सरयूतटमागत्य यज्ञभूमिम् प्रकल्प्य स्थितास्तत्रैव वर्णाश्रममर्य्यादाम् पालयामासुः। तत्रास्माकं पूर्वजानां गर्गवंशे जनिः, गोरक्षपुरप्रान्तान्तर्वर्त्तिमझवली (मझौली) ति प्रसिद्धे विश्वसेन (बिसेन) क्षत्रियपालिते तद्गुरुत्वेन तस्थुः पुराणपुरुषाः। कदाचित्तीर्थयात्रां कुर्वन्तस्ते महानुभावाः काशीप्रयागायोध्याभिधतीर्थत्रयमध्यभुवं जौनपुरबदलापुरामध्यं मार्गस्थं सक्षत्रियाः प्रापुः। तत्र विशेषतो धर्मविपर्य्ययन्दुष्टजनजन्यं विलोक्य साधं विद्यमानं क्षत्रियमाज्ञाप्य कारयित्वा च दुष्टप्रशमं प्रातराराध्याः विजयदत्तशुक्लाः पुत्रचतुष्टयसम्पन्नाः तत्रैव तपस्समाचारमारभिरे। क्षत्रियकुलललामभूताः शिष्यास्तेजबहादुरसिंहाभिधाश्च तत एवारभ्य तत्रत्यप्रजास्सम्पालयामासुः। प्रातःस्मरणीयपादानान्तेषाञ्चतुर्णामेके सर्वतन्त्रस्वतन्त्रा विख्यातभूतलप्रतिष्ठाः षड्दर्शनालङ्कृताः स्वनामधन्याः श्रीटीकारामशुक्लशास्त्रिणः समजनिषत। ते च महानुभावाः शास्त्राध्ययनाध्यापनानन्तरं गार्हस्थ्यं सम्पाद्य स्वज्येष्ठसुताय अधीतशब्दवेदान्तज्यौतिषशास्त्राय देवदत्तनामकाय समर्प्य सम्पत्तिजातम् परमत्यागमाजग्मुः। मान्याश्चामी देवदत्तशुक्लाः यावज्जीवं निर्जीविकमध्यापनञ्चक्रुः। तेषाम् पुत्राः परमादरणीयचरणाः शब्दतर्कशुद्धाद्वैतादिकृतविशिष्टश्रमाः परममतयोऽनेकग्रन्थकृतःसाधीयांसः कीर्तिवर्णशुक्लाः गायत्र्यादिमहानुष्ठानेन तीर्थयात्रादिना साङ्गोपाङ्गं चातुराश्रम्यम्पालयाञ्चक्रुः। तदीयकनिष्ठपुत्रा घटिकाशतकशतावधानाशुकविवैयाकरणशिरोमण्याद्यनेकपदवीभूतः श्रीवेणीमाधवशास्त्रिणोऽस्मज्जनकाःशैशवे स्वमण्डलान्तर्गतिसिरथौलाग्रामस्थेभ्यः वैयाकरणकेसरिश्रीदुर्गादत्तशास्त्रिमहोदयेभ्योऽधीत्य कौमुदीशेखरमनोरमान्यायसिद्धान्तमुक्तावल्यादिग्रन्थान् काशीमागत्य विश्वप्रसिद्धेभ्यो महामहोपाध्यायश्रीजयदेवमिश्रशास्त्रिचरणेभ्योऽधीत्य सपरिष्कृति शब्दतर्कवेदान्तादिशास्त्रं द्वादशवर्षाध्यापनानन्तरं ग्रन्थनिर्माणे प्रवृत्ताः १ हिंसाखण्डनकौमुदी २ कौमुदीकल्पलतिका ३ वैयाकरणभूषणसार (टीका) ४ शक्तिवाद (टीका) ५ व्युत्पत्तिवाद (टीका) ६ परिष्कारदर्पणादिग्रन्थरत्नान्यरचयन्। तच्चरणानुरागाद्धव्यसाधारणशब्दव्युत्पत्तिना तदीयमध्यमपुत्रेण मया कौमुदीकल्पलतिका तदर्थमपि ग्रन्थो यथामति टिप्पणीभिः परिष्कृत्य संशोध्य च भवतां सेवासु निवेद्यते। आशास्यते चाकिञ्चित्करोऽपि किञ्चित्करोऽयम् भवतामनुरागाद् भविष्यतीति।

विजयादशमी
सं० १९९१ वैक्रमे

प्रार्थयते—विद्वज्जनचरणसेवकः—

**श्री राजनारायण शुक्लः।**

काशीस्थः